Chapter XIX speaks of *Shatkarma* or six magic rituals, *viz.*, *Shānti*, *Vashya*, *Stambhana*, *Vidvesha*, *Uchchātana*, and *Mārana*. The time for doing all these rites and proper and appropriate *Asanas* and *Mudrās* are also given here. This chapter is followed by another in Chattopādhyāya's book which is absent from the manuscript on which the present publication is based. The text is very corrupt and does not seem to form a part of the *Kaulāvalī*. The subjects dealt with there are *Parapura-praveshana*, and *Anjanasiddhi*. The first means acquisition of power by which a man is able to enter into a dead body and revive it by his own life and *Anjanasiddhi* means the acquisition of power whereby a person is able to see through any solid substance. Both these matters have been dealt with in the *Tantrarāja* fully. As given in Chattopādhyāya's book the Mantras are imperfect, the essential details are wanting and a good many of the verses are imperfect as they stand. This chapter is, therefore, left out as apart from its being redundant it is full of defects and does not contain any useful particulars.

Chapter XX deals with *Lūkīvidyā* and *Khadga Siddhi*, *Phetkārinī Siddhi* and *Khecharī Siddhi*. The first means power whereby the Sādhaka can disappear or conceal himself at pleasure, the second, the power whereby the Sādhaka can arrest the sword or attack of the enemy, the third, whereby he can control the Devī in her jackal form and the fourth whereby he is able to move across the firmament. The chapter also shortly treats of the worship of Kālī under the heading *Kālikākalpa*.

Chapter XXI speaks of the ways of the *Avadhūta*. It describes how they should sit and an account is given as to how they raise *Kundalinī* to the *Sahasrāra*, how they control the Airs in their body and so forth. At the end of this chapter a number of verses have been quoted from the *Tripurāsārasamuchchaya*. They are very much like the verses in *Shatchakranirūpana* and in fact some of the verses seem to have been adopted by Punyānanda, the author of the latter book with some modifications, from the *Tipurāsārasamuchchaya*. The author of this book is Nāgabhatta and it is said that Nāgabhatta is the same person as Durgasingha, the author of *Kalāpavyākarana*. In the *Tripurāsārasamuchchaya* as also in this chapter of the *Kaulāvalī* the Shaktis, *Dākinī* and others are placed in a different order from that in

the *Shatchakranirūpana*. They are, also described, as in the *Saubhāgyaratnākara*, as presiding Divinities of the different *Dhātus* such as *Tvak*, *Asthi* and so on.

After the verses quoted from the *Tripurāsārasamuchchaya* the text goes on to state that by repeated practice of the excellent Yoni Mudrā the Sādhaka is able to cure the defects of all Mantras and he attains *Siddhi* in whatever he seeks and ultimately attains Liberation. Even the ordinary letters of the alphabet become effective as Mantra when uttered by him. No sin can touch him. By Yoni Mudrā he is able to gain mastery over his breath, he can cheat Death ( *Kālabanchanam* ). He reaches a state of Yoga by this practice.

The text proceeds to say that ordinarily the breath of a human being goes out a distance of 8 to 12 fingers' breadth from his nostril. When fasting the distance is reduced by half the distance. During coition the distance becomes trebled and after food it is doubled. If the out-going breath exceeds this distance then it means that the man will die. The Sādhaka should always, therefore, be careful to regulate his breath.

When the *Avadhūta* goes begging for his food, he asks for alms so that he could offer same to *Kundalī*. He is always in a blissful state, conscious of his oneness with Bhairava and Shiva. It is very difficult for any one to know his true nature. When alone he is like one mad, dumb, or paralysed and when in the society of men he, sometimes behaves like a good man, sometimes like a wicked one; and on occasions he behaves like a demon ( *Kvachit shishtah kvachit bhrashah kvachit bhūtapishāchavat* ). But the Yogī is always pure whatever he may do and by his touch everything becomes pure. Detached from his body immersed in *Jnāna* ( *Jnānapara* ) the Yogī plays with his senses which are ( dangerous for others ) like snakes ( *Indriyapannaga* ). Wherever he may be, when he sees any flowers, scents, articles of food and the like he mentally offers same to Mahādevī. There is for him no other worship, no vows and the like, as he is conscious that he is always complete in himself ( *Pūrna* ), that he is Bhairava and Nityānanda, the imperishable "I" ( *Aham avyayah* ), free from all duality (*Niranjana*), changeless (*Nirvikāra*), who knows the meaning of the Shāstra and Mantra and who conscious of his greatness and that no one can excel him, is ever in a blissful mood and ever does good

to all. The chapter ends with a verse which literally means :—"On the left ( *Vāma* ) is the woman skilled in the art of dalliance and on the right ( *Dakshina* ), the drinking cup, in the front is hog's flesh cooked hot with chillies. On the shoulder is the well-tuned *Vīnā* with its melodious music. *Kuladharma* which contains the teachings of the great Guru is deep of meaning and difficult of attainment even by Yogīs." The esoteric meaning of the first part of this, however, is said to be that below ( *Vāma* ) in the *Mūlādhāra* is the woman *Kundalinī* and above ( *Dakshina* ) is the receptacle wherefrom flows the Nectar produced by the union of *Kundalinī* with Para-Shiva. The hot hog's flesh is human existence, hot with its passions and prejudices. It is to be noted that here the distinction is emphasized between the Self ( *Ātmā* ) and its Body ( *Deha* ).

A. A. S.

---

## भ्रम संशोधनम् ।

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ३ | प्रवाधिनी | प्रवाधिनी |
| १० | २१ | जीवं | जीवं।तं |
| १३ | २४ | जप्ता | जप्त्वा |
| १४ | १७ | हृच्छ्रिचो | हृच्छ्रिरो |
| १५ | १२ | निवन्धन | निरिन्धन |
| २३ | ६ | अत्यार्थं | आत्मार्थं |
| २५ | १३ | शाभनां | शोभनां |
| २९ | ५ | भागमके | भागमेक |
| ३० | १६ | तानि | त्रीणि |
| ४३ | १५ | कराम्बुजगलं | 'कराम्बुजगतं |
| ४५ | ६ | कलिलं | कलितं |
| ४७ | ११ | ध्वान्त | ध्मात |
| ४८ | २६ | काररेत् | कारयेत् |
| ५२ | ६ | विन्ध्याद | विन्द्याद |
| ५३ | १'१ | भाम | भौम |
| ५५ | २१ | शीलस्तु | शीलेषु |
| ५७ | १२ | जतुं | जेतुं |
| ६४ | ३० | कलं | कुलं |
| ६६ | १४ | कर्य्यात् | कुर्य्यात् |
| ७७ | ५ | ुरश्चर्य्या | पुरश्चर्य्या |
| ७७ | १३ | कालयुगे | कलियुगे |
| ८० | १३ | खनेद्धारौ | खननोद्धारौ |
| ८० | १६ | तन्तयाद | तनुयाद |
| ८४ | १० | वीरो | मूको |
| ८८ | २४ | बलरूपेण | बलिरूपेण |
| ८९ | २१ | दशभिर्वंष | दशभिर्वर्षैः |
| ८९ | २८. | पला | पणा |

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१ | २२ | सर्यं | सर्व्वं |
| ६७ | १ | क्षलशा | क्लेशा |
| १०३ | १८ | तद्गोले | तद्गाले |
| १०३ | २३ | सकुलाज्ञां | स्वकुलाज्ञां |
| १०६ | ८ | वन्व | वन्ध |
| ११० | ६ | व्यक्तं | व्यक्तात् |
| ११२ | ६ | मस्तकं | मञ्चकं |
| ११३ | ५ | क्षमः | क्षुभः |
| ११४ | १ | मनीषिणिः | मानषिणः |
| १२० | २७ | अक्षब्धं | अक्षब्धं |
| १२३ | ११ | वणः | वर्णः |

# सूचीपत्रम् ।

ॐ नमः परमदेवतायै ॥

# कौलावलीनिर्णयः ।

## प्रथम उल्लासः

नत्वा श्रीगुरुपादपद्मयुगलं सिद्धैः सदा सेवितं
शाक्तानां परिभावमोक्षजनकं कौलावलीनिर्णयम् ।
वक्ष्येऽहं कुलवर्धनं सुकृतिभिः सेव्यं सदा कौलिकै
र्भावैरेव मनोहरैश्च चरणाब्जैकप्रसादालयम् ॥
वाञ्छाकल्पतरुं तनोति शिवयोर्वाक्यानुसारार्थतो
ज्ञानानन्दगिरिर्महेशचरणाब्जैकप्रसादालयः ॥

यस्याः प्रसादतो लेभे शास्त्रार्थः तत्त्वनिर्णयम् । तां नमामि महादेवीं वाणीं वाग्विभवप्रदाम् ॥
संवीक्ष्य यामलं रुद्रब्रह्मविष्णुकसंज्ञकम् । यामलं शक्तिसंज्ञञ्च भावचूड़ामणिन्तथा ॥
तन्त्रचूड़ामणिञ्चैव कुलचूड़ामणिन्तथा । कुलसारं कुलोड्डीशं कुलामृतकुलार्णवम् ॥
कालिकाकुलसर्वस्वं कुलसद्भावमेव च । कालीतन्त्रकुलानन्दं कुलचक्रन्तथैव च ॥
कालिकल्पं महाकौलं कुमारीतन्त्रमेव च । समयाख्यं कालीतन्त्रं फेत्कारीं फेरवीन्तथा ॥
श्रीक्रमं योगिनीतन्त्रं श्रीहंसपरमेश्वरम् । स्वतन्त्रं तन्त्रराजञ्च ज्ञानमालां ततः परम् ॥
वायवीं हंसतन्त्रञ्च ताराकल्पञ्च मालिनीम् । मन्त्रनिर्णयतन्त्रञ्च योगिनीहृदयन्तथा ॥
कुलार्णवञ्च गान्धर्वमुड्डीयानञ्च तोड़लम् । शिवशासनतन्त्रञ्च मन्दरं प्लावनीन्तथा ॥
वीरावलिञ्च वाराहीं वीरतन्त्रञ्च कुब्जिकाम् । नीलतन्त्रं मत्स्यसूक्तं ललितातन्त्रमेव च ॥
शम्भुनिर्णयतन्त्रञ्च वामकेश्वरतन्त्रकम् । वटुकसंहिताञ्चैव तारार्णवं ततः परम् ॥
गुप्तार्णवं चण्डरोषं मायां नीलमणिन्तथा । समयाख्यं तन्त्रसारं ततो मन्त्रविमर्शिनीम् ॥
ज्ञानसारं योगवतीं भैरवीतन्त्रमेव च । भैरवाख्यं महातन्त्रं सिद्धसारस्वतन्ततः ॥
त्रिपुरार्णवतन्त्रञ्च उत्तरं तन्त्रमेव च । छिन्नातन्त्रं वातुलञ्च दक्षिणामूर्त्तिसंहिताम् ॥
नयात्तरं ह्येकवीरां दृष्ट्वा विविधसंग्रहान् । गुरूणाञ्च मतं ज्ञात्वा सारात्सारतरं महत् ॥
द्वैतज्ञानविहीनानां मनोऽभीष्टप्रदायकम् । अतियत्नेन गोप्तव्यं मातृमैथुनवत् सदा ॥
यस्मै कस्मै न दातव्यं न दुष्टाय कथञ्चन । न दद्यात् परशिष्याय चम्बकाय तथैव च ॥
सर्वथा गोपयेदेनं यदीच्छेच्छुभमात्मनः । प्रकृताचारयुक्ताय गुरुसेवापराय च ॥

कुलीनाय महोच्चाय देवीभक्तपराय च । शिष्याय भक्तियुक्ताय साधकाय प्रदापयेत् ॥
विना परीक्ष्य यो दद्यात् यस्मै कस्मै कथञ्चन । स भक्ष्यो योगिनीवृन्दै र्मृते च नरकं व्रजेत् ॥
तस्माच्च साधकश्रेष्ठो गोपयेत् सर्वथा पुनः । पुस्तकं वीक्ष्य यो मूढो न लब्धो गुरुवक्त्रतः ॥
कुर्याल्लोभवशेनैव सोऽपि नश्यति निश्चितम् । तस्य कर्माणि सर्वाणि नरकाय भवन्ति हि ॥
योगिनीनां भवेद्भक्ष्यो नारकी ब्रह्मघातकः । तस्माज्ज्ञात्वा गुरोर्वक्त्रात् साधने यत्नमाचरेत् ॥
अस्ति देवः परब्रह्मस्वरूपो निष्कलः शिवः । सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोदयः ॥
स्वयंज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥
अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । सर्वेप्युपाधिसंभिन्नास्ते कर्मभिरनादिभिः ॥
चतुर्विधशरीराणि धृत्वा धृत्वा सहस्रशः । सुकृतैर्मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥
चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् । न मानुष्यं विनाऽन्यत्र तत्त्वज्ञानन्तु लभ्यते ॥
तत्र जन्मसहस्रेषु जन्मैकमपि भाग्यतः । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् । यस्तारयति नात्मानं तस्मात् पापतरोऽत्र कः ॥
ततश्चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥
विना देहेन कस्यापि पुरुषार्थो न विद्यते । तस्माद् देहधनं रक्षन् पुण्यकर्माणि साधयेत् ॥
तावत् कर्माणि कुर्वीत यावज्ज्ञानं न जायते । ज्ञानिनोऽज्ञानिनो वापि यावद् देहस्य रक्षणम् ॥
तावद्वर्णसमाचारः कर्त्तव्यः कर्ममुक्तये । कर्मणान्मोलिते ज्ञाने ज्ञानेन शिवतां व्रजेत् ॥
कुर्यादनित्यकर्माणि नित्यकर्माणि वा चरेत् । सर्वकर्माणि सन्त्यक्तुं न शक्यं देहधारिणा ॥
स्वकार्येषु प्रवर्तन्ते करणानीति चिन्तयन् । अहम्भावमपास्यैवं यः कुर्यात् स न लिप्यते ॥
त्यजेत् कर्मफलं यो वा स त्यागीत्यभिधीयते । क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनन्तरम् ॥
न च स्पृशन्ति तत्त्वज्ञं जलं पद्मदलं यथा । तत्त्वनिष्ठस्य कर्माणि पुण्यापुण्यानि संक्षयम् ॥
प्रयान्ति नैव नरकं तत्त्वनिष्ठाः कदाचन । उत्पन्नसहजानन्दतत्त्वज्ञानरतः सदा ॥
सर्वसङ्कल्पसन्त्यक्तः स विद्वान् कर्म सन्त्यजेत् । वृथैव यैः परित्यक्तं कर्मकाण्डमपण्डितैः ॥
पाषण्डाः पण्डितम्मन्यास्ते यान्ति नरकं किल । फलं प्राप्य यथा वृक्षः पुष्पं त्यजति निस्पृहः ॥
तत्त्वं प्राप्य तथा योगी त्यजेत् कर्मपरिग्रहम् । अश्वमेधशतेनापि ब्रह्महत्याशतेन च ॥
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् । पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्ततः ॥
जिह्वोपस्थपरित्यागी कर्मणा किं करिष्यति । आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते ॥
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् । अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ॥
परं तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् । द्वे पदे बन्धमोक्षाय ममेति निर्ममेति च ॥
ममेति बध्यते जन्तुर्विमुक्तिर्निर्ममेति च । विद्याऽविद्याद्वयोर्योगात् पक्षद्वयमुदीरितम् ॥
तत् कर्म यच्च बन्धाय साऽविद्या परिकीर्त्तिता । यन्न बन्धाय तत् कर्म सा विद्या परिकीर्त्तिता ॥

यावत् सङ्कल्पकर्मास्ति तावदेव हि बन्धनम् । यावत्तदेव नैवास्ति तावदेव हि मोक्षणम् ॥
जपहोमार्चनं तीर्थं वेदशास्त्रागमादिकम् । तावदेव हि सर्वञ्च यावत्तत्त्वं न विन्दति ॥
अतः प्रयत्नतो धीरः सर्वावस्थासु सर्वदा । तत्त्वनिष्ठो भवेच्चैव यदीच्छेन्मोक्षमात्मनः ॥
तद्धारणमहं वक्ष्ये क्षिप्रं येन प्रजायते । यथाविधि गुरोर्वक्त्राद्विद्यां संगृह्य साधनम् ॥
नित्यं नैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः । अन्यथा न भजेदित्थं करोत्यापत्परम्परा ॥
इति ज्ञात्वा महाप्राज्ञः क्रमेण समुपाचरेत् । प्रातरुत्थाय शिरसि सहस्रदलपङ्कजे ॥
तरुणादित्यकिञ्जल्कविधोर्मण्डलसंयुते । ध्यायेन्निजगुरुं धीरो रजताचलसन्निभम् ॥
वीरासनसमासीनं शुक्लाभरणभूषितम् । शुक्लमाल्याम्बरधरं वरदाभयपाणिकम् ॥
वामोरुशक्तिसहितं कारुण्येनावलोकितम् । प्रियया सव्यहस्तेन धृतचारुकलेवरम् ॥
वामेनोत्पलधारिण्या रक्ताभरणभूषया । ज्ञानानन्दसमायुक्तं स्मरेत्तन्नामपूर्वकम् ॥
मानसैरुपचारैस्तु संपूज्य कल्पयेत् सुधीः । गन्धं भूम्यात्मकं दद्याद्भावपुष्पं ततः परम् ॥
धूपं वाय्वात्मकं देयं तेजसा दीपमेव च । नैवेद्यममृतं दद्यात् पानीयं वरुणात्मकम्
अम्बरं मुकुटं दद्याद् वसनं च समन्ततः । चामरं पादुके छत्रं तथाऽलङ्कारभूषणम् ॥
तत्तन्मुद्राविधानेन संपूज्याऽथ गुरुं यजेत् । दर्शयित्वा योनिमुद्रां गुरुमन्त्रं जपेत्ततः ॥
हसौः पदं समालिख्य सहक्षमलवरानिलान् । वह्नियुक्तांस्त्रिधा लिख्य आद्यदीर्घत्रयान्वितान् ॥
बिन्दुनादकलायुक्तान् श्रोपरान्ते च पावकम् । अथाराध्यपदं चैव सर्वमूर्ध्वपदन्ततः ॥
नाथ सर्वगुरुप्रान्ते गुरुः स्वयं ततो गुरुः । श्रीगुरुनाथशब्दान्ते सहक्षमलवरानिलान् ॥
वह्निदीर्घप्रतियुतान् नादबिन्दुकलान्वितान् । पिण्डीकृतं लिखं त्वं चतुर्थञ्च ततो लिखेत् ॥
तृतीयं पूर्ववल्लेख्यं द्वितीयञ्च तथैव च । ततः श्रीशम्भुगुर्वन्ते गुराद्यं समालिखेत् ॥
आद्यकूटं चतुर्थञ्च पुनराद्यं तृतीयकम् । चत्वारिंशन्मार्गवर्णैः खण्डितोऽयं गुरोर्मनुः ॥
यथाशक्तिजपं कुर्य्यादथवा वाग्भवं जपेत् । दक्षकर्णयुतो गौरो वह्निरुद्रेण भूषितः ॥
वर्णत्रयात्मको मन्त्रश्चतुर्वर्गफलप्रदः । गकारः सिद्धिदः प्रोक्तो रेफः पापस्य हारकः ॥
उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः परः । गुरोर्वामकरे तत्तु समर्प्याथ स्तुतिं पठेत् ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
विश्वात्मकः परः शम्भुर्विश्वोत्तीर्णोऽस्म्यहं दृढम् । इति यस्याज्ञया तस्मात्तस्य श्रीपादुकास्मृतिः ॥
सहस्रारे पद्मे विगतशशकभ्रान्तरगतं सदा देवैर्वन्द्यं भवभयविनाशैककरणम् ।
वराभी पाणिभ्यां प्रकटितसमन्दस्मितमुखं नमामीद्धगूरूपं परमगुरुरूपं सकरुणम् ॥

शान्तं शुक्लकलेवरं त्रिनयनं कान्ताङ्कभूरं शिवं
वाञ्छाभीतिकरं प्रचण्डतिमिराज्ञानप्रकाशं रविम् ।

नित्यं नौमि रविं तथाब्धितरणे तं कर्णधारं गुरुं
यस्य श्रीपदपङ्कजोद्भवसुधा सिद्धैः सदा पीयते ॥
सदा विघोर्मण्डलमध्यसंस्थं नमामि नित्यं गुरुपादपद्मम् । ८०
प्रसादतो यस्य मया प्रलब्धं सवासनाज्ञानविनाशबीजम् ॥
पद्मोद्भवे समकलापतयोऽपि नित्यं यस्याङ्घ्रिपद्ममलं परिभावयन्ति ।
कारुण्यवारिधिरशेषगुणैकराशिः सोऽयं गुरुः शिरसि शुक्लसरोजमध्ये ॥
प्रबद्धानां पाशैः सकलगुणमायामयरसै निमग्नानां नित्यं भवजलनिधेरन्तरगतः ।
कृपालेशो वन्धं परिहरति यस्याङ्घ्रितरगः प्रवन्दे सानन्दं तमपि गुरुरूपं सकरुणम् ॥ ८५
कवित्वं पाण्डित्यं त्रिभुवनपतित्वं न हि कदा न वा स्वर्गसिद्धिं न सुरवरसाम्यञ्च नियतम् ।
न वाञ्छामो मोक्षं पुरहरपदं नैव शिवतां यदि स्यान्मे तो मे निरवधि गुरोः पादकमल ॥
स्तवेनानेन संस्तुत्य गुरोराज्ञां लभेत्ततः । ध्यायेत् कुण्डलिनीं शक्तिं मूलाधारनिवासिनीम् ॥
निजेष्टदेवतारूपां विषतन्तुतनीयसीम् । सुप्ताहिसदृशाकारां सार्धत्रिवलयान्विताम् ॥
कोटिसौदामिनीभासां स्वयम्भुलिङ्गवेष्टिनीम् । समुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः ॥ ९०
भेदयित्वा च षट्चक्रं सहस्रारस्थितेश्वरे । स्थापयित्वा च तस्योर्ध्वं ध्यायेत् कुलगुरून् क्रमात् ॥
प्रह्लादानन्दनाथञ्च सनकानन्दनाथकम् । कुमारानन्दनाथञ्च वशिष्ठानन्दनाथकम् ॥
क्रोधानन्दसुखानन्दौ ज्ञानानन्दं ततः परम् । बोधानन्दमथाभ्यर्च्य क्रमेणानेन साधकः ॥
परामृतरसोल्लासहृदयान् घूर्णलोचनान् । परालिङ्गनसम्भिन्नचूर्णिताशेषतामसान् ॥
कुलशिष्यैः परिवृतान् सुखान्तःकरणोद्यतान् । वराभयकराशेषकुलतत्त्वार्थवेदिनः ॥ ९५
सशक्तिं सकुलञ्चैव कथितञ्च सुखावहम् । एवं कुलगुरून् नत्वाऽमृतवृष्टिं विधाय च ॥
तर्पयित्वा च तां देवीं पुनर्मूले समानयेत् । तस्याः प्रभासमूहैश्च व्याप्तं देहं विभावयेत् ॥
अहं देवी न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् । सच्चिदानन्दरूपोऽहमित्यात्मानं विभावयेत् ॥
बहिर्गत्वा यदा पश्येत् कुलवृक्षं सुसाधकः । नमस्कुर्यात् प्रयत्नेन कुलं कुलपतिन्तथा ॥
अशोकः केशरः कर्णिकारश्चूतस्तिलस्तथा । नमेरुश्च पियालश्च सिन्धुवारकदम्बकौ ॥ १००
मरुवकश्चम्पकशाली कुलवृक्षाश्च द्वादश । अथवा कुलवृक्षांश्च कथयामि सुसिद्धये ॥
श्लेष्मातककरञ्जानि निम्बाश्वत्थकदम्बकाः । बिल्वो वटोदुम्बरश्च चिञ्चेति दशमी स्मृता ॥
तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा । न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ॥
दृष्ट्वा भक्त्या नमस्कुर्यात् छेदयेन्न कदाचन । कामबीजं कामदेवं सर्वान्ते जनमालिखेत् ॥
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये । दन्तादिकं विशुध्याथ स्वकल्पोक्तं समाचरेत् ॥ १०५
प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् । तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये प्रथम उल्लासः ॥ १ ॥

## द्वितीय उल्लासः

अथ स्नानं प्रवक्ष्यामि शाक्तानां सिद्धिहेतवे । यथाविधि जलं प्राप्य आत्मानं देवतालयम् ॥
विचिन्त्य प्रणमेद्वीरो वरुणं वारिदैवतम् । उन्मज्य तत उत्थाय कुशदर्भं विधारयेत् ॥
अशून्यौ च करौ कुर्य्यात् सुवर्ण रजतैः कुशैः । तत्र शाक्तैः स्वयं ग्राह्यं न च वन्याः कुशाः कुशाः ॥
अनामयोर्भवेत् स्वर्णं तर्जन्यो रजतन्तथा । एष एव भवेद्दर्भो न दर्भो वनसम्भवः ॥
विनैव दूर्वया देव्याः पूजा नास्ति कदाचन । तस्माद्दूर्वा ग्रहीतव्या सर्वपुष्पमयी यतः ॥
हस्ते दूर्वाङ्कुरं कृत्वा सर्वकर्म समाचरेत् । आचामेदात्मतत्त्वाद्यैः प्रणवाद्यैः स्वधान्तिकैः ॥
मन्त्रैस्त्रिधा तथा वक्त्र नासाक्षिश्रोत्रनाभिहृन् । मस्तकानि स्पृशेन् मन्त्री कुर्याच्छ्रोत्राक्षिबन्धनम् ॥
भूत्वा पूर्वमुखो मन्त्री उत्तराभिमुखोऽपि वा । मूलान्ते चात्मतत्त्वाय विद्यातत्त्वाय तत्परम् ॥
शिवतत्त्वाय च प्रोक्त्वा क्रमेण साधकोत्तमः । स्वाहान्तमद्भिराचामेत् पूर्वोत्तरमुखः सुधीः ॥
कुलपात्रं सदूर्वञ्च सतिलं सजलं ततः । एभिः सङ्कल्प्य वीरेन्द्रः समन्त्रं वारिणि न्यसेत् ॥
सूर्यस्य मण्डलात्तीर्थमावाह्याऽङ्कुशमुद्रया । संजप्य दशधा मूलं तत्तोयं मूर्ध्नि संक्षिपेत् ॥
कुम्भाख्यमुद्रया मूलं स्मरन् साधकपुङ्गवः । अङ्गुलीभिर्मुखं श्रोत्रं नासां नेत्रे च रोधयन् ॥
मूलं स्मरन् त्रिधोन्मज्य गात्राणि परिमार्जयेत् । तिलकं मूलमन्त्रेण शिखाञ्च परिकल्पयेत् ॥
त्रिराचम्य ततो मन्त्री षडङ्गानि न्यसेत्ततः । गृहीत्वा वामहस्ते तु जलं दक्षिणपाणिना ॥
समाच्छाद्य ततो व्योम वायुवह्निस्ततः परम् । क्षौणीवरुणवीजञ्च त्रिवारमभिमन्त्रयेत् ॥
मूलेन सप्तवारन्तु मुद्रया तत्त्वसंज्ञया । स्वमूर्ध्नि च क्षिपेत्तोयं शेषं दक्षे निधाय च ॥
ध्यात्वा तेजोमयं तोयं सव्यनासापुटेन च । तत उत्तोल्य देहस्थं पापं प्रक्षाल्य वामया ॥
प्रोत्सार्य कल्पिते वज्रशिलायां संक्षिपेत् सुधीः । प्रक्षाल्य हस्तयुगलमाचमेत्तदनन्तरम् ॥
मायाप्राणात्मकं मन्त्रं मार्तण्डभैरवाय च । प्रकाशशक्तियुक्ताय अर्घ्यं स्वाहा ततो वदेत् ॥
सूर्यायाऽर्घ्यं विधायाथ शक्तिसन्ध्या प्रकीर्तिता । विभाव्य पुरतो यन्त्रं तत्र देवीं गणान्विताम् ॥
गृहीत्वा गन्धतोयञ्च कुलपात्रं ततः परम् । तर्पयेद्द देवतावक्त्रे विधिवत् साधकोत्तमः ॥
मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् । द्वितीयान्तामहं पश्चात् तर्पयामि नमः पदम् ॥
मूलान्ते तर्पयामीति स्वाहान्तं तर्पणम्भवेत् । गुरुं सपरिवारञ्च आयुधं वाहनन्तथा ॥
शक्तितस्तर्पयित्वा च गायत्रीं शक्तितो जपेत् । ध्यात्वा सावरणां देवीं सूर्यमण्डलवासिनीम् ॥
मूलान्ते उद्यदादित्यवर्तिन्यैस्तदनन्तरम् । शिवचैतन्य तस्यान्ते मय्यै स्वाहेति संस्मरन् ॥
अर्घ्यं दत्त्वा ततस्तस्यै तामानीयांकुशेन च । मुद्रया हृदि संस्थाप्य जलादुत्थाय साधकः ॥
मूलेन कुलवस्त्रे द्वे परिधाय कुलेन च । मोक्षार्थी रक्तवस्त्रेण भोगार्थी श्वेतवाससा ॥
मारणे कृष्णवासस्तु वश्ये रक्तं सदा गृही । उच्चाटने व्याघ्रचर्म वृक्षत्वक् शुभकर्मणि ॥

परिधाय ततो मौनी हृदि मन्त्रं परामृशन्। प्रक्षाल्य हस्तपादौ च पूजास्थानं समाविशेत् ॥
इति स्नानं समुद्दिष्टमधिकारप्रदायकम्। स्नानतर्पणशून्यस्य नाधिकारश्च पूजने ॥ ३०
विविधैरुपचारैश्च भक्तिभावसमन्वितः। विना स्नानेन या पूजा विफला सिद्धिहानिदा ॥
तस्मात् स्नानादिकं कृत्वा रक्तवस्त्रं ततः परम्। एकलिङ्गे श्मशाने च शून्यागारे चतुष्पथे ॥
बिल्वमूले प्रान्तरे वा नद्यां पर्वतमस्तके। उज्जटे निर्जने वापि भूगृहे देवतालये ॥
अश्वत्थसन्निधौ वापि वटमूले त्रिशूलके। हट्टागारे निजागारे पशुदृष्टिविवर्जिते ॥
नृपालमण्डपे वापि गह्वरे वापि यन्त्रिते। निश्छिद्रमण्डपे वापि कर्तव्यं पूजनं सदा ॥ ३५
पूजास्थानं महादेव्याः कथितं पीठमुत्तमम्। पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्षते ॥
तदेकलिङ्गमित्याहुस्तत्र सिद्धिरनुत्तमा। चतुष्पथं विजानीयात् यत्रास्ते चण्डिकाशिला ॥
तत्र यत्नेन गन्तव्यं जप्तव्यं सिद्धिकाङ्क्षिभिः। द्वारदेशे ततो गत्वा पूजयेद्द्वारदेवताः ॥
कारयेत्तत्र वाद्यादिनृत्यगीतन्तथैव च। सिद्धार्थाक्षतदूर्वाभिस्तिलमिश्रैः सुसाधकः ॥
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ४०
वाग्भवाद्यं समुच्चार्य नाराचमुद्रया सुधीः। कुलभूतं समुत्सार्य यागभूमिं ततो विशेत् ॥
कूर्मचक्रं प्रकुर्वीत यथातन्त्रविधानतः। रेखाचतुष्टयं कार्यं इन्द्रवारुणयोगतः ॥
उत्तराद्द याम्यपर्यन्तं नवकोष्ठं यथा भवेत्। इन्द्राग्नियाम्यनैरृत्यप्रतीच्यां पञ्चवर्गकम् ॥
वायुकुबेरशम्भौ च यादिवर्णांश्चतुश्चतुः। लक्षौ क्रमात् समालिख्य साधकः सिद्धिहेतवे ॥
मध्ये कोष्ठे ततः कुर्यात् पूर्ववन्नवकोष्ठकम्। पूर्वादीशानपर्यन्तं षोडशस्वरमालिखेत् ॥ ४५
अकारादिक्रमेणैव युग्मयुग्मप्रभेदतः। क्षेत्राद्यर्णस्तु यत्रास्ते शीर्षं तस्य विनिश्चितम् ॥
दीपस्थानं तदेव स्यात्तत्र सिद्धिरनुत्तमा। निर्धनो जायते पत्सु पार्श्वयोर्व्याधिरेव च ॥
पुच्छे हानिः सदा ज्ञेया दीपस्थानं समाश्रयेत्। कूर्मचक्रं विना यो हि जपहोमं समाचरेत् ॥
तत्सर्वं निष्फलं विन्द्यात् अभिचाराय कल्पते। पञ्चशुद्धिविहीनेन यत्कृतं न च तत् कृतम् ॥
यावन्न कुरुते तत्तु तावद्द देवार्चनं कुतः। पञ्चशुद्धिं विना पूजा अभिचाराय कल्पते ॥ ५०
भूमिशुद्धिरात्मशुद्धिर्द्रव्याणां शोधनन्तथा। मन्त्रशुद्धिर्देवशुद्धिः पञ्चशुद्धिरितीरिता ॥
पञ्चशुद्धिं प्रवक्ष्यामि यथाक्रमविधानतः। सामान्यार्घ्यं ततः कुर्यात् प्रोक्षणार्थं च साधकः ॥
चतुरस्रं ततो वृत्तं त्रिकोणं वामतो लिखेत्। आधारं स्थापयेत्तत्र संपूज्य वह्निमण्डलम् ॥
अस्त्रेण प्रोक्षितं पात्रं स्थापयित्वा च पूजयेत्। सूर्यमण्डलमुच्चार्य हृन्मन्त्रेण प्रपूजयेत् ॥
विलिख्य मण्डलं तोये पूर्ववत् पूजयेत्ततः। इन्दुमण्डलमभ्यर्च्य प्रक्षिपेद्द गन्धपुष्पके ॥ ५५
पूर्ववत्तीर्थमावाह्य षडङ्गानि यजेत्ततः। अग्नीशासुरवायव्यमध्ये दिक्ष्वङ्गपूजनम् ॥
मूलमन्त्रं जपेदष्टौ तज्जलेन प्रसेचयेत्। अस्त्रान्तमूलमुच्चार्य आत्मानं यागभूमिषु ॥
पृथिव्यर्घ्यं ततो दत्त्वा नैरृत्यां साधकोत्तमः। प्रणवं भगवत्येव धरणीं ङे युतां वदेत् ॥

धरणीविधसे स्वाहा अनेनार्घ्यं विधाय च। ब्रह्माणं पूजयित्वा च पुरुषं वास्तुसंज्ञकम्॥
सम्मार्जनानुलेपाद्यैर्दर्पणोदरवत्प्रभम्। वितानं धूपदीपाद्यैः पुष्पमालाऽभिशोभितम्॥ ६०
पञ्चवर्णरजश्चित्रं भूमेः शुद्धिरितीरिता। विलिख्य मण्डलं भूमौ पूर्ववत् साधकाग्रणीः॥
आसनं स्थापयेत्तत्र यथा तन्त्रानुसारतः॥ अथासनं प्रवक्ष्यामि शाक्तानां स्थितिकाम्यया॥
मृदुचूड़कमासीनः अन्येषु कोमलेषु वा। विष्टरे वा समासीनः साधयेत् सिद्धिमुत्तमाम्॥
अर्वाक् षण्मासतो गर्भच्युतमाहुर्मृदुं बुधाः। चूड़ोपनयनैर्हीनं मृदुमच्चूड़कं विदुः॥
निवृत्तचूड़को बालो हीनोपनयनः पुमान्। यो मृतः पञ्चमे वर्षे तमेव कोमलं विदुः॥ ६५
मृद्वासनं विना यो हि पूजयेच्चण्डिकां शिवाम्। तावत् कालं नारकी स्याद् यावदाहूतसंप्लवम्॥
पञ्चाशद्भिः कुशैर्ब्रह्म तदर्धेन तु विष्टरः। कौशेयं भोगदं रक्तकम्बलं सिद्धिदं स्मृतम्॥
वस्त्रं रोगहरं ज्ञेयं मोक्षं श्रीव्याघ्रचर्मणि। ऊर्णा दुःखहरी प्रोक्ता ज्ञानसिद्धिर्मृगाजिने॥
सन्न्यासी ब्रह्मचारी तु विशेषः कृष्णचर्मणि। काष्ठासनं न कुर्वीत यत्र दौर्भाग्यवान् भवेत्॥
अत्युच्चं चातिनीचञ्च भग्नञ्च परिवर्जयेत्। मनोहरं मृदु श्लक्ष्णमासनं परिकीर्तितम्॥ ७०
एषामन्यतमं प्राप्य प्रोक्षयेत्तदनन्तरम्। सामान्यार्घ्यस्य तोयेन पुटाञ्जलिविधानतः॥
मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम्। कूर्मोऽधिदेवता चात्र आसनस्थापनाय च॥
विनियोगः परिज्ञेयोऽप्यभिलप्य पठेत्ततः। पृथ्वि त्वया धृता लोका देविपदं ततो वदेत्॥
त्वं विष्णुना धृता त्वञ्च धारय मां ततः परम्। नित्यं पवित्रं कुरु च आसनञ्च समुच्चरेत्॥
अनेन प्रणवाद्येन तत्र कुशलयं क्षिपेत्। आधारशक्तिं संप्रोच्य ङेयुतं कमलासनम्॥ ७५
हृदन्तं मनुमुच्चार्य मायाद्येन प्रपूजयेत्। आसने संविशेत् पश्चात् वीरासनेन साधकः॥
दक्षगुल्फं हि वामोरौ तदधो वामगुल्फकम्। कुर्यादृजुवपुर्ग्रीवः शरीरं ऋजुवच्चरेत्॥
समग्रीवं विधायाथ प्रोक्तं वीरासनं परम्। कामाख्यादिङ्मुखः सुस्थः प्राङ्मुखो वा प्रपूजयेत्॥
सामान्यार्घ्यस्य तोयेन प्रोक्षयेद्यागभूमिषु। इति ते कथितो ह्यत्र आसनविधिः पूजने॥

स्नातो निच्छिद्रगेहे कुलविमलजलैरर्घ्यपात्रं विधाय
भक्तिश्रद्धान्वितोऽसौ निजकुलकमले यन्त्रराजं विलिख्य।
सिन्दूरैर्घ्यापिताभिः सुकुलयुवतिभिः पूजयित्वा जपेद्य
स्तस्य श्रीर्नेत्रपद्मे विलसति सततं वक्त्रचन्द्रे च वाणी॥

दीक्षिताभिः कुलीनाभिर्युवतीभिः कुलात्मभिः। देवतागुरुभक्ताभिः सञ्चितं यागभूमिषु॥ ८०
नानाविधानि पुष्पाणि गन्धानि विविधानि च। कर्पूरागुरुधूपादिवासितं पटवासितम्॥
ताम्बूलं पेयद्रव्यञ्च धूपदीपादिकञ्च यत्। सर्वालङ्कारभूषाभिर्भूषितः साधकोत्तमः॥
मूलविद्याजप्ततोयैः प्रोक्षयेत् यागवस्तु च। सर्वं स्वदक्षिणे स्थाप्य वामे कुम्भं निवेशयेत्॥
पश्चिमे देवतायाश्च कुलद्रव्याणि धारयेत्। (अथवा) नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः॥

अथवा वामतो दद्यान्नतु पृष्ठे कदाचन । दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः ॥ ८५
वामहस्ततले धूपमग्रतो वा न दक्षिणे । निवेदयेत् पुरोभागे गन्धपुष्पादिभूषणम् ॥
मालिनं भूमिसंस्पृष्टं क्रिमिकेशादिदूषितम् । अङ्गसंस्पृष्टमाघ्रातं त्यजेत् पुष्पं सदा बुधः ॥
नैव पुष्पं द्विधा कृत्वा न दद्यात् कलिकामपि । रक्तमाध्यं श्वेतदूर्वां नीलकण्ठं कुरुण्टकम् ॥
न दद्याच्च महादेव्यै यदीच्छेच्छुभमात्मनः । सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेत् कुशैः ॥
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः । पत्रैर्नं चार्चयेद्द देवीं विल्वपत्रविवर्जितैः ॥ ९०
निर्गन्धैर्नार्चयेत् पुष्पैः सुगन्धैः सर्ववस्तुभिः । जवाबन्धूकमन्दारैः सिन्दूरैश्च महोत्पलैः ॥
संपूजयेच्च निर्गन्धैस्तथा च रक्तचन्दनैः । नन्द्यावर्त्तं तिलपत्रं तथा केशरपत्रकम् ॥
मदनं मरुवकञ्चैव दाड़िमं कुन्दपुष्पकम् । नानोपहारवलिभिर्नानापुष्पैर्मनोहरैः ॥
अपामार्गदलैर्भृङ्गैस्तुलसीवर्जितैः शुभैः । कुलपुष्पेण धूपेन कुलदीपेन तां सुधीः ॥
चण्डिकां पूजयेद्धीमानन्यथा सिद्धिरोधकृत् । न दद्यान्मालतीपुष्पं ताराकालीप्रपूजकः ॥ ९५
उन्मत्तञ्च न दातव्यं साधकेन महात्मना । न पर्युषितदोषोऽस्ति जलजोत्पलचम्पके ॥
अगस्त्यवकुले चैव विल्वगङ्गाजले तथा । निजदेवस्य पुष्पाणि पृथक्पात्रे निधापयेत् ॥
पर्णीभावं न कर्त्तव्यं यदीच्छेच्छुभमात्मनः । नैवेद्यादीनि सर्वाणि तथा जानीहि निश्चितम् ॥
पूजाकाले तु संप्राप्ते वासुदेवं स्मरेत्तु यः । पूजाफलं न चाप्नोति नरकं प्रतिपद्यते ॥
वैष्णवं कुसुमं स्पृष्ट्वा पूजाकाले च सर्वदा । हस्तप्रक्षालनाच्छौचमाचामस्तु तदाचरेत् ॥ १००
शुचिः सावहितो भूत्वा भक्तिश्रद्धासमन्वितः । संस्थाप्य वामभागे तु शक्तिं स्वामिपरायणाम् ॥
रक्तवस्त्रपरीधानां दीक्षितां चारुहासिनीम् । विना शक्त्या तु या पूजा विफला नात्र संशयः ॥
तस्माच्छक्तियुतो वीरो भवेच्च यत्नपूर्व्वकम् । या शक्तिः सा महादेवी हररूपस्तु साधकः ॥
अन्योन्यचिन्तनाच्चैव देवत्वमुपजायते । प्राणं विना यथा देही स्पन्दितुं नैव शक्यते ॥
शक्तिं विनापि पूजायां नाधिकारी भवेत्तदा । विना द्रव्याधिवासेन न जपेन्न स्मरेत् सदा ॥ १०५
विना हेतुकमास्वाद्य क्षोभयुक्तो भवेन्नरः । न पूजां न जपं कुर्यान्न ध्यानं न च चिन्तनम् ॥
तस्माद्भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् । सत्यमेतद्द विजानीयाद्वाक्यं शङ्करभाषितम् ॥
न क्रमच्युतिदोषोऽस्ति नाचारदोषदूषणम् । न भुक्त्वा च न पीत्वा च न स्मरेन्न जपेत्तदा ॥
ये स्मरन्ति नरा मूढा स्तेषां दुःखं पदे पदे । आनन्देन विना यस्तु चण्डिकां परिपूजयेत् ॥
रोगी दुःखी भवेत् सोऽपि मृते च नरकं व्रजेत् । तस्मादादौ प्रकर्त्तव्यं सम्विदासवयोजनम् ॥ ११०
सम्विदासवयोर्मध्ये सम्विदेव गरीयसी । विजयाग्रहणं कृत्वा ध्यानं यः कुरुते नरः ॥
तदा ध्यानमयी मूर्त्तिः प्रत्यक्षा तस्य जायते । सम्वित्प्रयोगस्तेनेह पूजादौ साधकोत्तमैः ॥
कर्त्तव्या च महापूजा करुणामयनन्दितैः । तस्या भेदं प्रवक्ष्यामि यथार्थं तन्त्रवर्त्मना ॥
श्वेतपुष्पा च ब्रह्माणी रक्ता तु क्षत्रिया स्मृता । वैश्या पीतप्रसूना च शूद्रा कृष्णप्रसूनिका ॥

आसां शोधनमन्त्रञ्च कथयामि पृथक् पृथक् । सम्विदे ब्रह्मसम्भूते ब्रह्मपुत्रि सदानघे ॥ ११५
भैरवाणाञ्च तृप्त्यर्थं प्रसन्ना भव सर्वदा । ॐ ब्रह्माण्यै नमः स्वाहा ब्रह्माणीं शोधयेदिति ॥
सिद्धिमूलक्रिये देवि हीनबोधप्रबाधिनि । राजप्रजावशङ्करि शत्रुकण्ठत्रिशूलिनि ॥
ॐ ऐं क्षत्रियायै नमः स्वाहा क्षत्रियायाः स्मृतो मनुः । अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्ने ज्ञानरूपिणि ॥
आनन्दस्याहुतिं प्रीतिं सम्यग्ज्ञानं प्रयच्छ मे । ह्रीं वैश्यायै नमः स्वाहा शूद्रां संशोधयेदथ ॥
ॐ नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि । त्रैलोक्यविजये मातः समाधिफलदा भव ॥ १२०
क्लीं (श्रीं) शूद्रायै नमः स्वाहा कथितं मन्त्रमुत्तमम् । ॐ अमृते अमृतोद्भवे अमृतवर्षिणि पदन्ततः ॥
अमृतमाकर्षयद्वन्द्वं सिद्धिं देहि ततः परम् । त्रैलोक्यं मे ततो ब्रूयाद्वशमानय तत्परम् ॥
द्विठान्तोऽयं मनुः प्रोक्तश्चतुष्काणाञ्च शोधने । (अथवा) ह्सक्षमलवरयूं ह्सरौञ्च ततः परम् ॥
आनन्दभैरवायेति वषड़न्तः परो मनुः । अनयोरेकतरेणैव विशोध्य विजयां ततः ॥
सप्तधा मूलमन्त्रञ्च तासामुपरि संजपेत् । आवाहन्यादिमुद्राञ्च धेनुयोनिञ्च दर्शयेत् ॥ १२५
त्रितालछोटिकाभिश्च दिग्बन्धनं समाचरेत् । दिव्यदृष्ट्या पदाघातैर्विघ्नांश्च विनिवारयेत् ॥
सप्तधा तर्पयेन्मूर्ध्नि गुरुवर्गं सुसाधकः । तत्त्वमुद्राविधानेन हृदि देवीं गणान्विताम् ॥
तर्पयित्वा महादेवीं शक्तिभ्योऽपि ददेत्ततः । गृहीत्वा वामहस्तेन पठेदमुं मनुन्ततः ॥
ऐं वदवदपदं प्रोक्त्वा वाग्वादिनि ततः परम् । मम जिह्वाग्रे स्थिरीति भव सर्वपदं लिखेत् ॥
सत्त्ववशङ्करि स्वाहा मन्त्रेण तदनन्तरम् । स्वीकुर्यात् साधकश्रेष्ठो मुमुक्षुः प्रसमीक्षया ॥ १३०
मार्गशीर्षादिभिर्मासैः क्रमात् संसेव्य तां त्रिभिः । दुग्धघृतमधुसुरावर्णानामनुपानकम् ॥
एककालं द्विकालं वा त्रिकालं पञ्चकालकम् । क्रमात् संसेवनीया च सिद्धिदा सिद्धिमूलिका ॥
तथा तथा प्रकर्तव्यं सम्विदासवभोजनम् । यथा यथा न हि भवेत् प्राकट्यं पशुमेलके ॥
निर्जने चैव कर्तव्यं सदैव गुरुसन्निधौ । न पितुः सन्निधाने वा न मातुः सन्निधौ तथा ॥
किम्वा पक्षिपतङ्गानां दर्शने नैव कारयेत् । कुलपुष्पं कुलद्रव्यं कुलपूजां कुलं जपम् ॥ १३५
गुरुं कुलपतिञ्चैव कुलमालां कुलाकुलम् । कुलचक्रं कुलध्यानं सर्वथा न प्रकाशयेत् ॥
प्रकाशात्सिद्धिहानिः स्यात् प्रकाशाद्बन्धनादिकम् । प्रकाशान्मन्त्रनाशः स्यात् प्रकाशाद्वहिंसनम् ॥
प्रकाशान्मृत्युलाभः स्यान्न प्रकाश्यं कदाचन । पूजाकाले तु संप्राप्ते यदि कोऽप्यत्र गच्छति ॥
दर्शयेद्वैष्णवीं मुद्रां विष्णुन्यासं तथा स्तवम् । प्रकाशाद्युयदि गुप्तिः स्यात्तत्प्रकाशं न दूषणम् ॥
गोपनाद्यदि व्यक्तिः स्यान्न च व्यक्तिः कदाचन । वरं पूजा न कर्तव्या न च व्यक्तिः कदाचन ॥ १४०
रक्तमाल्याम्बरधरो योषिद्युक्तो महाशयः । ताम्बूलपूरितमुखो धूपामोदसुगन्धितः ॥
देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् । अस्त्रेण गन्धपुष्पाभ्यां सुरभीकृतहस्तकः ॥
मार्जयेत् साधकश्रेष्ठो मूलमन्त्रं परस्परम् । निर्मञ्छनं त्रिधा कृत्वा अस्त्रेण वामपाणिना ॥
क्षिपेत्तद्दूरतः पुष्पं मन्त्री नाराचमुद्रया । मध्यमाग्रे तु तर्जन्या संयोज्याधोर्ध्वरेखया ॥

अन्यांगुलीस्तथोर्ध्वश्च नाराचः स्यात् प्रसार्यते । ध्यात्वा गुरुं न्यसेद्वामे दक्षिणे गणपतिन्तथा ॥ १४५
निजदेवीं ततः पश्चान्मध्यदेशे च साधकः । पार्ष्णिघातकरास्फोट समुदञ्चितवक्त्रकैः ॥
तत्र तालत्रयं दद्यात् सशब्दं सम्प्रदायतः । प्राणायामैर्विना यस्य जपहोमार्चनादिकाः ॥
न भवन्त्येव सफला यत्नेनापि कृताः क्रियाः । जपस्य पुरतः कार्यं प्राणायामं समाहितैः ॥
अन्यथा निष्फलाः सर्वा जपहोमार्चनादिकाः । ऋतुचन्द्रैर्वेदरसैर्नेत्ररामैर्यथाक्रमम् ॥
मात्राभिः प्रणवं जप्त्वा पूरकुम्भकरेचकैः । वामा च मध्यमा चैव तथा दक्षिणनाड़िभिः ॥ १५०
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् । प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥
(यद्वा) प्राणायामं ततः कुर्यान्मूलेन प्रणवेन वा । उच्चारयंस्तु प्रणवं वामेनैकेन मन्त्रवित् ॥
उदरं पूरयित्वा तु वायुना यावदास्थितिः । प्राणायामो भवत्येवं पूरको देहपूरकः ॥
पिधाय सर्वगात्राणि निश्वासोच्छ्वासवर्जितः । सम्पूर्णकुम्भवत्तिष्ठेत् प्राणायाम. स कुम्भकः ॥
मुञ्चेद्वायुं तथैकेन श्वासेनैकेन मन्त्रवित् । निश्वासयोगयुक्तस्तु वायुं वाह्येन रेचयेत् ॥ १५५
रेचकस्त्वेव संप्रोक्तः प्राणायामो न संशयः । जानुप्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥
क्रियते चाङ्गुलिस्फोटं सा मात्रा परिकीर्तिता । ततो द्वादशमात्राभिः पूरकः क्रियते बुधैः ॥
तस्माद्द्विगुणमात्राभिः क्रियते रेचकः शुचिः । तस्माद्द्विगुणमात्राभिः क्रियते कुम्भकस्तथा ॥
प्राणायामत्रयेणैवमेकैकं त्रितयात्मकम् । लिङ्गं कार्यं हृदिस्थन्तु चैतन्यं सर्वसाक्षिणम् ॥
प्रणवेन विनिःसार्य ब्रह्मरन्ध्राद्बहिर्बुधः । तेनैव संपुटीकृत्य मस्तकोपरि विन्यसेत् ॥ १६०
चैतन्यरहितं देहं वाह्यश्चाभ्यन्तरन्तथा । नाभिमण्डलमध्यस्थं वायुमण्डलमध्यगम् ॥
यं वीजं धूपरं तप्तं ध्यात्वा तं तं विशोधयेत् । अग्निमण्डलसंस्थेन रंवीजेनाग्निरूपिणा ॥
निर्दहेदथ तद्भस्मराशिर्देहाकृतिर्भवेत् । भ्रूमध्यस्थं हृदिस्थं वा ध्यायेद्वरुणमण्डलम् ॥
अर्धचन्द्राकृतिं श्वेतं पद्मद्वयसदक्षिणम् । तत्रस्थेन वकारेण प्लावयेन्मधुरूपिणा ॥
जीवं पार्थिवं न्यस्य चिन्तयेद्धेममण्डलम् । प्रणवेण द्विधाकृत्य तत्र चैतन्यरूपिणा ॥ १६५
मस्तकोपरि विन्यस्य चैतन्येन नियोजयेत् । अमृतप्लावितः पिण्डः स मर्त्यो धौतकल्मषः ॥
आत्मानं चिन्तयेत् पश्चाद्देवतारूपिणं ततः । प्राणायामश्च कथितं भूतशुद्धिं तथापरम् ॥
अथवान्यप्रकारेण भूतशुद्धिश्च कथ्यते । प्राणायामत्रयं कृत्वा भूतशुद्धिं ततश्चरेत् ॥
भूतशुद्धिं विना कर्म जपहोमार्चनादिकम् । तावत्तद्विफलं सर्वं प्रकाशेनाप्यनुष्ठितम् ॥
भूतशुद्धिं विना यस्तु न्यासपूजां करोति हि । न्यासजालं वृथा तस्य पूजा सा विफला भवेत् ॥ १७०
तस्मात्तु साधकश्रेष्ठो भूतशुद्धिं समाचरेत् । मूलाधारात्ततः प्राणं ब्रह्ममार्गेण तान्त्रिकः ॥
हंसेन पुष्करस्थाने परमात्मनि योजयेत् । संहारक्रमयोगेन पञ्चतत्त्वं समुद्धरेत् ॥
शोषदाहप्लवान् कृत्वा वाय्वग्निसलिलाक्षरैः । अनेन विधिना मन्त्री भूतशुद्धिं समाचरेत् ॥
आत्मानं देवतारूपं विभाव्य साधकोत्तमः । स्वदेहे देवताजीवं विन्यसेत्तदनन्तरम् ॥

पुष्पै र्वानामया वापि मनसा वा न्यसेद्बुधः। जीवन्यासे मनुः प्रोक्तो जीवन्यासेषु योजयेत्॥ १७५
मुखवृत्तं समुच्चार्यं हंसस्तु विपरीतकः। क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः॥
अमुष्याः सर्वेन्द्रियाणि भूयोऽमुष्याः पदन्ततः। वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ॥
पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम्। अथवा पाशबीजञ्च लज्जा चाङ्कुशमेव च॥
प्राणमन्त्रं ततः पश्चाच्छेषं पूर्ववदाचरेत्। जीवन्यासमनुः प्रोक्तो जीवन्यासेषु योजयेत्॥
ततः कुर्यात् स्वकल्पोक्तं न्यासादिकं सुसाधकः। षडङ्गानाञ्च मुद्राञ्च स्थानञ्च मन्त्रमुच्यते॥ १८०
लिङ्गैकदशरात्रिद्विसंख्यांगुलिगतक्रमात्। हृदि मस्ते शिखायाञ्च कवचे लोचनास्त्रके॥
नमः स्वाहा वषट् हुञ्च वौषट् फट् योजयेत् क्रमात्। ऋषिश्छन्दश्च संयुक्तं देवताबीजशक्तिकम्॥
कीलितं ङेयुतं सर्वं विन्यसेद्देवु साधकः। शिरोवदनहृद्गुह्यपादसर्वाङ्गके न्यसेत्॥
अङ्गषट्कं ततः कुर्यात् पूर्वोक्तेनैव वर्त्मना पञ्चाशदक्षरन्यासे यद्विशेषस्तदुच्यते॥
ललाटेऽनामिकामध्ये विन्यसेन्मुखवर्त्मके। तर्जनीमध्यमानामा वृद्धानामा च नेत्रयोः॥ १८५
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः। मध्यास्तिस्रो गण्डयोश्च मध्यमामोष्ठयोर्न्यसेत्॥
अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके। मुखेऽनामां मध्यमाञ्च हस्ते पादे च पार्श्वयोः॥
कनिष्ठानामिकामध्यास्तास्तु पृष्ठे च विन्यसेत्। ताः साङ्गुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत्॥
हृदये च तलं पूर्वं अंशयोश्च ककुत्स्थले। हृत्पूर्वं हस्तपत् कुक्षिमुखेषु तलमेव च॥
एतास्तु मातृकामुद्राः क्रमेण परिकीर्त्तिताः। अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः॥ १९०
पञ्चाशदक्षरन्यासः क्रमेणैव प्रकाशितः। ओमाद्यन्त्यो नमोऽन्तो वा सबिन्दुर्बिन्दुवर्जितः॥
मायालक्ष्मीबीजपूर्वा न्यस्तव्या उच्यते बुधैः। अथवा केवलं सर्गबिन्दुयुक्तां कलान्विताम्॥
तार्त्तीयरुद्रशक्त्यन्तां स्मरादिकेशरान्विताम्। शक्तिपूर्वां श्रिया युक्तां सुधास्यां वा तनौ न्यसेत्॥
शक्तिश्रीकामबीजान्तां वेदादिशक्तिमातृकाम्। अजपा परमात्मा च द्विठप्रपञ्चयागकः॥
रविसंख्यात्मिकां प्रोक्तां मातृकान्तस्वरूपिणीम्। यस्य यत्र रुचिर्गच्छेत्तद्रूपात्ततनौ च ताम्॥
विन्यस्य तन्मयो मन्त्री याति वागीश्वरीमयम्। स्पृष्ट्वा वानामया वापि मनसा वा न्यसेद्बुधः॥ १९५
ऋष्यादिव्यापकान्तञ्च स्वकल्पोक्तं समापयेत्। प्राणायामादिभिर्न्यासैः आत्मशुद्धिश्च जायते॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये द्वितीय उल्लासः॥ २॥

---

## तृतीय उल्लासः

आत्मशुद्धिः समाख्याता अन्तर्यागश्च कथ्यते । अन्तर्यागविधिं कृत्वा वहिर्यागं समाचरेत् ॥
बहिर्यागे नाधिकारी अन्तर्यागविवर्जितः । बहिर्यागफलं नास्ति विनान्तर्यजनं कदा ॥
तस्मात् प्रयत्नतो वीरश्चान्तर्यागं समारभेत् । शिवशक्तिसमायोगात् सुधावृष्टिं विधाय च ॥
तर्पयित्वा महादेवीं पद्मे पद्मे सुसाधकः । मूलाधारे समानीय सोऽहं सञ्चिन्तयेत्ततः ॥
इत्यन्तर्यजनं प्रोक्तं सर्वसिद्धिप्रदायकम् । यद्वान्तर्यजनं वक्ष्ये साधकस्य सुसिद्धये ॥
स्वकीयहृदये ध्यायेत् सुधासागरमुत्तमम् । रत्नद्वीपन्तु तन्मध्ये सुवर्णवालुकामयम् ॥
परितो भावयेन्मन्त्री पारिजातं मनोहरम् । तत्र कल्पद्रुमं ध्यायेत् पञ्चाशदक्षरात्मकम् ॥
तन्मूले भावयेन्मन्त्री नानारत्नोपशोभितम् । उद्यदादित्यसङ्काशं व्याप्तं ब्रह्माण्डमण्डलम् ॥
शतयोजनविस्तीर्णं ज्योतिर्मन्दिरमुत्तमम् । चतुर्द्वारसमायुक्तं हेमप्राकारशोभितम् ॥
बहुचामरघण्टादिवितानैरुपशोभितम् । मन्दवायुसमाक्रान्तं गन्धधूपैरलङ्कृतम् ॥
तन्मध्ये वेदिकां ध्यायेन्नानारत्नोपशोभिताम् । सुवर्णसूत्ररचितं चिन्तयेच्छत्रमुत्तमम् ॥
विभावयेन्महायन्त्रं पीयूषपूरपूरितम् । पाद्यपात्रत्रयं कुर्यादर्घ्यपात्रत्रयन्तथा ॥
षडाचमनपात्राणि मधुपर्कत्रयन्ततः । एकन्तु भोगपात्रन्तु साधक.. षोड़शे दले ॥
सहस्रारामृतेनैव पात्राणि पूरयेत्तथा । पीठपूजां ततः कुर्यात् स्वकल्पोक्तविधानतः ॥
सर्वोपरि ततो ध्यायेत् पश्चिमाननपङ्कजम् । स्रवन्तममृतं नित्यं दिव्याङ्गकमलान्तरे ॥
शिवशक्तिसमायोगादमृतानन्दनन्दिनीम् । स्वस्वरूपां समावाह्य परिवारगणैः सह ॥
मानसैरुपचारैश्च दीयते द्रव्यमुत्तमम् । आसनं स्वागतं पृष्ट्वा कुशलं तदनन्तरम् ॥
पाद्यं चरणयोर्दद्यान्मौलौ चार्घ्यं निवेदयेत् । सहस्रदलभृङ्गारालम्बिकानालविच्युतम् ॥
परमामृतपानीयं भावपुष्पैः समन्वितम् । स्वर्णपात्रे जलं कृत्वा दद्यादाचमनं मुखे ॥
मधुपर्कं मुखे दद्यात् पुनराचमनीयकम् । चतुर्विंशतितत्त्वेन गन्धं दद्याद्विचक्षणः ॥
स्वयम्भुकुसुमं दद्यात् कुङ्कुमं रक्तचन्दनम् । सप्ताष्टभावपुष्पैश्च संपूज्य धूपदीपकम् ॥
मनःकल्पितनैवेद्यं दद्याद्देव्यै मनोरमम् । तर्पयेच्च त्रिधा देवीं यथोक्तविधिना ततः ॥
षडङ्गं गुरुपङ्क्तिञ्च पूजयेदङ्गदेवताः । पूजयित्वा प्रयत्नेन स्नानीयं दापयेद्यथा ॥
स्ववामे मण्डलं कृत्वा रत्नसिंहासनान्वितम् । तत्र देवीं समानीय नानागन्धसमन्वितम् ॥
उद्वर्त्तनादिकं कृत्वा तैलं नारायणादिकम् । दत्त्वा देव्यै प्रयत्नेन स्नानीयं दापयेत्ततः ॥
सुवर्णकोटिकुम्भैश्च गन्धतोयसमन्वितैः । नानातीर्थजलेनैव स्नापयेत् परदेवताम् ॥
दुकूलेमार्जितं गात्रं दुकूलं परिधापयेत् । नयने तेजसस्तत्त्वं प्रोञ्छयेत्तेन वै तनुम् ॥
आकाशतत्त्वं श्रोत्रे च तेन वस्त्रं प्रकल्पयेत् । विधिवद्वन्दनं कृत्वा केशसंस्कारमाचरेत् ॥

नानारत्नसमायुक्तकङ्कत्या साधकोत्तमः । पट्टगुच्छं केशपाशे नानारत्नसमाकुलम् ॥
ललाटे तिलकं दद्यात् सिन्दूरं केशमध्यके । नागेन्द्रदन्तरचितं शङ्खं दद्यान्मनोहरम् ॥ ३०
हस्ते केयूरकञ्चैव कङ्कणं कटकन्तथा । पादाङ्गुरीयकं दद्यान्नानारत्नोपशोभितम् ॥
पादयोर्नूपुरं दद्यात् कट्याञ्च क्षुद्रघण्टिकाम् । शिरोरत्नं प्रदद्याच्च मुकुटं रत्ननिर्मितम् ॥
ताडङ्ककुण्डलं कर्णभूषणं सुपरिष्कृतम् । नयने कज्जलं दद्यान्नासाग्रे गजमौक्तिकम् ॥
ग्रीवापत्रं कण्ठभूषां मुक्तामणिविभूषितम् । आनन्दहारत्रितयं अङ्गुरीयकरत्नकम् ॥
सर्वाङ्गलेपनं कार्यं गन्धचन्दनसिह्लकैः । काञ्चनाञ्चितकञ्चूलीमलक्तं रदनच्छदे ॥ ३५
सुवर्णपादुकां दत्त्वा प्रवालदन्तचिह्निताम् । मण्डपेषु समानीय रत्ननिर्मितदोलया ॥
पुनः पाद्यादिकं दत्त्वा पूजयेत्तां सनातनीम् । गन्धादिकं ततो दत्त्वा भावपुष्पैः प्रपूजयेत् ॥
अमायमनहङ्कारमरागममदन्तथा । अमोहकमदम्भञ्च अद्वेषाक्षोभकौ तथा ॥
अमात्सर्यमलोभञ्च दशपुष्पं विदुर्बुधाः । अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहम् ॥
दयापुष्पं क्षमापुष्पं ज्ञानपुष्पञ्च पञ्चमम् । इति पञ्चदशैर्भावपुष्पैः संपूजयेच्छिवाम् ॥ ४०
करवीरं जवा द्रोणं चम्पकं नागकेशरम् । अपराञ्च कदम्बञ्च पारिजातादिकन्तथा ॥
दद्याद्देव्यै प्रयत्नेन माल्यं गन्धसमन्वितम् । सुमेखलां पद्ममालां पुष्पं नानाविधन्तथा ॥
सप्तद्वीपसमुद्भूतं दद्याद्देव्यै सुसाधकः । कुण्डगोलोद्भवञ्चैव धूपं दद्यात् समीरणम् ॥
सहस्रारकर्णिका पात्रं तैलं स्याच्च परामृतम् । मूलाधारे वर्त्तिरूपं चिदग्निः स्यात् प्रदीपकम् ॥
आमूलाद्ब्रह्मरन्ध्रान्तं सुषुम्नाहतवायुना । अनाहतध्वनिमयीं घण्टामेतां निवेदयेत् ॥ ४५
नैवेद्यं षड्रसोपेतमम्बरं चामरन्तथा । सूर्यञ्च दर्पणञ्चन्द्रमण्डलं छत्रमुत्तमम् ॥
सुधाम्भोधिं मांसशैलं मत्स्यराशिं फलानि च । सुपक्वञ्चरुकञ्चैव घृताक्तं परमान्नकम् ॥
भक्ष्यभोज्यं तथा चोष्यं लेह्यं पेयञ्च चर्वणम् । दद्याच्छेषार्घ्यतोयेन पुनराचमनीयकम् ॥
बाह्यचक्रं ततो दद्यान्मूलाधारोत्थवायुना । रजःसत्त्वगुणाढ्यञ्च कर्पूरचूर्णमिश्रितम् ॥
रत्नपात्रे परिष्कृत्य ताम्बूलञ्च निवेदयेत् । तर्पयित्वा पुनर्देवीं पूजयेच्चाङ्गदेवताः ॥ ५०
विधाय तर्पणं तेषां देवीं संपूजयेत् पुनः । विधिवत् पूजनं कृत्वा तर्पयेत्तदनन्तरम् ॥
अन्तर्मातृकया जप्ता समर्प्य च स्तुतिं पठेत् । पुष्पशय्याञ्च संस्कुर्यात्तत्र देवीं सुरेश्वरीम् ॥
मनोनर्त्तकतालैश्च शृङ्गारादिरसोद्भवैः । गीतैर्नानाविधैर्देवीं तोषयेत् साधकोत्तमः ॥
तस्मात् कामेश्वरी देवी प्रीता कामेश्वरश्च सः । मनस्यैक्यं विभाव्याथ साधकः सिद्धिभाग् भवेत् ॥
इत्यन्तर्यजनं प्रोक्तं भुक्तिमुक्तिप्रदायकम् । रक्तपद्मसहस्राणि मनसा यः प्रयच्छति ॥ ५५
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । स्थित्वा देवीपुरे श्रीमान् ततो राजा क्षितौ भवेत् ॥
मनसापि महादेव्यै नैवेद्यं दातुमिच्छति । यो नरो भक्तिसंयुक्तः स दीर्घायुः सुखीभवेत् ॥
मनसापि च यो भक्त्या देव्यै कुर्यात् प्रदक्षिणम् । देवीगृहे वसेत् सोऽपि नरकाणि न पश्यति ॥

नमनं मनसा देव्यै यो भक्त्या कुरुते नरः। सोऽपि लोकान् विजित्याशु शिवलोके महीयते ॥
अथान्तर्यजनं वक्ष्ये दृष्टादृष्टफलप्रदम्। गुरुध्यानं प्रकुर्वीत यथापूर्वं विशालधीः ॥ ६०
स्नायाच्च विमले तीर्थे पुष्करे हृदयाश्रिते। विन्दुतीर्थेऽथवा स्नायात् पुनर्जन्म न विद्यते ॥
इड़ासुषुम्ने शिवतीर्थकेऽस्मिन् ज्ञानाम्बुपूर्णे वहतः शरीरे ।
ब्रह्माम्बुभिः स्नाति तयोः सदा यः किन्तस्य गाङ्गैरपि पुष्करैर्वा ॥
इति स्नानं समुद्दिष्टमथ सन्ध्यां समाचरेत्। शिवशक्त्योः समायोगो यस्मिन्काले प्रवर्तते ॥
सा सन्ध्या कुलनिष्ठानां समाधिस्थैः प्रगीयते। चन्द्रार्कानलसंघट्टाद्गलितं यत् परामृतम् ॥
तेनामृतेन दिव्येन तर्पयेत् परदेवताम्। तर्पणं कथितं दिव्यमर्घ्यसाधनमुच्यते ॥ ६५
ब्रह्मरन्ध्रादधोभागे यच्चान्द्रं पात्रमुत्तमम्। कलासारेण संपूर्य तर्पयेत्तेन खेचरीम् ॥
आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे
द्वे पत्रे षोड़शारे द्विदशदशदले द्वादशार्द्धे चतुष्के।
वासान्ते वालमध्ये डफकठसहिते कण्ठदेशे स्वरांश्च
हक्षौ कोदण्डमध्ये न्यसतु विमलधीर्न्याससम्पत्तिसिद्धौ ॥
इत्यन्तर्मातृकावर्णान् ध्यायेत् कण्ठच्छदक्रमात्। षड़ङ्गमथ कुर्यात्तु येन देवीमयो भवेत् ॥
हन्यमानहृदर्थोऽयं हृदयं स्याच्चिदात्मकम्। क्रियते तत्परत्वेन हृन्मन्त्रेण ततः परम् ॥
सर्वाङ्गादिगुणोत्तुङ्गे सम्विद्रूपे परात्मनि। क्रियते विषयाहारः शिरोमन्त्रेण देशिकैः ॥ ७०
हृच्छिवो रूपं शिखाम ममता भावना दृढ़ा। क्रियते निजदेहस्य शिखामन्त्रेण देशिकैः ॥
मन्त्रात्मकस्य देहस्य मन्त्रवाच्येन तेजसा। सर्वतो मन्त्रवर्णेन क्रियते तस्य संवृतिः ॥
यद्ददाति परं ज्ञानं संविद्रूपे परात्मनि। हृदयादिमयं तेजः स्यादेतन्नेत्रसंज्ञितम् ॥
आध्यात्मिकादिरूपं यत् साधकस्य विनाशयेत्। अविद्याजातमन्त्रं तत् परं धाम समीरितम् ॥
इति न्यासं विधायाथ ततो ध्यायेच्चिदात्मकम्। शक्तिद्वयपुटान्तःस्थहलक्षत्रयसंस्थितम् ॥ ७५
ज्योतिस्तत्त्वमयं ध्यायेत् कुलाकुलनियोजनात्। अथ शृङ्गाटमध्यस्थशक्तिद्वयपुटीकृतम् ॥
सदा समरसं ध्येयं ध्यानं तत् कुलयोगिनाम्। (यद्वा) किरणस्थं तदग्रस्थं चन्द्रभास्करमध्यगम् ॥
महाशून्ये लयं कृत्वा पूर्णस्तिष्ठति योगिराट्। निरालम्बे पदे शून्ये यत्तेज उपजायते ॥
तद्गर्भमभ्यसेन्नित्यं ध्यानमेतद्धि योगिनाम्। अथ पूजां प्रवक्ष्यामि यथातन्त्रानुसारतः ॥
अर्चयन् विषयैः पुष्पैस्तत्क्षणात्तन्मयो भवेत्। न्यासस्तन्मयताबुद्धिः सोऽहंभावेन पूजयेत् ॥ ८०
पूर्वोक्तभावपुष्पानि दद्याद्देव्यै सुसाधकः। अथ वक्ष्ये जपं तत्र पद्मस्थवर्णमालया ॥
माला पञ्चाशिका प्रोक्ता सूत्रं शक्तिशिवात्मकम्। ग्रथिता कुण्डलीशक्तिः कलान्ते मेरुसंस्थितिः ॥
सविन्दुं वर्णमुच्चार्य मूलमन्त्रं स्मरेत्ततः। अनुलोमविलोमाभ्यां यथाशक्ति जपञ्चरेत् ॥
जप्त्वा समर्पयेत् पश्चात् सकृत्प्रोक्तविधानतः। स्तुतिभिः सकलन्तत्र समर्पणं पुनः पुनः ॥

अथ होमविधिं वक्ष्ये येन चिन्मयतां लभेत् । आत्मानमपरिच्छिन्नं ज्ञातव्यं साधकोत्तमैः ॥ ८५
आत्मान्तरात्मपरमज्ञानात्मानः प्रकीर्तिताः । एतद्रूपन्तु चित् कुण्डं चतुरस्रं विभावयेत् ॥
आनन्दमेखलारम्यं विन्दुत्रिवलयान्वितम् । अर्धमात्रायोनिरूपं ब्रह्मानन्दमयं भवेत् ॥
परदेवमये सर्वज्ञानदीपविजृम्भिते । सम्विदग्नौ हुनेद्धव्यं साधकः स्थिरमानसः ॥
शब्दाख्यं मातृकारूपमक्षवर्णविराजितम् । अक्षराणि हुतान्यत्र निःशब्दं ब्रह्म जायते ॥
कृत्याकृत्ये पापपुण्ये सङ्कल्पांश्च विकल्पकान् । धर्माधर्मौ साधकेन्द्रो हविस्त्वेन प्रकल्पयेत् ॥ ९०
चिदग्नौ जुहुयान्मन्त्री मूलान्तेन यथाक्रमात् । नाभिमण्डलचैतन्यरूपाग्नौ मनसा स्रुचा ॥
ज्ञानप्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम् । वह्निजायान्तमन्त्रेण दद्याच्च प्रथमाहुतिम् ॥
धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा । सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥
वह्निजायान्तमन्त्रेण द्वितीयाहुतिमाचरेत् । प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ॥
धर्माधर्मौ कलास्नेहपूर्णवह्नौ जुहोम्यहम् । वह्निजायान्तमन्त्रेण तृतीयामाहुतिश्चरेत् ॥ ९५

अन्तर्निरन्तरनिवन्धनमेधमाने मायान्धकारपरिपन्थिनि सम्विदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशि भूमौ विश्वं जुहोमि वसुधादिशि वावसानम् ॥

इदन्तु पात्रभरितं महोत्तापपरामृतम् । पूर्णाहुतिमये वह्नौ पूर्णहोमं जुहोम्यहम् ॥
इत्यन्तर्यजनं कृत्वा साक्षाद्ब्रह्ममयो भवेत् । महान्तर्यजनं वक्ष्ये ब्रह्मयज्ञस्वरूपकम् ॥
ब्रह्मयज्ञं महायज्ञं ब्रह्मज्ञानी यजेत् सदा । मनसा च मनो दृष्ट्वा यथा सिन्धुगता नदी ॥ १००
तथा सर्वशरीराणि महाशून्ये नियोजयेत् । यज्ञकर्त्ता महायोगी सर्वमन्त्रं जपेत् पुनः ॥
आत्मस्थः सर्वयज्ञस्तु वहिर्यज्ञविवर्जितः । कर्मयज्ञो मनोयज्ञः प्राणयज्ञो हुताशनः ॥
मन्त्रयज्ञः सुषुम्नान्तः सर्वयज्ञफलं लभेत् । ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना । ब्रह्मवत् सर्वमार्गेषु सर्वकर्म समभ्यसेत् ॥
अथ वक्ष्ये वहिर्यागविधानं तन्त्रवर्त्मना । एषामन्यतमं कृत्वा यन्त्रराजं समालिखेत् ॥ १०५
स्वार्णे वा राजते ताम्रे पाषाणे चाष्टधातुषु । (यद्वा) गण्डकीतीरपाषाणे तथैव रुचिपीठके ॥
श्रीखण्डसम्भवे पीठे रक्तचन्दनसम्भवे । यद्वा सुवर्णरूप्यादौ ताम्रे वा दर्पणे तथा ॥
काश्मीरप्रभवे भूमौ यन्त्रं कुर्याद् यथाविधि । गोमयेन च संलिप्ते भूप्रदेशे मनोरमे ॥
सिन्दूररजसा वापि रक्ताभिः कुङ्कुमस्य वा । (यद्वा) शुद्धे समे भूर्जपत्रे [अथवा ताम्रपट्टके] ॥
शुष्के समे भूगृहे वा स्फटिके स्वर्णपट्टके । रत्ने वा कुलशक्तौ वा यन्त्रं कुर्यात् सुसाधकः ॥ ११०
पट्टालकं विलिप्येत वक्ष्यमाणैकवस्तुना । स्वयम्भु कुसुमं कुण्डगोलोत्थं रोचनागुरुं ॥
काश्मीरं मृगनाभिश्च मद्यञ्च मलयोद्भवं । एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ॥
एतेन गन्धयोगेन चक्रराजं समालिखेत् । (यद्वा) स्वयम्भुकुसुमेनैव कुण्डगोलेन वा पुनः ॥
तदा तस्य सर्वसिद्धिर्जायते नात्रसंशयः । (यद्वा) चन्दनागुरुचन्द्रेण सिन्दूररजसापि वा ॥

कस्तूरीघुसृणैर्द्रव्यै रोचनालाक्षयापि वा । (यद्वा) कुण्डगोलोद्भवैर्द्रव्यैः स्वयम्भुकुसुमेन च ॥ ११५
रोचनालाक्षया युक्तैः कुङ्कुमागुरुचन्दनैः । सुवर्णरत्न लेखन्या सर्वकार्यार्थसिद्धये ॥
(यद्वा) पुष्पेण विलिखेद्वापि यन्त्रराजं सुसाधकः । चन्द्रसूर्यातपन्या वा अथवा विल्वकण्टकैः ॥
चन्द्रसूर्यातपहोमोद्भवया विल्वकण्टकैः । एषामेकतमं लब्ध्वा स्वीययन्त्रं समुद्धरेत् ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा यत् फलमाप्नुयात् । तत् फलं लभते वीरः कृत्वेष्टचक्रदर्शनम् ॥
नालोच्य कुलजं वर्त्म न ज्ञात्वा सूत्रधारणं । न ज्ञात्वा सुषमां रेखां नालिख्य सुषमं मुखं ॥ १२०
तस्य सर्वं हरेद्देवो योऽस्मिन् यन्त्रे प्रपूजकः । अथ वक्ष्ये च शाक्तानां सामान्यं यन्त्रमुत्तमम् ॥
यत्रापराजितापुष्पं जवापुष्पञ्च विद्यते । करवीरे रक्तशुक्ले द्रोणे वा यन्त्रराजके ॥
तत्र देवी वसेन्नित्यं तद्युयन्त्रे चण्डिकार्चनं । पशोरालोकनं न स्यात्तथा कुर्यात् प्रयत्नतः ॥
यदि दैवात् पशोरग्रे लिखनं विद्यते क्वचित् । देव्यङ्गक्षतिरेवात्र क्रियते पापबुद्धिना ॥
उत्तराशामुखो भूत्वा यदा चक्रं समुद्धरेत् । उत्तराशा तदा सापि पूर्वाशैव न संशयः ॥ १२५
ईशकोणं तदेव स्यादाग्नेयञ्च न संशयः । पश्चिमाशामुखो मन्त्री यथाचक्रं समुद्धरेत् ॥
पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः । वायुकोणं तदाग्नेयमीशानं राक्षसं भवेत् ॥
दक्षिणाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् । पूर्वाशैव तदा सा दिक्रक्षःकोणन्तु वह्निकम् ॥
पूर्व्वाशाभिमुखो भूत्वा यदा चक्रं समुद्धरेत् । पूर्व्वाशापि तदा ज्ञेया पूर्व्वाशैव न संशयः ॥
आग्नेयञ्च तथाग्नेयं ईशकोणञ्च ईशकम् । यदाशाभिमुखो मन्त्री पूजयेच्चण्डिकां शुभाम् ॥ १३०
पूर्वाशैव सा विज्ञेया साधकेन महात्मना । देवीपश्चात् प्रतीची स्यात् प्राची तु चण्डिकापुरः ॥
अन्येषाञ्चैव देवानां विधिश्चात्र प्रकथ्यते । पूज्यपूजकयोरन्तः पूर्व्वाशैव निगद्यते ॥
लिखित्वा पुरतो यन्त्रं स्थापयेदासनोपरि । सीसकं कांश्यपात्रे वा रङ्गे वा साधकोत्तमः ॥
फलकायां पटे भित्तौ स्थापयेन्न कदाचन । स्थापितं यदि लोभेन मोहेनाज्ञानतोऽपि वा ॥
कुलं वित्तमपत्यञ्च निर्मूलं याति सर्वथा । पुष्पं तत्र विनिक्षिप्य गन्धचन्दनसंयुतम् ॥ १३५
अशून्यं स्थापयेच्चक्रं शून्ये विघ्नसमो भवेत् । स्वकल्पोक्तविधानेन देवीं ध्यात्वा सुसाधकः ॥
आत्माभेदेन संभाव्य पुष्पं दद्यात् स्वमूर्द्धनि ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये तृतीयोल्लासः ॥ ३ ॥

---

## चतुर्थं उल्लासः

अथ वक्ष्ये च मन्त्राणां विधानं यत्न यद्भवेत्। बालाश्चात्रिपुरां देवीं सध्यामाप्यथ भैरवीम् ॥
कामेश्वरीञ्च कामाख्यां पूजयेच्च यथेच्छया। दाक्षिण्याद्वामभावाद्वा सर्वथा सिद्धिमाप्नुयात् ॥
महामायां शारदाञ्च शैलपुत्रीं तथाम्बिकाम्। यथा तथा प्रकारेण वामदक्षिणतो यजेत् ॥
श्मशानभैरवीं कालीं उग्रताराञ्च पञ्चमीं। उच्छिष्टभैरवीञ्चैव तारां त्रिपुरसुन्दरीम् ॥
उन्मुखीञ्चैव दुर्गाञ्च मर्द्दिनीं स्वप्नबोधिनीं। एतास्तु वामभावेन पूज्या दक्षिणतां विना ॥
सिद्धिर्न जायते दक्षाल्लक्षजन्म यजेद्य यदि। वामात् सर्वसमृद्धिः स्याद्देव्याः प्रियतरो भवेत् ॥
दक्षिणेन लभेच्छापं मृते नरकमाप्नुयात्। ब्रह्मापि च भवेद्वामो विष्णुश्चैव सदाशिवः ॥
विष्णोश्च वामिका मूर्त्तिर्नारसिंहान्वयो भवेत्। सा तु दक्षिणवामाभ्यां पूजनीया प्रयत्नतः ॥
तथैव बालगोपालमूर्त्तिर्या परमात्मनः। मत्स्यमांसासवाभोगो लोलुपः स्त्रीषु सर्वदा ॥
गणेशोऽपि च वेतालः कथितो वामनायकः। भैरवोऽपि भवेद्वामस्तथान्ये देवतादयः ॥
एतास्तु वामभावेन पूजनीया विशेषतः। अन्याश्च चण्डिकादेव्या बालिकामूर्त्तयः स्मृताः ॥
लक्ष्म्याद्या वामिकामूर्त्तौ रक्ता च दशभैरवी। वाग्भवी च सरस्वत्या बालिकामूर्तिरीरिता ॥
वामभावेन सिद्धिः स्याद्दाक्षिण्येन विना कदा। पूजकोऽपि भवेद्वाम स्तथैव सततं गुरुः ॥
यजेच्च मांसमीनेन मैथुनाद्यैर्विशेषतः। महाभैरवरूपेण तथा च रतिसङ्गमे ॥
नान्यथा जायते सिद्धिर्मन्त्राणाञ्च सुनिश्चितं। अथातः संप्रवक्ष्यामि पञ्चतत्त्वविनिर्णयं ॥
अथ वक्ष्ये च पञ्चानां विधानं तन्त्रवर्त्मना। पञ्चमात्तु परं नास्ति शाक्तानां सुखमोक्षयोः ॥
केवलैः पञ्चमैरेव सिद्धो भवति साधकः। केवलेनाद्ययोगेन साधको भैरवो भवेत् ॥
द्वितीयेन च तत्त्वेन पूजको ब्रह्मरूपभाक्। केवलेन तृतीयेन महाभैरवतां व्रजेत् ॥
चतुर्थेन तु तत्त्वेन भुवि पूजकनायकः। परेण परतां याति शिवतुल्यः स साधकः ॥
पञ्चमेन भवेद्भोगी सर्वसिद्धिपरायणः। यस्य भवेद्यदा नित्यं पञ्चतत्त्वस्य सम्भवः ॥
पञ्चतत्त्वे भवेद्वीरः शिववन्द्यः स साधकः। पञ्चमेन विना देवीं पञ्चमीं पूजयेत्तु यः ॥
स तु स्याड्डाकिनीभोग्यो नारकी ब्रह्मघातकः। अन्यमूर्तेस्तु दुर्गायाः पञ्चमेन विना सदा ॥
निश्चितं नैव सिद्धिः स्याज्जपहोमाच्च तर्पणात्। तद्विहीनस्य या पूजा जपं वा तर्पणं पुनः ॥
रौरवाय भवत्येव तस्य भ्रष्टस्य निश्चितं। चण्डिकां पूजयेद्यस्तु विना पञ्चमकारकैः ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनं। मकारपञ्चकं चैव देवताप्रीतिकारकम् ॥
पञ्चमेन तु वीरेन्द्रः सर्वपापैः प्रमुच्यते। मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ॥
मकारपञ्चकं देवि देवताप्रीतिदायकं। विना पञ्चोपचारं हि देवीपूजां करोति यः ॥
योगिनीनां भवेद्भक्ष्यः पापञ्चैव पदे पदे। विना मांसेन मद्येन ना से नं श्च वि ली व पुं ॥
न मन्त्रसिद्धिमाप्नोति तस्माद्य यत्नपरो भवेत्। प्रमादाद्यदि लुप्येत देवताशापमाप्नुयात् ॥

यथाविधि यजेद्देवीं मकारपञ्चकैः सदा । तृप्त्यर्थं सर्वदेवानां तत्त्वज्ञानोद्भवाय च ॥ ३०
तेषाञ्च लक्षणं वक्ष्ये शोधनञ्च क्रमेण तु । मद्यस्य लक्षणं वक्ष्ये साधकानां हिताय च ॥
सत्ये क्रमाच्चतुर्वर्णैः क्षीराज्यमधुपिष्टकैः । त्रेतायां पूजिता देवी घृतेन सर्वजातिभिः ॥
मधुभिः सर्ववर्णैश्च पूजिता द्वापरे युगे । पूजनीया कलौ देवी केवलैरासवैश्च तैः ॥
चतुर्युगेषु संपूज्या तुरीयैरासवैः सदा । तत्तु नानाविधं द्रव्यं कथ्यते तन्द्रवर्त्मना ॥
वार्क्षं गौड़ं तथा पौष्पं क्षौद्रं फलसमुद्भवम् । सर्वोत्कृष्टन्तु विज्ञेयं द्रव्यमन्नेन सम्भवं ॥ ३५
(अथवा) पत्रपुष्पाङ्कुरफलमूलवल्कलधान्यजं । रसं वृक्षलताजातमैक्षवं दशविधं स्मृतं ॥
पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवं । मधूत्थं सीधु माध्वीकं मैरेयं नारिकेलजं ॥
मद्यान्येकादशैतानि भुक्तिमुक्तिकराणि च । द्वादशन्तु सुरामद्यं सर्वेषामुत्तमोत्तमं ॥
मधुपुष्परसोद्भूतमासवं तण्डुलोद्भवं । सर्वसिद्धिकरी पैष्टी गौड़ी भोगप्रदायिणी ॥
माध्वी मुक्तिकरी प्रोक्ता खार्जुरी रिपुनाशिनी । नारिकेलोद्भवा श्रीदा ऐक्षवं सुखवर्द्धनम् ॥ ४०
अन्यत्रापि ।

गौड़ी पिष्टकजाततालतरुजा द्राक्षी च माध्वी तथा
खार्जुरी नवनारिकेल तरुजा गौड़ी च भोगप्रदा ।
पैष्टी सिद्धिकरी विपक्षदलनी ताली च द्राक्षी शुभा
अन्या या विहिता सदा शुभकरी मोक्षप्रदाः सात्त्विकाः ॥

अपक्वैश्च सुपक्वैश्च द्रव्यैरमृतसन्निभैः । तर्पणं परमेशान्याः सर्वकामफलप्रदम् ॥
आत्म स्थानमनुद्रव्यदेहशुद्धिञ्च पञ्चमीम् । यावन्न कुरुते मन्त्री तावद्देवार्चनं कुतः ॥
असंस्कृतं पिबेद् द्रव्यं बलात्कारेण मैथुनम् । स्वप्रियेण हतं मांसं रौरवं नरकं व्रजेत् ॥
संशोधनमनाचर्य स्त्रीषु मद्येषु साधकः । कृतेऽपि सिद्धिहानिः स्यात् क्रुद्धा भवति चण्डिका ॥ ४५
तस्मात् संशोधनं वक्ष्ये यथा तन्त्रानुसारतः । वामभागे च षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ॥
तद्बाह्ये मण्डलं कृत्वा चतुरस्रं समालिखेत् । सामान्यार्घ्यजलेनैव प्रोक्षयेन्मण्डलं ततः ॥
अभ्यर्च्याधारशक्तिञ्च कुम्भस्याधारमास्तरेत् । तत्र संपूजयेद्वह्निमण्डलं तदनन्तरम् ॥
तत्र संस्थापयेत् कुम्भं सौवर्णं राजतन्तथा । ताम्रं भूमिमयञ्चापि यद्वा लौहविवर्जितम् ॥
सौवर्णं भोगदं प्रोक्तं राजतं मोक्षदं भवेत् । कांस्यं शान्तिकरञ्चैव मृण्मयं पुष्टिदन्तथा ॥ ५०
पञ्चाशदङ्गुलायाम उत्सेधः षोड़शाङ्गुलः । कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत् ॥
एषामेकतमं कुम्भं अस्त्रेण क्षालितन्ततः । आधारे स्थापयित्वा तु पूजयेत् सूर्यमण्डलम् ॥
ततश्च कारणैर्दिव्यैः पूरयेन्मूलमुच्चरन् । भूषयेद्रक्तपुष्पेण रक्तमाल्येन साधकः ॥
रक्तवस्त्रेण संवेष्ट्य लेपयेद्रक्तचन्दनैः । सोममण्डलमभ्यर्च्य अमृतं परिभाव्य च ॥
विभावयेत्ततो द्रव्यमिष्टदेवस्वरूपकम् । प्रणमेद्भक्तिभावेन मुद्राभिः पञ्चसंज्ञकैः ॥ ५५

अधोमुखौ समौ कृत्वा भूमौ पाणितलद्वयम्। सकलाङ्गुलिभिः सम्यङ्मुद्रेयं चतुरस्रिका ॥
अधोमुखं मुष्टियुग्मं संवृत्तं परिकीर्त्तितम्। अन्योन्याभिमुखौ हस्तौ पुटाकारेण कारयेत् ॥
संपुटाख्यमहामुद्रा योजिता नतिकर्मणि। एतस्या एव मुद्रायाः कनिष्ठामूलदेशके ॥
अङ्गुष्ठौ च क्षिपेत्तत्र संपुटाञ्जलिरीरिता। मध्यमे सरले कृत्वा तर्जन्युपरि संस्थिते ॥
अनामिकामध्यगते तथैव हि कनिष्ठिके। सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीड़िता ॥ ६०
एषा तु परमा मुद्रा योनिमुद्रा प्रकीर्तिता। ह्रां नमश्चतुरस्रं स्यात् ह्रीं नमः संवृतस्तथा ॥
क्लां नमः संपुटं ज्ञेयं ब्लुं नमः संपुटाञ्जलि.। सः नमो योनिमुद्रा स्यात् पञ्चमुद्राः प्रकीर्तिताः ॥
भक्त्या विलोकयेद्द्रव्यं मूलमन्त्रं समुच्चरन्। प्रणवं वरुणं सेन्दु वामदेवञ्च ङेयुतम् ॥
चौपड़न्तं समुच्चार्य पूजयेत् यन्त्रमुत्तमम्। विरं कूर्चं ततः पशुपतये तदनन्तरम ॥
अस्त्राय वर्मवीजञ्च फट्कारान्तः परो मनुः। अनेनादौ प्रपूज्यैव पथिकस्य वलिं हरेत् ॥ ६५
त्रिकोणवृत्तभूगेहं लिखेत् कुम्भसमीपतः सिन्दूरकुङ्कुमाभ्याञ्च सर्वपथिकदेवताः ॥
तत्र संपूजयित्वा च वलिं दद्यात्ततः परम्। सहेतुं सामिषान्नञ्च निधाय मनुमुद्धरेत् ॥
मायां लक्ष्मीं समुद्धृत्य सर्वपथिकदेवता। भ्यो हृन्मनुं समुच्चार्य अनेनोत्सृज्य साधकः ॥
उद्धृत्य वामहस्तेन भ्रामयेत् कलसोपरि। ततः क्षिप्त्वा वहिःस्थाने मूलमन्त्रं समुच्चरन् ॥
धूपयित्वा ततो द्रव्यं त्रिकारान्नाशयेत्ततः। मायां लक्ष्मीं पशुद्वन्द्वं सेन्दु दीर्घद्वयान्वितम् ॥ ७०
छुरिकाभेति शोभिनि विकारानस्य चान्तरम्। द्रवस्य हरयुग्मञ्च द्विठान्तं प्रजपेन्मनुम् ॥
विकारहारिणीं जप्त्वा चतुर्धा शोधनञ्चरेत्। अस्त्रेण ताड़नं कुर्याद्वर्मणाभ्युक्षणं ततः ॥
मूलेन वीक्षणं कृत्वा प्रोक्षयेद्धृदयेन तु। मूलेन गन्धमादाय वहन्नासापुटे त्रिधा ॥
द्रव्यमध्ये लिखेद्योनिं तन्मध्ये च हसौर्लिखेत्। हसौः सहौः नमोन्तेन पूजयेत् कुम्भमध्यके ॥
वाङ्माया कमलाः प्रोक्त्वा आनन्देश्वराय विद्महे। सुधादेव्यै धीमहीति तन्नोऽर्धनारीश्वरेति च ॥ ७५
प्रचोदयादिति जपेद् गायत्रीं दशधा सुधीः। मायावह्नियुतं कामं रतिविन्दुसमन्वितम् ॥
परमस्वामिनि पदं परमाकाश शून्य च। वाहिनि चन्द्रतः प्रान्ते सूर्याग्निभक्षिणीत्यपि ॥
पात्रं विश पदान्ते तु विश स्वाहा ततः परम्। त्रिधा च प्रजपेन्मन्त्रं ब्रह्मशापं विमोचयेत् ॥
वेदादि वारुणं वीजं षड़्दीर्घस्वरभेदितम्। ब्रह्मशापपदस्यान्ते विमोचिताञ्च ङेयुताम् ॥
सुधादेव्यै नमोऽन्तश्च दशधा प्रजपेन्मनुम्। मायां लक्ष्मीं क(म)दं सेन्दुं षड़्दीर्घस्वरवह्निमत् ॥ ८०
सुधाकृष्णस्वरूपान्ते शापं मोचय तत् परम्। अमृतं स्रावयद्वन्द्वं द्विठान्तं मनुमुत्तमम् ॥
दशधा परिसंजप्य कृष्णशापविमुक्तये। विषं विन्दुयुतं वान्तं दीर्घषट्कसमन्वितम् ॥
शुक्रशापपदं प्रोच्य विमोचितां तु ङेयुताम्। सुधादेव्यै हृदन्तञ्च दशधा संजपेन्मनुम् ॥
अथवान्यप्रकारेण शुक्रशापं विमोचयेत्। मायां कामेश्वरीं वाचं अमृते अमृतोद्भवे ॥
अमृतवर्षिणि प्रोक्त्वा कामवीजं ततोऽमृतम्। स्रावयद्वितयं शक्तिवीजं भार्गवमुद्धरेत् ॥ ८५

शापञ्च मोचय प्रोक्त्वा ज्ञानं देहि ततो वदेत् । सिद्धिसामर्थ्यमाभाष्य दद्युग्मं महापदं ॥
खेचरीपदतो मुद्रां तथा प्रकटयद्वयम् । अस्त्राय फट् द्विठान्तञ्च उद्धृत्य दशधा जपेत् ॥
अथवान्यत् प्रवक्ष्यामि शापत्रयविमोचनम् । सुराणाममृतं पूर्वं बलदेवेन धीमता ॥
समानीता प्रयत्नेन पानार्थं वारुणी सुरा । दत्तात्रेयेण मुनिना शुक्रेण च महात्मना ॥
धीमता बलभद्रेण पुरा पीतोत्थितार्णवात् । वारत्रयन्तु संजप्य पठेदन्यतमं मनुम् ॥ ९०
शिवशक्तियुतां वाणीं वरुणं क्षितिसंयुतम् । षड्दीर्घस्वरसम्भिन्नं नादविन्दुविभूषितम् ॥
अमृते अमृतोद्भवे अमृतवर्षिणीति च । सुराशुक्रशापं प्रोच्य मोचयद्वितयन्ततः ॥
अमृतं स्रावयद्वन्द्वं स्वाहा शापहरो मनुः ॥ दशधा परिसंजप्य शापत्रयं विमोचयेत् ॥
त्रिशापमोचनीं जप्त्वा प्रकाशयुक्तां ततो जपेत् । मायां लक्ष्मीं ततो वाचं अमृते अमृतोद्भवे ॥
अमृतवर्षिणि प्रोच्य महाप्रकाशयुक्तेऽपि च । द्विठान्तञ्च समुच्चार्य उच्चरेत् कुब्जिकान्ततः ॥ ९५
प्रेतबीजं समुच्चार्य हसक्लीं हसरीन्तथा । हसखफ्रेञ्च हसरीं भगवति ततो वदेत् ॥
अनुग्रहो हसप्रान्ते कुब्जिकेऽपि ततः परम् । सहखफ्रें युगं प्रोच्य सघोरेव ततो वदेत् ॥
घोरेखप्राञ्च खसप्रीञ्च किलद्वयसमन्वितम् ॥ विच्चेऽपि हसखान्नञ्च हसखल्लेञ्च हसरीं ॥
शिवशक्तिद्वयान्ते च मायां ह्स्त्रें ततो वदेत् । अनेन मनुना मन्त्री अमृतं परिचिन्तयेत् ॥
तिरस्करिणीं ततो ध्यायेत् पशुपाश विनाशिनीम् ।

नीलं हयं समधिरुह्य पुरः प्रयान्तीं
नीलांशुकाभरणमाल्यविलेपनाढ्याम् ।
निद्रापुटेन भुवनानि तिरोदधानां
खड्गायुधा भगवती परिपातु भक्तान् ॥ १००

एवं ध्यात्वा जपेद्विद्याद्वयञ्च साधकोत्तम । मायां लक्ष्मीं समुद्धृत्य नमो भगवतीति च ॥
माहेश्वरि पदस्यान्ते सर्वपशुजनोद्धरेत् । मनश्चक्षुस्तिरस्करिणीं कुरुद्वन्द्वञ्च ठद्वयम् ॥
अन्यतिरस्करिणीं वक्ष्ये मायां कामेश्वरोन्ततः । वाणीं ग्लैं तिरस्करिणि सकलेति जनेति च ॥
वाग्वादिनि पदस्यान्ते सकलपशु च ब्रूयात् । जनान्ते च मनश्चक्षुः श्रोत्रजिह्वापदन्ततः ॥
घ्राणोक्तिञ्च तिरस्कान्ते रिणीं कुरुद्वयन्ततः । ठद्वयञ्च सर्गयुतं द्विठान्तोऽयं महामनुः ॥ १०५
त्रिधा जप्त्वा च वीरेन्द्रस्त्रिकोणे चिन्तयेत्ततः । हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणं ॥
अकथादित्रिपङ्क्त्या तु हलक्ष मध्यमण्डितम् । इति सञ्चिन्त्य तत्पश्चाद्द्रव्यशुद्धिं समाचरेत् ॥
अथवान्यप्रकारेण द्रव्यशुद्धिं समाचरेत् ।

ॐ हंसः शुचिसद्वसुरन्तरीक्षसद्धोता वेदिसदतिथिर्दुरोणसत् ।
नृसद्वरसत् सद्वतोतिथिसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥
ऐं तृप्तोद्भवसिद्धोद्भव-सर्वज्ञोद्भव-सर्वजनकोद्भवाय अमृताय अमृतनाथाय

अमृतकुलकुम्भाय ऐँ फ्रेँ चल चल पिव पिव कुलकुण्डलिनि अमृतकुण्डलिनि
अमृतं द्रव द्रव निर्झर निर्झर ऐँ ह्रौँ कुलकुण्डलिनि अमृतं कुरु कुरु स्वाहा ॥

प्रथमं प्रणवं हंसः शुचीति तदनन्तरम् । सद्वसुरन्तरीक्षेति सद्धोता वेदिसेत्यथ ॥ ११०
दतिथिर्दुरोणसदित्यर्धमस्या ऋचो भवेत् । नृसद्वरसदित्युक्त्वा सदृतोऽतिथ्यनन्तरम् ॥
सद्व्योमसदब्जा गोजा ऋतजा अद्रिजा । ऋतं वृहदित्यर्द्धञ्च अस्या ऋच उदाहृतम् ॥
त्रिधा च संजपेन्मन्त्रं अथवान्यतमं जपेत् । वाक् च तृप्तोद्भवस्यान्ते सिद्धोद्भव ततः परम् ॥
सर्वज्ञोद्भव सर्वान्ते जनकोद्भव ङेयुतम् । अमृतायामृतं प्रोक्त्वा नाथाय पदतोऽमृत ॥
कुलकुम्भाय वाग्भवं फ्रें ततश्च चलयुग्मकम् । पिवद्वन्द्वं कुलं प्रोक्त्वा कुण्डलिनि ततो वदेत् ॥ ११५
अमृतपदतः कुण्डलिनीति अमृतं द्रव । द्वयं निर्झरयुग्मञ्च वाग्भवं भुवनेश्वरीम् ॥
कुलकुण्डलिनीं प्रोच्य अमृतं कुरुयुग्मकम् । द्विठान्तं मनुमुच्चार्य पाययित्वा च कुण्डलीम् ॥
शिवशक्तिसमायोगं चिन्तयित्वा च साधकः । तस्मात् सुधां समुत्पाद्य पूरयेत् पात्रमुत्तमम् ॥
अनेनैव विधानेन द्रव्यशुद्धिं समाचरेत् । कालिकाया विशेषञ्च वक्ष्येऽहं तन्त्रवर्त्मना ॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् । कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ १२०
सूर्यमण्डलसम्भूते वरुणालयसम्भवे । अमावीजमये देवि शुक्रशापाद्विमुच्यताम् ॥
वेदानां प्रणवो वीजं ब्रह्मानन्दमयं यदि । तेन सत्येन ते देवि ब्रह्महत्यां व्यपोहतु ॥
एवं मन्त्रत्रयेणैव अभिमन्त्र्य सुरां शुभाम् । प्रदद्यात् कालिकायै च ततो नैवेद्यभुग्भवेत् ॥
इति शुद्धित्रयं ज्ञेयं शापानां मोचनं परम् । एषामेकतमं कृत्वा ध्यायेदानन्दभैरवम् ॥
सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् । अष्टादशभुजं दे पञ्चवक्त्रं त्रिलोचनम् ॥ १२५
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् । वृषारूढं नी कण्ठं सर्वाभरणभूषितम् ॥
आकल्पखट्वाङ्गधरं घण्टाडमरुवादिनम् । पाशाङ्कुशधरं देवं गदामुषलधारिणम् ॥
खड्गखेटकपट्टीशमुद्गरशूलदण्डधृक् । खेटकमुण्डहस्तञ्च वरदाभयविग्रहम् ॥
लोहितं देवदेवेशं द्रव्यमध्ये नियोजयेत् । तस्योत्सङ्गे सुरां देवीं चन्द्रकोट्ययुतप्रभाम् ॥
हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम् । भुजाष्टदशसंयुक्तां सर्वायुधकरोद्यताम् ॥ १३०
प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम् । अथवान्यप्रकारेण सुरादेवीञ्च चिन्तयेत् ॥
चन्द्रांशुसदृशीं श्वेतां वारुणीं ब्रह्मरूपिणीम् । शिरश्चन्द्राद्विगलन्तीं ध्यायेत्तां परदेवताम् ॥
एवं ध्यात्वा ततो वीरः पूजयेन्मन्त्रमुच्चरन् । आनन्दभैरवं देवमानन्दभैरवीन्तथा ॥
शिवचन्द्राद्यवर्णन्तु कालभूवरुणानलम् । षष्ठस्वरान्वितं वायुं विन्दुनादविभूषितम् ॥
आनन्दभैरवायेति शिखामन्त्रं ततो वदेत् । ततः पूर्ववदुद्धृत्य विपरीतमुखं द्वयम् ॥ १३५
वायुवीजं वामनेत्रमानन्दभैरवीं ततः । ङेयुतां नेत्रमन्त्रञ्च कथितो मनुसत्तमः ॥
पूजयित्वा द्रव्यमध्ये वरुणां वसुधा जपेत् । मूलञ्चोपरि संजप्य अमृतं परिभावयेत् ॥

आवाहन्यादिमुद्राश्च दर्शयेत्तदनन्तरम्। आवाहनीं दर्शयित्वा स्थापनीं तदनन्तरम्।
सन्निधापनमुद्राञ्च तथाच सन्निरोधनीम्। अवगुण्ठनमुद्राञ्च विधाय साधकोत्तमः॥
अङ्गषट्कस्य मुद्राञ्च तालत्रयपुरःसरम्। दिग्बन्धनं प्रकुर्वीत छोटिकाभिरनन्तरम्॥
परमीकरणं कृत्वा अमृतीकरणञ्चरेत्। धेनुमुद्रामृतीकृत्य द्रव्यशुद्धिं समाचरेत्॥
आलोकाज्जिघ्रणाद्ध्यानात् स्नानाद्द्रव्यं विशुध्यति। द्रव्यस्नानं ततः कुर्याद्दक्षे कृत्वा च चुल्लकम्॥
द्रव्यस्य चुल्लकं दक्षकरे कृत्वा तु साधकः। वामनासाङ्गुष्ठयोगात् पूजाद्रव्येषु निक्षिपेत्॥
बिन्दुं क्षिप्त्वा स्ववक्त्रे च मार्जयेद्धस्तयुग्मकम्। हस्ताभ्यां मार्जयेद्देहं मूलमन्त्रं समुच्चरन्॥
एतत्तु कारणं दिव्यं सुरसङ्घनिषेवितम्। अतएव नाम तस्य सुरेति भुवनत्रये॥
सुरा दर्शनमात्रेण सर्वपापैः प्रमुच्यते। तद्गन्धाघ्राणमात्रेण शतक्रतुफलं लभेत्॥
मद्यस्पर्शनमात्रेण तीर्थकोटीफलं लभेत्। तथा तत्पानतः साक्षाल्लभेत् मुक्तिं चतुर्विधाम्॥
इच्छाशक्तिः सुरामोदे ज्ञानशक्तिश्च तद्रसे। तत्स्वादे च क्रियाशक्तिः चेतः शोधनसाधना॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये चतुर्थ उल्लासः॥ ४॥

---

## पञ्चम उल्लासः

अथातः संप्रक्ष्यामि मांसानि तन्त्रवर्त्मना । मांसञ्च त्रिविधं प्रोक्तं जलभूचरखेचरम् ॥
गोनरेभाश्वमहिषवराहाजमृगोद्भवम् । महामांसाष्टकं प्रोक्तं देवताप्रीतिकारकम् ॥
गोऽजेभाश्ववराहाणां माहिषं मृगखड्गयोः । एतन्मांसाष्टकं प्रोक्तं चण्डिकाप्रीतिकारकम् ॥
(यद्वा) अजाश्वावपि गण्डा च महिषश्चमरी तथा । वराहव्याघ्रभल्लूकशशकाः कूर्मकुक्कुटौ ॥
कृष्णसारश्च हरिणस्तथा चित्रमृगा अपि । मनुष्यो गवयश्चैव शल्लकी च विशेषतः ॥
हंसः पारावतश्चैव तथैव ग्रामकुक्कुटाः । विहिता बलयः प्रोक्ताश्चण्डिकाप्रीतिकारकाः ॥
एतेषां मांसदानेन सर्वसिद्धिः प्रजायते । एषामेकतमं लब्ध्वा तर्पणार्थं प्रकल्पयेत् ॥
मांससन्दर्शनेनापि सुरादर्शनवत् फलम् । पितृदैवतयज्ञेषु वेदे हिंसा विधीयते ॥
अन्यार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये । अनिमित्तं तृणं वापि छेदयेन्न कदाचन ॥
देवतार्थं द्विजं गाञ्च हत्वा पापैर्न लिप्यते । मांसं विनापि पूजायां पापं स्याच्च पदे पदे ॥
गन्धपुष्पाक्षतैः पूज्यमन्यथा नरकं व्रजेत् । हन्यान्मन्त्रेण चानेन त्वभिमन्त्र्य पशुं ततः ॥
शिवोत्कृत्तमिदं पिण्डमतस्त्वं शिवतां गतः । तद्बुद्धस्व पशो त्वं हि माशिवस्त्वं शिवोऽसि हि ॥
ब्रह्मा स्यात्पलले विष्णुर्गन्धे रुद्रश्च तद्रसे । परमात्मा तदानन्दे तस्मात् सेव्यमिदं प्रिये ॥
इति हत्वा पशुं पश्चात् चारु पक्वं समाचरेत् । पूजासु आममांसानि दद्याद्वै साधकः क्वचित् ॥
क्षते तु लोहितं शीर्णममृतं तत्तु जायते । संशोधयेत्तु मांसानि यथाशास्त्रप्रमाणतः ॥
मांसशुद्धिं प्रवक्ष्यामि शाक्तानां सिद्धिहेतवे । अस्त्रान्तमूलमन्त्रेण प्रोक्षयित्वा च साधकः ॥
चतुर्धा शोधनं कुर्यात् पूर्वोक्तेन तु वर्त्मना । शोषयेद्वायुबीजेन वह्निबीजेन संदहेत् ॥
शिवशक्तिसमायोगाद्वारुणेनामृतं कुरु । ततश्च संजपेन्मन्त्रं मांसानां शोधनाय च ॥
प्रणवं पूर्वमुच्चार्य प्रतद्विष्णुस्ततः परम् । स्तवते मृगो न भीमः संप्रोच्य कुचरो भवेत् ॥
गरिष्ठेति च यस्योरुषु त्रिषु प्रोक्तस्ततः परम् । विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वाः ॥
पूर्वोक्ता दर्शयेन्मुद्रा आवहन्यादिसंज्ञिका । मूलमन्त्रं जपेद्धीरः सप्तवारं ततः परम् ॥
मत्स्यानां शोधनं वक्ष्ये यथातन्त्रानुसारतः । पाठीनश्च बोदालश्च तथा शकुलशालकौ ॥
महाशकुलचित्रौ च खड्गी च जलवृश्चिका । अनेन विहिताः सर्वेऽपीमा मीनाः शुभप्रदाः ॥
आदौ कुर्वीत मीनञ्च पूर्ववत् प्रोक्षणादिकम् । जपेन्मन्त्रं ततः पश्चान्मीनानाञ्च विशुद्धये ॥
ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमाऽमृतात् ॥
शेषं पूर्ववदाचर्य मुद्राञ्च परिशोधयेत् । व्रैहेयं मण्डलाकारं चन्द्रबिम्बनिभं शुभम् ॥
चारु पक्वमनोहारि शर्कराद्यैः प्रपूरितम् । पूजाकाले देवताया मुद्रैषा परिकीर्त्तिता ॥
भ्रष्टधान्यादिकं यद्वयच्चर्वणीयं प्रकल्पयेत् । तस्याः संज्ञा स्मृता मुद्रा महामोदप्रवर्धिनी ॥
मुदं रातीति मुद्रा स्याद्येनैका मुष्टिभेदतः । मुद्राञ्च प्रोक्षयेदादौ शेषं पूर्ववदाचरेत् ॥

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ३०
ॐ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् ॥
इति संजप्य वीरेन्द्रः शेषं पूर्व्वं वदाचरेत् ॥
अथ वक्ष्ये च कुण्डोत्थं देवताप्रीतिकारकम् । मद्यकुम्भसहस्रैस्तु मांसभारशतैरपि ॥
नैव तुष्टिर्भवेद्देव्याः कुण्डगोलोद्भवं विना । भगलिङ्गात्मिका देवी भगलिङ्गामृतात्मिका ॥
शुक्ररूपा च शुक्रस्था रजोरूपा रजःस्थिता । विन्दुरूपा च विन्दुस्था रजोविन्दुस्वरूपिणी ॥ ३५
भगलिङ्गप्रिया देवी भगलिङ्गामृतप्रिया । भगलिङ्गामृतेनैव तस्मात्तां परिपूजयेत् ॥
वीरद्रव्यस्य पानेन परस्त्रीरमणेन च । भगलिङ्गामृतेनैव देवीं यश्च प्रपूजयेत् ॥
न दुःखं जायते तस्य सिद्धमन्त्रो भवेन्नरः । कुलस्त्रीकुलपुष्पैश्च कुलद्रव्यैः कुलामृतैः ॥
संपूज्य लभते कामानष्टसिद्धीश्च साधकः । विना कुलोद्भवैर्द्रव्यैः पूजयेद्यश्च चण्डिकाम् ॥
जन्मान्तरसहस्रस्य सुकृतं तस्य नश्यति । द्रव्यशोधनमाचर्य्य शक्तिशोधनमाचरेत् ॥ ४०
यथा द्रव्यं तथा शक्तिं समानीय यथाक्रमम् । स्नापितां प्रमदां दिव्यां हेतुयुक्ताञ्च दीक्षिताम् ॥
स्वकान्तां परकान्तां वा घृणालज्जाविवर्जिताम् । सालङ्कारां सुवेशाञ्च स्थापयेत्तु लिकोपरि ॥
न्यासजालं प्रकुर्वीत स्वकल्पोक्तविधानतः । मातृकान्यासमाचर्य्य कलान्यासं समाचरेत् ॥
ह्रीङ्कारन्तु ललाटे च क्लीङ्कारं वदने तथा । ऐङ्कारं हृदये चैव नाभौ ब्लुङ्कारमेव च ॥
स्त्रीङ्कारं विन्यसेद्गुह्ये पञ्चकामान् न्यसेद्बुधः । ऋष्यादिकं स्वकल्पोक्तं पाद्यादिभिस्ततो यजेत् ॥ ४५
द्राविणीं विन्यसेद्योनौ मूलविद्यां ततः परम् । आधारे हृदये चैव भ्रुवोर्मध्ये न्यसेत् क्रमात् ॥
पुनर्मूलं ब्रह्मरन्ध्रे न्यसेत् साधकपुङ्गवः । मूर्द्धादिपादपर्य्यन्तं न्यासं कुर्यात्ततः परम् ॥
मौलौ कुन्तलकर्षणं नयनयोराचुम्बनं गण्डयो
र्दन्तेनाधरपीडनं हृदि हतिर्मुष्ट्या च नाभौ शनैः ।
कुक्षौ कण्ठकपोलमण्डलकुचश्रोणीषु देया नखाः
सीमन्ते लिखनं नखैरसिजं गृहीत गाढं ततः ॥
कुर्वीताविरतं मनोभवगृहे मातङ्गलीला इव ।
जङ्घाङ्गुष्ठपदोरुगुल्फहननं चान्योऽन्यतः कामिनोः ॥ ५०
पाशवीजं वामनेत्रं कामवरुणभूयुतम् । एकादशस्वरेणाढ्यं चन्द्रविन्दुसमन्वितम् ॥
अमुकीं द्रावय स्वाहा विन्यसेत् साधकोत्तमः । वामा या चपलचित्ते रैतो मुञ्चद्वयं पठेत् ॥
वरुणं भूदक्षकर्णयुतञ्च कामवीजकम् । सोमवधूसमायुक्तं चन्द्रमन्त्यस्वरान्वितम् ॥
द्राविणीवीजं कथितं साधकानां हिताय च । तस्या योनौ न्यसेद्विद्यां रेत् थु मा तो च मै न त ॥
आत्मनि चिन्तयेद्देवीं शक्तिमाद्यास्वरूपिणीम् । निं घ येद्व ङ्गे यो न र्ष लि मूलमुच्चार्य साधकः ॥ ५५
धर्माधर्महवि र्दीप्त आत्माग्नौ मनसा स्रुचा । सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥

स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्त्तितः । ततो जपेत् स्त्रियं गच्छन् मुखे जिह्वामृतं पिबेत् ॥
कुलमद्यं समानीय वारुणेन च संस्कृतम् । वरुणं स्वरसंयुक्त पञ्चदीर्घसमन्वितम् ॥
वौं वरुणाय प्रणवं मन्त्रराजेन शोधितम् । मुहुर्मुहुः पिबेत् पानं शक्तिजिह्वाविलोड़ितम् ॥
आत्मनि देवीसंयोगाद्देवीभूतां विचिन्तयेत् । आत्मनि शक्तिसंयोगादेकीभूतां विचिन्तयेत् ॥
सूक्ष्मरूपकमात्मानं शक्तिं कुण्डलिरूपिणीम् । जिह्वां मूलमयीं चिन्त्य योनिश्च कुलरूपिणीम् ॥
कुलाकुलविभागेन आत्मानं नीयते त्वयि । शुद्धमन्त्रौषधेनैव रेत् म न ने: श्च प्र थ यो ॥
मध्यमाने पुनस्तस्या जायते तत्त्वमुत्तमम् । तत्त्वत्यागे पठेन्मूलं साधकः स्थिरमानसः ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा । धर्माधर्मकलास्नेहपूर्णं अग्नौ जुहोम्यहम् ॥
स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्त्तितः । शिवशक्तिसमायोगो यत्र यत्र प्रजायते ॥
तत्र तत्रैव संयोज्यं द्वयमेनं यथाक्रमात् । गृह्णीयात्तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं स्मृतम् ॥
इदं कुण्डोद्भवं द्रव्यं कथितं सुरदुर्लभम् । गोलोद्भवं प्रवक्ष्यामि वीराणां सिद्धिहेतवे ॥
कुलीनां दीक्षितां मत्तां पतिहीनां विचक्षणाम् । सालङ्कारां हेतुयुक्तामनपत्यां मनोरमाम् ॥
सुन्दरीं शोभनां क्षीणां पीनोन्नतपयोधराम् । साधकाकाङ्क्षहृदयां कलाशास्त्रविचारिणीम् ॥
न्यासादिकं प्रकुर्वीत स्वकल्पोक्तविधानतः । पूर्वोक्तक्रमयोगेन तत्त्वमुत्पादयेत् सुधीः ॥
तत्त्वं गृह्णीयात् यत्नेन पूजार्थं साधकोत्तमः । इदं गोलोद्भवं द्रव्यं देवतातृप्तिकारकम् ॥
ताम्रपात्रे गृहीत्वा तु तत्त्वद्रव्यं कुलोचितम् । नानागन्धसमायुक्तं कटुत्रयसमन्वितम् ॥
कुण्डगोलोद्भवादीनां शोधनञ्च प्रचक्ष्यते । शोधयेत् कुण्डगोलादीन् नयत्यर्चासमाहितः ॥
ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥
प्लुं ज्लुं ब्लुं ग्लुं ततः स्वाहा अमृतेति ततो वदेत् । अमृते अमृतोद्भवे अमृतवर्षिणीति च ॥
अमृतं स्रावय स्वाहा द्विरुच्चार्येत्यपि स्मरेत् । शेषं पूर्ववदाचर्य अथवान्यतमञ्चरेत् ॥
तारं कूर्चास्त्रमुच्चार्य शिवादित्रयविन्दुयुक् । वह्निजाया तारमाया श्रीवीजं सुरतिप्रिये ॥
तारमायारमास्त्रञ्च वह्निजायाञ्च वर्तुलन् । ततोऽमृतोद्भवायेति अमृतवर्षिणी परम् ॥
प्रिये देवि पदं शुक्रशापं मोचययुग्मकम् । वह्निजायान्तमन्त्रेण द्रव्यशुद्धिं समाचरेत् ॥
वीर्यमेतत् समादाय विशेषार्घ्ये नियोजयेत् । तेनामृतेन देवेशीं तर्पयेत् साधकोत्तमः ॥
सान्निध्यं जायते देव्याः सर्वकाममुपालभेत् । अचिरान्मृत्युमाप्नोति द्वन्द्वं कृत्वा नराधमः ॥
निर्विकल्पकचेतास्तु कुर्यादेवं समाहितः । शङ्कया जायते ग्लानिः शङ्कया दुःखभाजनम् ॥
शङ्कया सर्वहानिः स्याच्छङ्कया धनहानिता । शङ्कया सिद्धिहानिः स्यात्तस्माच्छङ्कां परित्यजेत् ॥
अथ वक्ष्यामि द्रव्याणां शक्तिभेदेन यद्भवेत् । स्वल्पाङ्गी दीर्घकेशी च साधकः शुद्धभावतः ॥
पुष्पगन्धा जवापुष्पैर्देवीं गन्धैश्च पूजयेत् । तस्याः पुष्पैः प्रयत्नेन सर्वकाममुपालभेत् ॥

दीर्घाङ्गी दीर्घनयना श्यामा विलज्जिता सदा। सुगन्धा सा सुरताद्यैर्विल्वपत्रैः सुगन्धिता॥
तस्याः पुष्पैः प्रयत्नेन देवीं सम्पूजयेत् पराम्। गौराङ्गी पुष्टजङ्घा या पुष्टहस्ता मदातुरा॥
मद्गन्धा च खार्जुरैः पलाशैः कुसुमैर्यजेत्। पुष्पगन्धा जगद्धात्री सा सदा कृष्णरूपिणी॥
कृशाङ्गी कृशमध्या च मधुदत्वा यजेत् पराम्। क्षीणाङ्गी च यदा कृष्णा दीर्घकेशी मदाकुला॥ ९०
तीव्रगन्धा च मन्दारैर्नारिकेलोद्भवैः सदा। पुष्टा खर्वाऽसिताङ्गी या सा भवेन्मदनाश्रया॥
मधुगन्धा च गौड़ीभिः पद्मपुष्पैर्यजेत् पराम्। कृशाङ्गी गौरदीर्घा या सा परा शिशुमालिना॥
साधकः पूजयेद्देवीं मल्लिकाभिर्विशेषतः। पुष्टा खर्वा सिताङ्गी या सेन्दीवरविकारकैः॥
अस्या मैथुनसम्भूतैः केतकीगन्धयोजितैः। क्षीणा दीर्घा च गौराङ्गी मालतीगन्धयोजिता॥
सा भवेदङ्कुशा नाम्नी तस्या मैथुनभावुकैः। वन्धूकैर्यदि गौराङ्गी यानङ्गमेखला शुभा॥ ९५
कर्पूरगन्धहारिद्रद्रव्यैस्तां परिपूजयेत्। आसां द्रव्यं गृहीत्वा तु तेनैव परिशोधयेत्॥
तत्तत्पुष्पैः प्रपूज्यैव सर्वसिद्धिमुपालभेत्। ज्ञात्वा नैवं क्रमं यो हि यदि देवीं प्रपूजयेत्॥
भवेद्धि विफलं सर्वं यज्ञेषु घृतवर्जितम्। यदुक्ता दशमी शक्तिः सङ्कीर्णवृत्तिसंस्थिता॥
गन्धमात्रन्तु गृह्णीयाद्वर्णमात्रं न भेदयेत्। स्वयं स्रष्टा स्वयं विष्णुः स्वयं देवो महेश्वरः॥
साधकानन्दभावेन यजेद्देवीं कुलक्रमे। गजाश्वानां वृषाजानां नराणां शोणितारुणैः॥ १००
कुण्डगोलोद्भवैर्मांसैः स्वयम्भूकुसुमैः सदा। मत्स्यैर्मद्यैश्च नैवेद्यैः प्रत्यक्षीक्रियते नरैः॥
चयांथुदिनेरामैम आतिभेदं न चाचरेत्। नाधर्मो जायते किञ्चिन्महामन्त्रस्य साधने॥
सर्वसिद्धिर्भवत्येव पञ्चतत्त्वनिवेदनात्। द्रव्यशुद्धेरभावेन नित्यं कर्म न लोपयेत्॥
प्रमादाद्यदि लुप्येत रौरवं नरकं व्रजेत्। मकारपञ्चकं कृत्वा पुनर्जन्म न विद्यते॥
अतएव महाप्राज्ञः पञ्चतत्त्वेन पूजयेत्। येनावश्यं विधातव्यं मदिरादानपूजनम्॥ १०५
नष्टैः पर्युषितोच्छिष्टैर्दुर्गन्धैर्गन्धवर्जितैः। हेतुभिः परपात्रस्थैस्तर्पणं निष्फलं भवेत्॥
आमिषासवसौरभ्यहीनं यस्य मुखं भवेत्। प्रायश्चित्ती स वर्ज्यश्च पशुरेव न संशयः॥
यावदासवगन्धः स्यात्तावत् पशुपतिः स्वयम्। विनालिमांसगन्धेन पशुः पशुपतिः स्वयम्॥
मत्स्यमांसविहीनेन द्रव्येणापि न तर्पयेत्। पिशितं तिलमात्रन्तु तिलार्धमपि विन्दुना॥
रक्तत्तर्पणमात्रेण यज्ञकोटिफलं लभेत्। रक्तवस्त्रैः समाच्छाद्य पञ्चतत्त्वन्तु रक्षयेत्॥ ११०
मकारपञ्चकैर्देवीं नार्चयेत् पशुसन्निधौ। संस्थापयेन्न दृक्षे च द्रव्यशुद्धिरितीरिता॥
एतत्तु कथितं द्रव्यं सर्वसिद्धिप्रदायकम्। द्विजानामनुकल्पन्तु न साक्षाच्च विकल्पिनाम्॥
अथातः संप्रवक्ष्यामि द्रव्यादिपरिकल्पनम्। ब्राह्मणस्ताम्रपात्रे तु मधु मद्यं प्रकल्पयेत्॥
अथवा ताम्रपात्रेषु गव्यं दद्याद्घृतं विना। नारिकेलोदकं कांस्ये गुड़ार्द्रकं तथैव च॥
गौड़ी देया क्षत्रियेण माध्वी वैश्येन तत्र वै। सर्वं शूद्रेण दातव्यं यत्र वा तद्रुचिर्भवेत्॥ ११५
(यद्वा) मत्स्यमांसादिविजया चाष्टगन्धैः सुमिश्रिता। संमद्यं वटिकां कृत्वा संगृह्याथ विचक्षणः॥

तदभावे तु वटिकां जले संलोड्य तर्पयेत् । गुड़मिश्रेण तक्रेण तर्पयेन्मधुयोजितम् ॥
सौवीरेणाथवा कुर्यादेतत्कर्म न लोपयेत् । मांसाभावे तु लसुनमार्द्रकं नागरन्तु वा ॥
शूरणं मांसवटकं मूलं वान्यतमञ्चरेत् । मांसानुकल्पं कथितं मीनस्याथ विधिं शृणु ॥
माहिषं गवयं क्षीरं अजाक्षीरं तथैव च । फलमूलञ्च यत्किञ्चिद्दग्धञ्चेदामिषं भवेत् ॥ १२०
मीनस्य कथितं कल्पं कुण्डगोलोद्भवं शृणु । अपरापुष्पगर्भे तु कुलस्थानं मनोरमम् ॥
सर्वसुखं भवेत्तत्तु महाकामकलात्मकम् । ह्यारिकुसुमे नित्यं स्वयमस्ति सदाशिवः ॥
तन्मुखे द्रव्यमादाय पुष्पमध्ये तु चन्दनम् । रक्तकुङ्कुमरागम्वा भिन्नं तत्त्वं शिवात्मकम् ॥
योजयेच्छिवशक्त्योस्तु ऐक्यं सम्भावयन् धिया । क्षणं विचिन्त्य तत्रैव संपूज्य परमेश्वरीम् ॥
जप्त्वा तदेव कुण्डोत्थं द्रव्यं परमदुर्लभम् । अन्तरादधिकं ज्ञेयं एतद्द्रव्यं सुदुर्लभम् ॥ १२५
यद्यच्च कथितं द्रव्यमनुकल्पं विकल्पिनाम् । आदाय पूजयेद्देवीमन्यथा निष्फलं भवेत् ॥
अकृत्वा पञ्चमे पूजां न लब्ध्वा गुरुसम्मतिम् । स्वहस्तेन पशुं हत्वा रौरवं नरकं व्रजेत् ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये पञ्चमोल्लासः ॥ ५ ॥

---

## षष्ठ उल्लासः

अथेदानीं प्रवक्ष्यामि अर्घ्यस्य विधिमुत्तमम् । गृहीत्वाज्ञां महादेव्या विशेषार्घ्यं समाचरेत् ॥
आत्मदेवीद्वयोर्मध्ये भूमौ चक्रं लिखेत्ततः । त्रिकोणञ्चैव षट्कोणं वृत्तं भूगृहसंयुतम् ॥
मध्ये मायां समालिख्य प्रोक्षयेत्तदनन्तरम् । अस्त्रान्तमूलमन्त्रेण सामान्यार्घ्यजलेन च ॥
आधारशक्तिमभ्यर्च्य पूजयेत् पीठदेवताः । चतुरस्रे पूर्णशैलमुड्डीयानं जलन्धरम् ॥
पूजयेत् कामरूपञ्च पूर्वादिक्रमयोगतः । अङ्गषट्कं यजेत्तत्र षट्कोणेषु च मन्त्रवित् ॥
मूलमन्त्रं त्रिकोणेषु संपूज्य साधकोत्तमः । आधारशक्तिं मध्ये च संपूज्य तदनन्तरम् ॥
अस्त्रेण क्षालिताधारं स्थापयेत्तत्र साधकः । आधारेण विना भ्रंशो न च तृप्यन्ति मातरः ॥
तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके । आधारं त्रिपदं प्रोक्तं षट्पदं वा चतुष्पदम् ॥
अथवा वर्तुलाकारं कुर्यादाधारमुत्तमम् । एषामन्यतमं स्थाप्य पूजयेत् कुलवर्त्मना ॥
पूर्ववन्मण्डलं कृत्वा संपूज्य तेन वर्त्मना । आदौ सेन्दुं महाकालं वह्निमण्डलं ङेयुतम् ॥
हृदन्तं मन्त्रमुच्चार्य आधारे पूजयेत्ततः । तत्र सम्पूजयेद्वह्नेः कलादशकं संज्ञया ॥
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी । सुश्रीः सुरूपा कपिला हव्यकव्यवहेऽपि च ॥
यादिसेन्दुक्षकारान्ता अब्जाद्याः परिकीर्तिताः । ङेयुता वै नमोऽन्ताश्च कला वह्नेरितीरिताः ॥
अस्त्रान्तमूलमन्त्रेण क्षालितं पात्रमुत्तमम् । स्वर्णरौप्यशिलाकूर्मकपालालावुमृण्मयम् ॥
नारिकेलशङ्खताम्रमुक्ताशुक्तिसमुद्भवम् । पुण्यवृक्षसमुद्भूतं पात्रं कुर्यान्मनोरमम् ॥

(यद्वा) काञ्चनरौप्यकाचताम्रजनितं मुक्ताकपालोद्भवं
विश्वामित्रमयञ्च कामदमिदं हैमं प्रियं स्फाटिकम् ।
भावप्रीतिमदष्टसिद्धिजनकं श्रीनारिकेलोद्भवं
कापालं स्फुटमन्त्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम् ॥

(यद्वा) सौवर्णरौप्यताम्राणि सर्वसिद्धिकराणि च । शान्तिके च शिलापात्रं स्तम्भे चैव तु मृण्मयम् ॥
नारिकेलं सर्ववश्ये मोक्षे चैव तु मौक्तिकम् । ज्ञानप्रदं कपालं स्यान्मारणे लौहमुत्तमम् ॥
कुर्यात् स्वर्णमयं पात्रं विश्वामित्रं कपालकम् । शङ्खं ज्ञानप्रदं मुक्ताशुक्तिविद्याप्रदायिनी ॥
कपालालावूपात्राणि योगसिद्धिकराणि च । पुण्यवृक्षजपात्राणि सर्वपापहराणि च ॥
उक्तेष्वेतेषु पात्रेषु पात्रमेकं प्रकल्पयेत् । षोडशाङ्गुलविस्तारं षडङ्गुलसमुच्छ्रयम् ॥
अथवापि तदर्द्धं स्यात्तदर्द्धं वापि कारयेत् । एकाङ्गुलं तथा सार्धं षट्कञ्च वै प्रमाणतः ॥
अतिसूक्ष्ममतिस्थूलं सच्छिद्रं परिवर्जयेत् । न योजयेद्भग्नपात्रं स्वप्रादेशं प्रशस्यते ॥
एषामेकतमं पात्रं स्थापयेत्त्रिपदोपरि । मण्डलं पूर्ववत् कृत्वा पूजयेत् पूर्ववर्त्मना ॥
सूर्यस्य मण्डलं तत्र चिन्तयित्वाथ पूजयेत् । स्वराद्यं विन्दुसहितं अर्कमण्डलं ङेयुतम् ॥
नमोऽन्तं मन्त्रमुच्चार्य पूजयित्वार्घ्यपात्रकम् । कलाः सम्पूजयेत्तत्र भानोर्द्वादशसंज्ञकाः ॥

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः। सुषुम्ना भोगदा विश्वा वोधिनी धारिणी क्षमा ॥
कभाद्याश्च ठडान्ता वै विन्दुयुक्ता यथाक्रमात्। वीजाद्याश्च कला ज्ञेयाश्चतुर्थ्याद्या नमोऽन्विताः ॥
इमाः कलाः सुसम्पूज्याः पात्रञ्च पूजयेत्ततः। रक्तचन्दनपुष्पैश्च सुगन्धैः सुमनोहरैः ॥
ततश्च पूरयेत् पात्रं त्रिभागं कुम्भहेतुना। वरुणं मूलमन्त्रञ्च विलोममातृकां पठन् ॥
जलेन भागमकेन्तु पूरयेत् साधकोत्तमः। तत्र दूर्वाक्षतारक्तपुष्पचन्दनसंयुतम् ॥
पूर्वोद्धृतं कुण्डगोलं विल्वपत्रं क्षिपेत्ततः। मांसं मत्स्यं विनिक्षिप्य मुद्राञ्चैव विशेषतः ॥
नानासुगन्धिकञ्चैव नवरत्नं विनिक्षिपेत्। एलालवङ्गकक्केलजातीफलसमन्वितम् ॥
चन्द्रचन्दनकस्तूरीरोचनागुरुकुङ्कुमम्। स्वयम्भुकुसुमं कुण्डगोलोत्थञ्चाष्टगन्धकम् ॥
तत्र क्षिप्त्वा च वीरेन्द्रः पूजयेच्चन्द्रमण्डलम्। सविन्दुं वामकर्णञ्च सोममण्डलं ङेयुतम् ॥
हृदन्तं मनुमुच्चार्य पात्रमध्ये प्रपूजयेत्। कला सोमस्य तत्रैव द्विरष्टसंख्यका यजेत् ॥
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः। शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥
पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः। अकाराद्या विन्दुयुता ङेयुताश्च नमोऽन्तिकाः ॥
पूज्याः सर्वाः प्रयत्नेन कला ज्ञेया किशोरिमाः। पूर्ववत्तीर्थमावाह्य पूर्ववन्मण्डलं लिखेत् ॥
पूर्ववन्मन्त्रमुच्चार्य आनन्दभैरवं यजेत्। आनन्दभैरवीं देवीं तत्र संपूज्य देशिकः ॥
निजेष्टदेवतां तत्रावाहयेच्च ततः परम्। आवाहन्यादिमुद्राश्च साधको दर्शयेत्तत. ॥
स्वकल्पोक्तविधानेन मुद्राः सन्दर्शयेत्ततः। दर्शयित्वा ततो मुद्रामिष्टदेवं यजेत्ततः ॥
पूर्ववच्च षडङ्गानि त्रिकोणानि प्रपूजयेत्। अकथादित्रिरेखायां मध्ये मायां समालिखेत् ॥
हसौ मध्ये च संलिख्य पूर्वादिचातुरस्त्रिके। सम्पूजयेत्ततः पश्चात् पञ्चरत्नं सुसाधकः ॥
पञ्चान्तकं क्षितियुतं दक्षकर्णसमन्वितम्। गगनान्ते च रत्नेभ्यो नमोऽन्तमनुमुद्धरेत् ॥
शीतलं शक्रसंयुक्तमग्रविन्दुविभूषितम्। स्वर्गपदं समुच्चार्य रत्नेभ्यो नम इत्यपि ॥
पञ्चमं देवराजञ्च दक्षश्रोत्रसमन्वितम्। पातालपद रत्नेभ्यो नमोऽन्तश्चापरो मनुः ॥
महाकालं क्षितियुतं दक्षकर्णसमन्वितम्। मर्त्यरत्ने ततः पश्चाद्भ्यो नमोऽत्र समुद्धरेत् ॥
वामपादं क्षितियुतं दक्षश्रवणभूषितम्। नागपदं समुच्चार्य रत्नेभ्यो नम इत्यपि ॥
इति मध्ये सुसम्पूज्य त्रिरेखासु ततः परम्। वाग्भवान्ते च दिव्यौघं गुरुसंज्ञाञ्च पादुकाम् ॥
पूजयामि ततः पश्चादेवम्विधं त्रयं यजेत्। सिद्धौघं मानवौघञ्च पूजयित्वा मनुं जपेत् ॥
अखण्डैकरसानन्दकरे परसुधात्मनि। स्वच्छन्दस्फुरणामत्र निधेह्यकूलरूपिणि ॥
अकुलस्थामृताकारे शुद्धिज्ञानकरे परे। अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥
तद्रूपेणैकरस्यञ्च दत्त्वा ह्येतत्स्वरूपिणि। भूत्वा परामृताकारं मयि चित्स्फुरणं कुरु ॥
इति मन्त्रत्रयेणैवमभिमन्त्र्य ततः परम्। ब्रह्माण्डखण्डसम्भूतमशेषरससम्भवम् ॥
आपूरितं महापात्रं पीयूषरसमावह। वाग्भवं पञ्चमं क्षौणीं वामश्रोत्रसमन्वितम् ॥

क्षौं जूं सं अमृतेऽमृतोद्भवेऽमृतेश्वरि । अमृतवर्षिणि प्रोच्य अमृतं स्रावयद्वयम् ॥
वह्निजायान्तमुच्चार्य चोद्धरेदपरन्ततः । वाग्भवं वदयुग्मञ्च वाग्वादिनि ततः परम् ॥
वाङ्मनः पदमाभाष्य क्लिन्ने क्लेदिनि तत्परम् । क्लेदयद्वितयं महामोक्षं कुरुद्वयं वदेत् ॥
कामबीजं शक्तिबीजं मोक्षं कुरुद्वयं वदेत् । प्रेतबीजं समुच्चार्य ह्सौंर्नमस्ततः परम् ॥ ६०
अनेनैव विधानेन अभिमन्त्र्य ततः परम् । आनन्दभैरवं देवमानन्दभैरवीमपि ॥
त्रिवारं मूर्ध्नि सन्तर्प्य मुद्राः सन्दर्शयेत्ततः । पूर्वोक्ताश्चातुरस्राद्याः शङ्खमुद्रां ततः परम् ॥
वामाङ्गुष्ठञ्च संगृह्य दक्षिणेन तु पाणिना । कृतोत्तानां तथा मुष्टिमङ्गुष्ठञ्च प्रसारयेत् ॥
वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः सुप्रसारिताः । दक्षिणाङ्गुष्ठ संस्पृष्टा मुद्रैषा शङ्खसंज्ञिका ॥
अधोमुखं दक्षपाणिं वामञ्चैव तथाविधम् । उपर्युपरियोगेन मिलिताः सरलाङ्गुलीः ॥ ६५
अङ्गुष्ठौ चालयेत् किञ्चिन्मुद्रैषा मत्स्यसंज्ञिता । मत्स्यमुद्राञ्च सन्दर्श्य धेनुमुद्राञ्च दर्शयेत् ॥
अवगुण्ठ्य ततः पश्चात् योनिमुद्रां च दर्शयेत् । त्रितालछोटिकाभिश्च दिग्बन्धनं ततश्चरेत् ॥
अष्टधा मूलविद्यां च जप्त्वा तु चिन्तयेत्ततः । इष्टदेवस्वरूपञ्च विभाव्य साधकोत्तमः ॥
आद्यर्घस्य स्थापनं प्रोक्तं सर्वशास्त्रेषु सिद्धिदम् । तथाच सिद्धविद्यानामाचारः कथ्यतेऽधुना ॥
ततः शङ्खं वीरपात्रं स्थापयेन्मध्यभागतः । श्रीविद्योक्तविधानेन ततः पूजां समाचरेत् ॥ ७०
त्रिसर्जनावधि वीरो नोद्धरेन्न च चालयेत् । तस्माद्बिन्दुं विनिक्षिप्य सामान्यार्घ्ये ततः परम् ॥
देव्यर्घ्यकुम्भयोर्मध्ये पात्राणि स्थापयेद् यथा । गुरोः पात्रं घटस्यान्ते तदन्ते भोगपात्रकम् ॥
तदन्ते शक्तिपात्रञ्च योगिनीनां तदन्तिके । तदन्ते वीरपात्रञ्च बलिपात्रं तदन्तिके ॥
पाद्यमाचमनीयञ्च पात्राणि स्थापयेद्बुधः । उत्तमं नवपात्राणि सप्तपात्राणि मध्यमम् ॥
केचिद्वदन्ति मन्त्रज्ञाः पञ्चपात्राणि मध्यमम् । अधमं तानि पात्राणि एकपात्रं न कारयेत् ॥ ७५
एकपात्रं न कुर्वीत यदि साक्षात् कुलेश्वरः । मन्त्राः पराङ्मुखा यान्ति विघ्नाश्चैव पदे पदे ॥
इह लोके च दारिद्र्यं मृते च पशुतां व्रजेत् । देवीपात्रं गुरोः पात्रं भोगपात्रं त्रयं मतम् ॥
पूजापात्रं बलेः पात्रं पञ्चपात्रेष्वयं विधिः । शक्तेः पात्रं वीरपात्रं सप्तपात्रेष्वयं विधिः ॥
पूजापात्रञ्च विज्ञेयं योगिनीनाञ्च पूजने । पाद्यमाचमनीयञ्च नवपात्रेष्वयं विधिः ॥
पात्राणां स्थापनं वक्ष्ये यथातन्त्रविधानतः । कुम्भस्य दक्षिणे कुर्यात्त्रिकोणं वृत्तभूगृहम् ॥ ८०
पूर्ववत् प्रोक्षणादिञ्च कृत्वाधारं विनिक्षिपेत् । तत्र सम्पूजयेद्वह्निमण्डलं तदनन्तरम् ॥
प्रक्षाल्य पूर्ववत् पात्रं आधारे स्थापयेत्ततः । अभ्यर्च्य मण्डलन्तत्र सूर्यस्य पूरयेत्तत. ॥
कुम्भामृतेन संपूज्य सोमस्य मण्डलं यजेत् । कुण्डगोलं क्षिपेत्तत्र कुसुमं गन्धचन्दनम् ॥
षट्कोणं वृत्तभूपूरं लिखित्वा पूजयेत्ततः । अङ्गषट्कं कोणषट्कं मुद्राः पूर्ववदाचरेत् ॥
दिग्बन्धनं विधायाथ तालत्रयपुरःसरम् । अष्टधा मूलमन्त्रञ्च जप्त्वा बिन्दुं क्षिपेत्ततः ॥ ८५
विशेषार्घ्यस्य वीरेन्द्रो गुरूंश्च परितर्पयेत् । स्वस्वनामयुतात् दिव्यान् सिद्धमानवसंज्ञकान् ॥

तर्पयित्वा स्वीयमूर्ध्नि मुद्रया तत्त्वसंज्ञया। अङ्गुष्ठानामिकाभ्याञ्च वामहस्तस्य सर्वदा॥
कथिता तत्त्वमुद्रेयं योजिता तर्पणे बुधैः। गुरुं परगुरुञ्चैव परापरगुरुन्तथा॥
परमेष्ठिगुरुञ्चैव तर्पयेत्तदनन्तरम्। विशेषार्घ्यामृतेनैव तर्पयेन्निजदेवताम्॥
पञ्चधा सप्तधा वापि हृत्सरोजे तु साधकः। गुरूणां पात्रदक्षे च भोगपात्रं प्रकल्पयेत्॥
पूर्ववत् पात्रं संस्थाप्य तत्त्वशुद्धिं समाचरेत्। भोगपात्रामृतेनैव संमार्ज्य करयुग्मकम्॥
दक्षकरे सवृत्तञ्च नवयोनिं समालिखेत्। कलायसदृशं तत्र क्षिपेच्छुद्धिचतुष्टयम्॥
अङ्गुष्ठमध्यमानामायोगैरेकञ्च धारयेत्। वामहस्तस्य विप्रेन्द्रः स्वीकुर्यात्तदनेन तु॥
मायाञ्च कमलाबीजं शिवशक्तिसदाशिवं। ङेन्तं विद्याकलात्मानं सबिन्दुं षोडश स्वरम्॥
उच्चार्य वाग्भवं मूलं आत्मतत्त्वेन तत्परम्। स्थूलदेहं ततः पश्चात् शोधयामि पदात् द्विठः॥
अनेनाधःशुद्धिखण्डं स्वीकृत्य तदनन्तरम्। मायां लक्ष्मीं ततो मायाकलानियतिशब्दतः॥
कलात्मशुद्धविद्याश्च रागश्च पुरुषात्मने। कादिपञ्चकवर्गञ्च बिन्दुयुक् कामबीजकम्॥
मूलमन्त्रं ततो विद्यातत्त्वेन सूक्ष्मदेहकम्। शोधयामि ततः स्वाहा स्वीकुर्यादपरन्ततः॥
लज्जां लक्ष्मीं प्रकृत्यहङ्कार बुद्धिमनःश्रोत्रत्वक्। चक्षुस्ततोरसनाघ्राणवाक्पाणिपदन्तथा॥
पायूपस्थपदं शब्दस्पर्शरूपं ततो रसः। गन्धाकाशपदं वायुतेजः सलिलशब्दतः॥
भूम्यात्मने समुच्चार्य बिन्दुयुग्यादिवर्णकम्। शक्तिबीजं समन्त्रञ्च शिवतत्त्वेन तत्परम्॥
परं देहं शोधयामि स्वाहा चैव तृतीयकम्। स्वीकृत्य च पुनर्मायां लक्ष्मीबीजं समुच्चरेत्॥
पुनः शिवादिकं प्रोच्य मायादिकं ततः परम्। प्रकृत्यादिकमुच्चार्य पञ्चाशन्मातृकान्ततः॥
बालाञ्च मूलविद्याञ्च सर्वतत्त्वेन तत्परम्। तत्त्वत्रयाश्रितं जीवं शोधयामि ततः स्वाहा॥
स्वीकुर्यादमुना युग्मं दक्षवामक्रमेण तु॥

ॐ आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि
सोऽहमस्मि ब्रह्माहमस्मि अहमस्मि अहमेवाहं मां जुहोमि स्वाहा॥
ॐ तामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि
तन्मामवतु तद्वक्तारमवतु अवतु माम् अवतु वक्तारं स्वाहा॥
ॐ छन्दसामृषयो गावो यच्छन्दोह्यमृता भुवसामन्द्रोः
मेधया स्पृणोतु भुवि स्रुवं मेणोपायतु स्वाहा॥

वाससा करयुग्मञ्च स्पृष्ट्वा देहञ्च शोधयेत्। पाणिभ्यां सर्वदेहञ्च प्रोञ्छयेदिति शोधनम्॥
क्षालयेद्धस्तयुगलमथवान्यतमञ्चरेत्॥
ॐ प्राणापानव्यानोदानसमाना मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा॥
ॐ पृथिव्यप्तेजोवाय्वाकाशानि मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा॥
ॐ प्रकृत्यहङ्कारबुद्धिमनःश्रोत्राणि मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा॥

ॐ त्वक्चक्षुर्जिह्वाघ्राणवचांसि मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥
ॐ पाणिपादपायूपस्थशब्दा मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ ११५
ॐ स्पर्शरूपगन्धरसाकाशानि मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥
ॐ वायुतेजःसलिलभूम्यात्मानो मे शुध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥
सप्तमन्त्रमिदञ्चैव पठेत्तत्त्वविशुद्धये ॥
तत्त्वशुद्धिं विधायाथ स्थापयेच्छक्तिपात्रकम् । योगिनीनाञ्च संस्थाप्य वीरपात्रं ततः परम् ॥
बलिपात्रं ततः पश्चात् पाद्यपात्रञ्च सन्दिशेत् । आचमनीयपात्रञ्च पूर्ववत् स्थापयेद्बुधः ॥ १२०
योगिनीपात्रतत्त्वेन तर्पयेद्रश्मिवृन्दकम् । बलिपात्रामृतेनैव वटुकादींश्च तर्पयेत् ॥
तत्तदभावतो वीरः सामान्यार्घ्येण तर्पयेत् । देवीपात्रामृतं विन्दुं पूजाद्रव्योपरि क्षिपेत् ॥
आत्मदेहञ्च संप्रोक्ष्य भावयेद्देवतामयम् । भोगपात्रामृतं विन्दुं स्वीकुर्यात्तदनन्तरम् ॥
अथातः संप्रवक्ष्यामि बलिपञ्चकमुत्तमम् । यायन्नो वटुके दद्यात् योगिन्यां सर्वभूतके ॥
क्षेत्रपाले तथा राजराजेश्वरे च साधकः । अकृत्वा बलिदानं हि कथं पूजां समाचरेत् ॥ १२५
अदत्त्वा क्षेत्रपालाय कथं क्षेत्रेषु पूजयेत् । अदत्त्वा वटुकादीनां यः पूजयति चण्डिकाम् ॥
पूजा च विफला तस्य देवीशापः प्रजायते । दक्षिणे वटुके देयः उत्तरे योगिनीबलिः ॥
सर्वभूते बलिं दद्यात् क्षेत्रपालस्य पश्चिमे । राजराजेश्वरे मध्ये बलिं दद्यात् सुसाधकः ॥
दक्षिणादिचतुर्दिक्षु पूर्ववन्मण्डलं लिखेत् । प्रोक्षणं पूर्ववत् कृत्वा वटुकं तत्र चिन्तयेत् ॥
करकलितकपालः कुण्डली दण्डपाणिः तरुणतिमिरनीलो व्यालयज्ञोपवीती ।
क्रमसमयसपर्याविघ्नविच्छेदहेतुर्जयति वटुकनाथः सिद्धिदः साधकानाम् ॥ १२०
इति ध्यात्वा तु संपूज्य पूर्वोक्तबलिमाचरेत् । अङ्गुष्ठानामिकाभ्याञ्च वटुकस्य बलिं हरेत् ॥
विषं माया रमा देवीपुत्रवटुकनाथतः । पिङ्गलपदतो जटाभास्वर प्रोच्य पिङ्गल ॥
त्रिनेत्र च इमं बलिं पूजां गृह्णयुगन्ततः । वह्निजायान्तमुच्चार्य वटुकस्य महात्मनः ॥
अनेन बलिमुत्सृज्य योगिनीश्चिन्तयेत्ततः ॥
योगिन्यः कामरूपा निखिलगुणयुतास्तप्तकान्तस्वभावा
मत्ताः कङ्कालमालाकलितकुचतटी रक्तवस्त्रोत्तरीयाः ।
लिङ्गं पाशं कपालं शृणिमपि दधतः सुस्मिताः सुप्रसन्ना
भक्तानां साधकानामभिलषितफलं दीयमानाः सुवेशाः ॥ १३५
एवं ध्यात्वा प्रपूज्यैव पश्चादपि बलिं ददेत् । अङ्गुष्ठमध्यमानामा योगिनीभ्यो बलिं हरेत् ॥
तारं लज्जां रमां सर्वसिद्धिञ्च योगिनीभ्यः । सर्वाभ्यो मातृकाभ्यश्च इत्युत्सृज्य बलिं ददेत् ॥
विषं मायां ततः सर्वभूतेभ्यश्च ततः परम् । सर्वभूतपतिं प्रोच्य भ्यो नमोऽन्तं समुच्चरेत् ॥
सर्वभूतबलिं दत्त्वा क्षेत्रपालबलिं हरेत् । ततः सञ्चिन्तयेत् क्षेत्रनायकं सिद्धिहेतवे ॥

निर्वाणं निर्विकल्पं निरुपमसकलं निर्विकारं क्षकारं
हुङ्कारं वज्रदंष्ट्रं हुतवहवदनं रौद्रमुन्मत्तभावम् ।
फट्कारं बद्धनागं भ्रुकुटितटमुखं भैरवं शूलपाणिं
खट्वाङ्गं व्योमनीलं डमरुकसहितं क्षेत्रपालं नमामि ॥ १४०

इति ध्यात्वा तु संपूज्य बलिं पश्चान्निवेदयेत् । विप्रं मायां रमाबीजं क्षकारं विन्दुभूषितम् ॥
षड्दीर्घस्वरसम्भिन्नं स्वस्थान क्षेत्रपाल च । इमं बलिं पदस्यान्ते पूजां गृह्णयुगन्ततः ॥
स्वाहान्तमन्त्रमुच्चार्य क्षेत्रपालबलिं दिशेत् । क्षेत्रपालबलिं दत्त्वा मध्ये दद्यात्ततः परम् ॥
इत्युत्सृज्य बलिं दद्याद्राजराजेश्वराय च । बलिपात्रामृतेनैव तर्पयेद्वटुकादिकम् ॥
एकत्र वा पञ्चबलिं दद्याद्व्यापकमण्डले । वामभागे स्थिते चैव सर्वविघ्नहरो भवेत् ॥ १४५
दक्षिणे वटुकं दद्यादुत्तरे योगिनीबलिम् । पूर्वे भूतबलिं दद्यात् क्षेत्रपालस्य पश्चिमे ॥
राजराजेश्वरं मध्ये बलिं दद्यात् सुसाधकः ॥

इति श्रीज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये षष्ठोल्लासः ॥ ६ ॥

---

## सप्तम उल्लासः

अथ वक्ष्ये च पूजाया विधानं यत्र यद्भवेत् । पूजादौ च जपादौ च जपस्यान्ते तथैव च ॥
पूजान्ते चाग्निकार्यान्ते प्राणायामत्रयं चरेत् । प्राणायामषडङ्गञ्च कृत्वा साधकसत्तमः ॥
पीठपूजां प्रकुर्वीत स्वकल्पोक्तविधानतः । स्वकल्पोक्तविधानेन ध्यात्वा देवीं समाहितः ॥
हृत्सरोजात् समानीय नासापुटपथा सुधीः । तेजोमयीं महादेवीं दीपाद्दीपान्तरं यथा ॥
पुष्पाञ्जलौ ततः पश्चान्मन्त्रमध्ये समानयेत् । आवाहन्यादिमुद्राश्च दर्शयेत्तदनन्तरम् ॥
ऊर्ध्वाञ्जलिमधः कुर्यादियमावाहनी भवेत् । इयन्तु विपरीता चेत्तदा वै स्थापनी भवेत् ॥
मिलितं मुष्टियुगलं सन्निधापनरूपिणी । अन्तरङ्गुष्ठमुष्टिभ्यां सन्निरोधनरूपिणी ॥
एतस्या एव मुद्रायास्तर्जन्यौ सरले यदि । अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः । अन्योऽन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुलिः ॥
महामुद्रेति कथिता परमीकरणे बुधैः । परिवृत्य करौ पश्चात् तर्जनीमध्यमायुगम् ॥
कनिष्ठानामिकायुग्मं परस्परयुतं कुरु । धेनुमुद्रेयमाख्याता अमृतीकरणे बुधैः ॥
स्वस्वकल्पोक्तविधिना मुद्राः सन्दर्शयेत्ततः । दर्शयित्वा ततो मुद्रां तालत्रयपुरःसरम् ॥
छोटिकाभिर्दिग्बन्धनं कृत्वा जीवं न्यसेत्ततः । लेलिहामुद्रया यन्त्रं स्पृष्ट्वा पञ्चकुशेन वा ॥
तर्जनीमध्यमानामाः समं कृत्वा अधोमुखम् । अनामायां क्षिपेद्वृद्धां ऋजुं कृत्वा कनिष्ठिकाम् ॥
लेलिहेति च विख्याता जीवन्यासे प्रकीर्तिता । मूलमन्त्रेण दीप्तात्मा अर्घ्यद्रव्योदकेन च ॥
त्रिवारं प्रोक्षयेद्धीमान् देवशुद्धिरितीरिता । ततः सम्पूजयेद्देवीं षोड़शैरुपचारकैः ॥
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानवसनाभरणानि च ॥
गन्धपुष्पे तथा धूपदीपनैवेद्यवन्दनाः । (अथवा) पाद्यार्घ्याचमनस्नानवसनाभरणानि च ॥
गन्धपुष्पे धूपदीपनैवेद्याचमनं ततः । ताम्बूलमर्चनास्तोत्रं तर्पणञ्च ततः परम् ॥
अर्घ्यं पाद्यं निवेद्याथ तथैवाचमनीयकम् । मधुपर्काचमनञ्च गन्धप्रसूनके ततः ॥
धूपदीपौ च नैवेद्यं दशोपचारकं स्मृतम् । गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका ॥
उत्तमा मध्यमा चैव बुधैरुक्ताऽधमा क्रमात् । अभावे पुष्पतोयाभ्यां पत्रेण तदभावतः ॥
तदभावे सर्षपेण श्वेतेनाऽपि विशेषतः । तदभावेऽक्षतेनैव दूर्वया तदभावतः ॥
अभावे वारिणा वापि तदभावे च मानसैः । मूलान्ते देवतानाम ङेयुतञ्च समुद्धरेत् ॥
देयद्रव्यपदोल्लेखं कृत्वा च तदनन्तरम् । हृदयेन तु पाद्यञ्च शिरसार्घ्यं निवेदयेत् ॥
वारुणेनाचमनं प्रोक्तं तेनैव मधुपर्ककम् । शिखामन्त्रेण गन्धञ्च पुष्पं नेत्रेण दापयेत् ॥
निवेदयामि वदने दद्यात् सर्वं सुसाधकः । पाद्यादिकं निवेद्याथ स्नानीयञ्च निवेदयेत् ॥
ततश्च पादुके दत्त्वा सुरक्ते स्नानमन्दिरे । नानारत्नसमायुक्तस्वर्णसिंहासनान्विते ॥
तत्रानीय महादेवीं साधकः शुद्धभावतः । घृतेनोद्वर्तनं कार्यं मनसा तदनन्तरम् ॥

सुगन्धिदिव्यतैलेन देवकन्यासहस्रकैः । सहस्रैः स्वर्णकुम्भैश्च सुगन्धजलपूरितैः ॥
आसिञ्चेद्भक्तिभावेन भवानीं भक्तवत्सलाम् । नानातीर्थोदकैः शुद्धैर्गन्धराजसहस्रकैः ॥
नागकन्यासहस्रैस्तु किन्नरैरप्सरोगणैः । पञ्चामृतैः पञ्चगव्यैः स्नापयेत्तदनन्तरम् ॥
नारिकेलोदकेनैव तथेक्षुवारिणा ततः । सप्तमृत्तिकया युक्तशीतलेन जलेन च ॥
शीतलोष्णोदकेनैव तथा रत्नोदकेन च । सुवासितजलेनैव देव्याः स्नानं समाचरेत् ॥
सहस्रशीर्षामन्त्रेण पावमान्या तथैव च । भृङ्गाराष्टककुम्भैस्तु देव्याः स्नानं विधाय च ॥
ततः शुद्धैर्दुकूलैश्च गात्रमार्जनमाचरेत् । कार्पासं वाल्कलं वार्क्षं कोषजं वस्त्रमिष्यते ॥
रक्तकौपेयवस्त्रञ्च महादेव्यै प्रशस्यते । सपीताम्बरकौपम्वा स्वदेवाय च उत्सृजेत् ॥
विचित्रं सर्वदेवेभ्यो दिव्यांशुकं निवेदयेत् । नीलरक्तन्तु यद्वस्त्रं तत्सर्वत्र विवर्जयेत् ॥
विचित्ररागविपुलं लग्नहीनं विवर्जयेत् । वस्त्रं दद्यान्महादेव्यै नान्यस्मै तु कदाचन ॥
रक्तवस्त्रं रक्तमाल्यं रक्तालङ्करणन्तथा । दत्त्वाऽङ्गलेपनं कार्यं गन्धचन्दनसिह्लकैः ॥
पुनश्च पादुके दत्त्वा मनोरमे सुसाधकः । यन्त्रमध्ये समानीय नमस्कुर्यात् समाहितः ॥
पुनः पाद्यादिकं दत्त्वा पूजयेद्विधिपूर्वकम् । यथोत्पन्नं फलं पुष्पं तथा दद्याच्च पत्रकम् ॥
पुष्पाञ्जलिप्रदानेन न भवेन्नियमस्त्वयम् । नाधोमुखं फलं दद्यादिति शास्त्रस्य निर्णयः ॥
ज्ञानाख्यमुद्रया चैव पूजयेत् परमेश्वरीम् । अङ्गुष्ठतर्जनीभ्यान्तु ज्ञानमुद्रा प्रकीर्तिता ॥
मध्यमानामिकाभ्यान्तु अङ्गुष्ठाग्रेण साधकः । दद्याच्च विमलं गन्धं मूलमन्त्रेण पूर्ववत् ॥
यथा गन्धं तथा चैव धूपं दद्याद्विचक्षणः । मध्यमानामिकाभ्यान्तु मध्यपर्वणि देशिकः ॥
अङ्गुष्ठाग्रेण धूपञ्च धृत्वा च विनिवेदयेत् । उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ॥
अनामिकाङ्गुष्ठयोगे नैवेद्यन्तु निवेदयेत् । अन्यत् सर्वं स[illegible]वीरः प्रदद्याज्ज्ञानमुद्रया ॥
दधिमधुघृतेनैव मधुपर्कः प्रकीर्तितः । पायसं कृशरं दद्यात् [illegible]न्नं मधुसंयुतम् ॥
पिष्टकं मोदकञ्चैव दुग्धं दधि तथा फलम् । ताम्बूलञ्च ततो दद्यात् कर्पूरादिसुवासितम् ॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरा । पुनर्माल्यं प्रदातव्यं गन्धचन्दनपङ्कजम् ॥
दर्पणं चामरं छत्रं पादुकाञ्च निवेदयेत् । विधिवत् पूजनं कृत्वा तर्पयेत्तत्त्वमुद्रया ॥
अङ्गुष्ठानामिकायोगाद्वामहस्तस्य सर्वदा । अङ्गुष्ठे भैरवो देवोऽनामायां चण्डिका सदा ॥
अनामाङ्गुष्ठयोगेन तर्पयेत् कुलसन्ततिम् । अङ्गुष्ठमध्यमाभ्याञ्च वश्यकर्मणि तर्पयेत् ॥
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत्ततः । तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके ॥
एवं सन्तर्प्य देवेशीं कुलद्रव्यैर्यथाविधि । तर्पणञ्चाष्टधा कार्यं सकृद्वापि यथेच्छया ॥
नार्चयेदेकहस्तेन त[illegible]यिन्नैकपाणिना । तर्पयित्वा महादेवीं स्वीयक्रममथाचरेत् ॥
देवतामन्तिकं कुर्यात् कुसुमैर्विहितैः सदा । पूजाकाले देवताया नोपरि भ्रामयेत् करम् ॥
देव्यनुज्ञां गृहीत्वा [illegible] पूजयेदङ्गदेवताः । ध्यात्वा गुरुकुलं धीरो रश्मिवृन्दं तथैव च ॥

स्व स्व स्थाने समावाह्य पूजयेत्तदनन्तरम् । विना यो हि गुरोः पूजामिष्टदेवं यजेद् यदि ॥ ६०
निष्कृतिर्नास्ति तस्यैव नरकार्णवकोटिषु । तस्मात् सर्वप्रयत्नेन गुरुपूजां समाचरेत् ॥
दिव्यौघा गुरवो ह्येव सिद्धौघा गुरवस्तथा । मानवौघाः समासेन पूजनीयाः प्रयत्नतः ॥
अथवा सर्वशास्त्रेषु गुरवः पूर्वसूचिताः । येषु येषु च मन्त्रेषु ये ये ऋषिगणाः स्मृताः ॥
ते ते पूज्याः सपर्यादौ संक्षेपाद्गदितं मया । अज्ञात्वा गुरुनामानि गुरुत्रितयमर्चयेत् ॥
चतुष्टयं वा सङ्कोचो न च कार्यन्ततः परम् । गुरुः परगुरुश्चैव परापरगुरुस्ततः ॥ ६५
परमेष्ठिगुरुश्चैव कथिता गुरव शुभाः । न जानामि गुरोर्नाम वंशशुद्धिः कदाचन ॥
त्वत्पादाम्बुजरेणूनां कणमादेहि दासताम् । इति स्तवेन संस्तुत्य तस्मिन्निजगुरुं यदि ॥
तन्नाम्ना पूजयेद्यस्तु तेन पूजा गुरोर्भवेत् । गुरुपूजां विना चैव यदि पूजां समाचरेत् ॥
तद्दोषशमने चैव कुलपूजां समाचरेत् । पूर्ववत्तर्पणं कृत्वा रश्मिवृन्दं प्रपूजयेत् ॥
यत्र यत्र स्थितिश्चैव तत्र तं नार्चयेद्यदि । तन्मांसरुधिरेणैव पारणं तस्य जायते ॥ ७०
एकपीठे पृथक् पूजां विना यन्त्रं करोति यः । अङ्गाङ्गित्वं परित्यज्य देवताशापमाप्नुयात् ॥
आवाह्य देवतामेकामर्चयंश्चान्यदेवताम् । उभाभ्यां लभते शापं मन्त्री चञ्चलमानसः ॥
तस्मात् सर्वप्रयत्नेन स्वस्वस्थाने यथाक्रमात् । संपूज्य देवताः सर्वास्तर्पयेत्तदनन्तरम् ॥
ब्रह्माण्याद्यष्टशक्तीश्च पूजयित्वा च तर्पयेत् । पुनः सम्पूजयेद्देवीमुपचारैश्च विस्तरैः ॥
आसनं प्रथमं दद्यात् रौप्यं दारुजमेव वा । वस्त्रं वा चार्मणं कौषं मण्डपस्योत्तरे सृजेत् ॥ ७५
पाद्यं दत्त्वा महादेव्यै चार्घ्यं दद्यात्ततः परम् । श्यामा दूर्वा पङ्कजञ्च विष्णुक्रान्तासमन्वितम् ॥
गन्धपुष्पाक्षतजवाकुशाग्रतिलसर्षपैः । सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ॥
केवलं तोयमात्रेण तदाचमनमिष्यते । वासितन्तु सुगन्धाद्यैः कर्तव्यं यदि लभ्यते ॥
अर्घ्यादिकं प्रदद्यात्तु गन्धाष्टकं निवेदयेत् । चन्दनागुरुकर्पूरं चोरकुङ्कुमरोचनाः ॥
जटामांसी कपिजटा शक्तेर्गन्धाष्टकं विदुः । नानाविधानि पुष्पाणि वसनाभरणानि च ॥ ८०
मालां दद्यात्ततो देव्यै गन्धचन्दनमिश्रितम् । सर्वाङ्गलेपनं दद्याद्धूपं दद्यात्ततः परम् ॥
उशीरं चन्दनं कुष्ठमगुरुं गुग्गुलुन्तथा । मधुना घृतसंयुक्तो धूपोऽयं चण्डिकाप्रियः ॥
(अथवा) रोगरोगहररोगदकेशाः सुरतरुजतुलघुपत्रविशेषाः ।
वक्रतारहितवारिजमुद्रा धूपवर्तिरिह सुन्दरि भद्रा ॥
हरितकीमुस्तमथो नखी च मांसी जतु शैलजदेवदारुः ।
कुष्ठं गुडः सर्जरसस्तथैव दशाङ्गधूपः कथितो मुणीन्द्रैः ॥
(अथवा) अगुरुशीरगुग्गुलुशर्करामधुचन्दनैः । धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥ ८५
केवलं गुग्गुलुं धूपमगुरुं वापि संदिशेत् । एषामेकतमं कृत्वा निवेद्य शास्त्रवर्त्मना ॥
न भूमौ स्थापयेद्धूपमासने च घटेऽपि वा । घृतप्रदीपं प्रथमं तिलतैलोद्भवं ततः ॥

सार्षपं फलनिर्यासजातं वा वारिजोद्भवम् । प्रणवं जयध्वनिपदं मातः स्वाहा ततः परम् ॥
अनेन पूजयेद्घण्टामनेन परिवादयेत् । तैजसं दारुजं वापि मार्त्तिक्यं दीपवृक्षकम् ॥
अत्र दीपं प्रदातव्यं भूमौ नहि कदाचन । एवं दीपं प्रकुर्वीत नेत्ररञ्जनकारकम् ॥
घृतदीपं दक्षिणे तु स्ववामे तैलदीपकम् । अभितो दीपयेन्मन्त्री दीपमालां घृतप्लुताम् ॥
कर्पूरवर्तिकायुक्तां तेनैव वा परिप्लुताम् । वर्त्ता कर्पूरगन्धिन्या सर्पिषा तिलजेन वा ॥
आरोप्य दर्शयेद्दीपानुच्चैः सौरभशक्तिशालिनः । दीपावलिं ततो दत्त्वा कुलदीपं निवेदयेत् ॥
सौवर्णे राजते कांस्ये स्थानके कुङ्कुमेन तु । दलाष्टकयुतं पद्मं विलिख्य तत्र साधकः ॥
यवगोधूमदुग्धाद्यैः कृत्वेन्दुरूपकं चरुम् । अष्टपत्रेषु मध्ये च स्थापयित्वा ततः परम् ॥
नवदीपं क्षिपेत्तत्र मूलमन्त्रेण मन्त्रयेत् । सप्तधा तत उत्तोल्य नवधा भ्रामयेत्ततः ॥
निर्मञ्छयेन्महादेवीं मूलमन्त्रं समुच्चरन् । ततश्च साधकश्रेष्ठश्चक्रमुद्रां प्रदर्शयेत् ॥
दक्षिणेतरहस्तस्य वृद्धागर्भकनिष्ठिका । दक्षिणे योजयित्वा तु कनिष्ठे गर्भके बुध. ॥
वामे च दक्षिणाङ्गुष्ठं साधको विनियोजयेत् । अन्योन्ययोगतश्चैव चक्रमुद्रा प्रकीर्तिता ॥
प्रदत्त्वा कुलदीपञ्च नैवेद्यन्तु प्रदापयेत् । तैजसेषु च पात्रेषु प्रस्तरे वाऽब्जपत्रके ॥
यज्ञदारुमये वापि नैवेद्यं कल्पयेद्बुधः । सर्वाभावे तु माहेये स्वहस्तघटिते यदि ॥
न दद्यात् वाल्कले लौहे दत्ते नरकमाप्नुयात् । यद्योग्यं सर्वपात्रे तु तन्निधाय निवेदयेत् ॥
अन्नतोयैर्यथा सृष्टमर्घ्यपात्रस्थितेतरैः । न गृह्णाति महादेवी दत्तं विधिशतैरपि ॥
नैवेद्यं षड्रसोपेतं नानाविधफलन्तथा । नानाविधानि द्रव्याणि दत्त्वा देव्यै प्रयत्नतः ॥
मद्यं निवेद्य मांसञ्च मत्स्यं मुद्रां ततः परम् । दत्त्वा देव्यै प्रयत्नेन अन्नं बहुविधन्तथा ॥
विविधं व्यञ्जनं रम्यं कषायं तिक्तसंयुतम् । कट्वम्लमधुरञ्चैव परमान्नं सशर्करम् ॥
शर्करादुग्धखण्डादिभावितं पिष्टकन्तथा । दुग्धं दधि तथा तक्रं नवनीतं सशर्करम् ॥
शर्करामोदकं दद्यादन्यं नानाविधन्तथा । चर्व्यं चोष्यं लेह्यपेयं भक्ष्यं भोज्यं निवेदयेत् ॥
अशक्तौ मनसा दद्यादेतत् कर्म न लोपयेत् । चुलुकञ्च ततो दत्त्वा प्राणमुद्रां प्रदर्शयेत् ॥
वृद्धानामाकनिष्ठाभिः प्राणमुद्रा समीरिता । वृद्धामध्यातर्जनीभिरपानस्य प्रकीर्तिता ॥
वृद्धानामामध्यमाभिर्व्यानमुद्रा प्रदर्शिता । कनिष्ठाभिन्नसर्वाभिरुदानस्य समीरिता ॥
समानमुद्रा सर्वाभिरङ्गुलीभिः प्रदर्शिता । प्राणापानौ तथा व्यान उदानश्च समानकः ॥
चतुर्थ्यन्तोऽग्निजायान्तस्ताराद्यो मुद्रिकामनुः । वामहस्ते ग्रासमुद्रा ग्रासवत् परिकीर्तिता ॥
पुनराचमनीयञ्च दत्त्वा देव्यै सुसाधकः । स्वयम्भुकुसुमं कुण्डगोलोत्थं रोचनागुरुम् ॥
कस्तूरीकुङ्कुमारक्तचन्दनानि प्रदापयेत् । गन्धपुष्पं तथा माल्यं रक्तपुष्पादिभूषणम् ॥
सिन्दूरं कज्जलं दद्यादलक्तं पट्टगुच्छकम् । द्रोणापराजितापुष्पं करवीरं जवान्तथा ॥
प्रयत्नेन प्रदातव्यं चण्डिकाप्रीतिकारकम् । दत्ते चैव जवापुष्पे पट्टवस्त्रफलं लभेत् ॥

अपरायाश्च माहात्म्यं वक्तुं नहि कदाचन । ताम्बूलञ्च ततो दद्यात् कर्पूरादिसुवासितम् ॥
पुनर्माल्यं प्रदातव्यं गन्धचन्दनसंयुतम् । दर्पणं पादुकां छत्रं चामरं व्यजनादिकम् ॥
अजादिवलिदानेन चण्डिकां तोषयेत्ततः । यत्नतस्तु वलिं दद्यान्न हन्यादात्मना पुनः ॥
स्वहस्तैर्न पशुं हन्यात् स्वतो हिंसां विवर्जयेत् । यदि हन्यात् प्रमादेन रौरवं नरकं व्रजेत् ॥
छागादीनि वलिं दत्त्वा धूपदीपं निवेदयेत् । गृहीत्वा शोणितं पात्रे स्वकीयं हृदयोद्भवम् ॥
तोयसैन्धवसंयुक्तं शर्करामधुसंयुतम् । प्रदद्याच्च महादेव्यै सर्वसौभाग्यहेतवे ॥
अभ्युक्ष्य रुधिरं धीरो वाग्भवेन प्रदापयेत् । शक्तिवीजेन वा दद्यान्नाभेरूर्ध्वमधो नहि ॥
पुष्पाञ्जलित्रयं दत्त्वा तर्पयेन्निजदेवताम् । ततश्च साधकश्रेष्ठो मन्त्रशुद्धिं समाचरेत् ॥
गृहीत्वा मातृकावर्णं मूलमन्त्राक्षराणि च । क्रमात् क्रमाद्वुद्धिरावृत्तिर्मन्त्रशुद्धिरितीरिता ॥
आदौ मन्त्रविशुद्ध्यर्थं जपं कुर्यात्ततः परम् । जपश्च त्रिविधं प्रोक्तं वाचिकोपांशुमानसम् ॥
जिह्वौष्ठाधरसंस्फुर्त्तैर्जपो यश्च प्रजायते । तज्जपं वाचिकं विद्धि जिह्वामात्रमुपांशुकम् ॥
मनसा मन्त्रवर्णस्य चिन्तनं मानसं स्मृतम् । वाचिकस्य शतं ज्ञेयं पक्षोत्तरमुपांशुना ॥
तस्माच्छतगुणं प्रोक्तं मानसं जपमुत्तमम् । (अथवा) निगदश्च तथा ज्ञेयः स्पष्टवाचा निगद्यते ॥
अव्यक्तस्तुस्फुरद्वक्त्र उपांशुः परिकीर्त्तितः । मानसश्च स वोद्धव्यश्चिन्तनाक्षररूपवान् ॥
निगदेन तु यज्जप्तं लक्षमात्रं सुसाधकैः । उपांशुस्मरणेनैव तुल्यं भवति सर्वथा ॥
उपांशुलक्षमात्रन्तु यज्जप्तं साधकेन च । मानसोच्चारणात्तुल्यं जायते साधकस्य च ॥
प्राणायामं षडङ्गञ्च कृत्वा ऋष्यादिकञ्चरेत् । स्वगुरुं मूर्ध्नि सञ्चिन्त्य हृदि देवीं ततः परम् ॥
स्वयं कामकलारूपं भावयन् जपमारभेत् । जपस्यादौ शिवां ध्यायेत् ध्यानस्यान्ते पुनर्जपेत् ॥
जपध्यानसमायुक्तः शीघ्रं सिध्यति साधकः । ध्यानं कृत्वा जपेन्मन्त्रं गुरूक्तक्रमतो बुधः ॥
सर्वे मन्त्राः सिद्धिदाः स्युः सत्यमेव न संशयः । ततः सम्पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ॥
ॐ ह्रीं अक्षमालायै इत्मन्त्रेण प्रपूजयेत् । ॐ माले माले महामाले सर्वसिद्धिस्वरूपिणि ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव । पूजयित्वा ततो मालां गृहीत्वा दक्षिणे करे ॥
हृत्समीपे समानीय न तु वामेन संस्पृशेत् । विना यन्त्रञ्च मन्त्रञ्च कवचं मन्त्रशून्यतः ॥
मालाञ्च वामहस्तेन मृत्युचिह्नस्य लक्षणम् । संख्या कृता मृत्तिका च अक्षतञ्च तथैव च ॥
मध्यमाया मध्यभागे स्थापयित्वा समाहितः । तर्जन्या न स्पृशेन्मालामङ्गुष्ठाग्रेण चालयेत् ॥
पार्श्वयोः सेतुमादाय जपकर्म समाचरेत् । निःसेतुश्च यथा तोयं क्षणान्निम्नं प्रसर्पति ॥
मन्त्रस्तथैव प्रणवो द्विजानां सेतुरीरितः । शूद्राणां चन्द्रविन्दुस्थ औकारः सेतुरुच्यते ॥
शूद्रागामादिसेतुर्वा द्विसेतुर्वा यथेच्छया । द्विसेतवः समाख्याताः सर्वथैव द्विजातयः ॥
यथा मन्त्रं तथा स्तोत्रं कवचञ्च तथाविधम् । सेतुं विना भवेद्व्यर्थं तस्मात् सेतुं समाचरेत् ॥
प्रत्येकं बीजमादाय भङ्गादूर्ध्वेन मन्त्रवित् । पूर्ववीजं जपन् यस्तु परवीजन्तु संस्पृशेत् ॥

अङ्गुष्ठेन विना यस्य निष्फलः स जपः सदा । एवमुक्तविधानेन विलम्बं त्वरितं त्यजेत् ॥
मेरुं प्रदक्षिणीकृत्य प्रजपेत् साधकोत्तमः । गणनाविधिमुल्लङ्घ्य यो जपेत्तज्जपं पुनः ॥
गृह्णन्ति राक्षसास्तेन गणयेत् सर्वदा बुधः । अथवा करमालायां मातृकायां तथैव च ॥
नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन । नित्यजपे च होमे च यत्र संख्या न चोदिता ॥
तत्रेयं गणना प्रोक्ता अष्टोत्तरसहस्रकम् । अष्टोत्तरशतं वापि त्रिंशद्वापि कदाचन ॥
त्रिंशन्न्यूनं न कुर्याच्च नित्यजापे च साधकः । यथाशक्ति जपं कृत्वा प्राणायामं विधाय च ॥
गोपयित्वा ततो मालां सप्रसूनार्घ्यवारिणा । तेजोमयं जपफलं देव्या हस्ते समर्पयेत् ॥
गुह्यातीति समर्प्याथ स्तुवन् घण्टाञ्च वादयेत् । त्रिविधेन नतिं कुर्यादष्टाङ्गकविधानकैः ॥
चिबुकेन मुखेनाथ नासया मस्तकेन च । ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमेः स्पर्शनं भवेत् ॥
(अथवा) उरः शिरोदृष्टिजानुमनश्चरणवाक्करैः । अष्टाङ्गनमनं ज्ञेयं नित्यहोमं ततः परम् ॥
नित्यं नैमित्तिकं होमं स्थण्डिलेषु समाचरेत् । न कुर्यात् काम्यहोमं वै विना कुण्डेन मन्त्रवित् ॥
स्वदक्षिणे लिखेद्धस्तप्रमाणं चतुरस्रकम् । अङ्गुलोत्सेधसंयुक्तं वालुकाभिः समन्ततः ॥
तत्र मध्ये च षट्कोणं लिखित्वा प्रोक्ष्य पूजयेत् । आधारशक्तिमभ्यर्च्य पूर्ववच्च षडङ्गकम् ॥
ततो वह्निं समुज्ज्वाल्य क्रव्यादंशं परित्यजेत् । शब्दास्त्रमनुना मन्त्री नैरृत्यां ज्वलदग्निकम् ॥
आत्मनोऽभिमुखं कृत्वा वह्निं संस्थापयेद्बुधः । अग्निं प्रज्वाल्य मूलेन ज्वालिनीञ्च प्रदर्शयेत् ॥
मणिबन्धौ समौ कृत्वा करौ तु प्रसृताङ्गुली । मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ॥
इयं स्याज्ज्वालिनी मुद्रा परमा होमकर्मणि । अग्निं सम्पूजयित्वा तु शिवशक्तिसमागमात् ॥
वह्निमध्ये समावाह्य इष्टदेवीं समाहितः । आवाहन्यादिका मुद्रा दर्शयित्वा तु रक्षयेत् ॥
संपूज्य च महादेवीं हव्यं संशोधयेत्ततः । संस्थाप्य हवनीयञ्च पूर्ववत् प्रोक्षणञ्चरेत् ॥
चतुर्धा शोधनं कृत्वा आज्यस्थालीन्तु सन्दिशेत् । पूर्ववन्मण्डलं कृत्वा पूजयेत् पूर्ववत्मना ॥
अत्र पात्रं विनिक्षिप्य हव्यं तत्र निधापयेत् । दशधा मूलमन्त्रेण अभिमन्त्र्य हुनेत्ततः ॥
प्रणवं भूस्ततः स्वाहा इदमग्निश्च ङेयुतम् । तारं भुवो वह्निजाया इदञ्च वायवे पदम् ॥
ॐ स्वः स्वाहा इदं प्रोच्य प्रजाधिपतये ततः । इत्याहुतित्रयं हुत्वा महाव्याहृतिसंज्ञकम् ॥
हव्ये वह्नौ तथा देव्यां आत्मन्यैक्यं विभावयेत् । षडङ्गमनुना षट्कमाहुतिं जुहुयात्ततः ॥
मूलान्ते देवतानाम ङेयुकञ्च समुच्चरेत् । ततः स्वाहा समुच्चार्य अष्टोत्तरसहस्रकम् ॥
हविषा च हुनेद्धीरस्तिलेन पललेन वा । अष्टोत्तरशतं वापि तदर्द्धं वापि साधकः ॥
अथवाष्टदशं कुर्यान्नित्यहोमे त्वयं विधिः । मांसेन मधुना चाज्यैर्मत्स्यैः पुष्पैस्तिलैस्तथा ॥
यवैर्धान्यैश्च मुद्राभिः कुलपुष्पैस्तथा फलैः । अपामार्गैर्बिल्वपत्रैर्भृङ्गराजैः सुशोभनैः ॥
करवीरैर्जवापुष्पैरपराद्रोणकिंशुकैः । पद्मैश्च कुमुदैः कुन्दैर्नीलरक्तोत्पलैस्तथा ॥
सौगन्धिकैश्च बन्धूकैः केशरैश्चम्पकैस्तथा । जातीभिर्मालतीभिश्च मल्लिकाभिः कदम्बकैः ॥

मनोरमैः प्रसूनैश्च फलैः पत्रैर्यथाविधि। अनेन विधिना मन्त्री देव्या होमं समाप्य च ॥
पञ्चप्राणाहुतीर्मूलैः षडङ्गानां षडाहुतीः। गुरुवृन्दं रश्मिवृन्दं समावाह्य हुनेत्ततः ॥
क्रमादेकाहुतिं हुत्वा प्रत्येकेन सुसाधकः। आहुतित्रितयं हुत्वा पुनर्देव्यै प्रयत्नतः ॥ १८०
पुनराचमनीयन्तु दत्त्वा वह्नौ समानयेत्। संहारमुद्रया देवीं ॐ अग्नये ततः परम् ॥
वह्निजायान्तमन्त्रेण आहुतित्रितयं हुनेत्। विसृज्याग्निञ्च देवीञ्च शङ्खघण्टाञ्च वादयेत् ॥
तर्पयित्वा ततो देवीं चक्रस्थां परमेश्वरीम्। देव्यङ्गं मूर्ध्नि संहृत्वा शेषं कर्म समाचरेत् ॥
ततश्च कौलिकैः सार्द्धं पानं कुर्यात् कुलामृतम्। पञ्चतत्त्वं महादेव्यै दत्त्वा न स्वीकरोति यः ॥
नैवेद्यादि तथा सोऽपि देवीनां शापभाग्भवेत्। रोगी दुःखी दरिद्रश्च भूत्वा नरकमाप्नुयात् ॥ १८५
एकाकी नाचरेत् पानं कौलिकैर्भार्यया सह। पानञ्च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ॥
दिव्यं देव्यग्रतः पानं वीरमेकान्तवासिनाम्। संस्कारादिविहीनं यत्तत् पानं पाशवं स्मृतम् ॥

इति श्रीज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये सप्तमोल्लासः ॥ ७ ॥

---

## अष्टम उल्लासः

क्रमं तस्य प्रवक्ष्यामि चतुर्वर्गप्रदायकम् । अन्नमध्ये त्वष्टपत्रं पद्मं निर्माय तत्र वै ॥
कारणैः पूर्णपात्रन्तु संस्थाप्य तत्र साधकः । षड्दीर्घमायया चैव षडङ्गन्यासमाचरेत् ॥
ततो ध्यायेदन्नपूर्णां परमानन्ददायिनीम् ।

आदाय दक्षिणकरेण सुवर्णदर्वीन्दुग्धान्नपूर्णामितरेण च रत्नपात्रम् ।
भिक्षान्नदाननिरतां नवहेमवर्णामम्बां भजे सकलभूषणभूषिताङ्गीम् ॥

एवं ध्यात्वा महादेवीं तत्रावाह्य सुसाधकः । तत्त्वमुद्रां प्रदर्श्याथ इदमन्नामृतं वदेत् ॥
पूरयद्वन्द्वमुच्चार्य नमः स्वाहा ततः परम् । तत्र सन्तर्पयेद्भक्त्या अन्नपूर्णां यजेत्ततः ॥
तारञ्च भुवनेशानीं श्रीबीजं कामबीजकम् । हृदन्ते भगवत्यन्ते माहेश्वरीपदं लिखेत् ॥
अन्नपूर्णे अग्निजाया त्वन्नपूर्णामनूत्तमः । यथाशक्ति जपं कृत्वा स्तुत्वा देवीं समाहितः ॥
अर्चयित्वा तु देवेशीं कौलिकान्नार्चयन्ति ये । पापिष्ठास्ते चण्डिकायाः प्रसादभाजनं नहि ॥
नैवेद्यं पुरतो न्यस्तं दर्शनात् स्वीकृतं त्वया । साधुभक्तस्य जिह्वायामश्नामि कमलेक्षणे ॥
वसन्ति तस्य जिह्वायां शिवशक्त्यादिदेवताः । तस्मात् कौलिकवक्त्रेषु होतव्यं साधकोत्तमैः ॥
चण्डिकायाः प्रियाकाङ्क्षी देवीभक्तान् यजेत् सदा । कौलानां लक्षणं वक्ष्ये यथातन्त्रानुसारतः ॥
निवृत्तदुःखसन्तुष्टा विद्यागमविमत्सराः । कुलज्ञानरताः शान्ताः शिवभक्ता दृढव्रताः ॥
कीर्त्यमाने कुले येषां रोमाञ्चगद्गदस्वराः । आनन्दाश्रुयुता वीराः कथिताः कौलिकेश्वराः ॥
सर्वधर्मोऽधिको लोके कुलधर्मः शिवोदितः । इति ये निश्चितधियः प्रोक्तास्ते कौलिकोत्तमाः ॥
यो भवेत् कुलतत्त्वज्ञः कुलशास्त्रविशारदः । कुलार्चनरतपुंसां कौलिकः सोऽधिकः सदा ॥
कुलभक्तान् कुलाचारान् कुलज्ञानान् कुलव्रतान् । प्रीतो भवति यो दृष्ट्वा कौलिकः स शिवप्रियः ॥
पञ्चतत्त्वस्वीकरणात् मूलमन्त्रार्थतत्त्ववित् । देवतागुरुभक्तश्चेत् कौलिकः स्याच्च दीक्षया ॥
दुर्लभं सर्वलोकेषु कुलाचार्यस्य दर्शनम् । यः शक्तीः स्वयमाहूय कुलाभिज्ञांस्तथैव च ॥
अभ्यर्च्य देवताबुद्ध्या गन्धपुष्पाक्षतादिभिः । मादिभिः पञ्चमुद्राभिः सद्भक्त्या परितोषयेत् ॥
तेषु तुष्टेषु सन्तुष्टाः शिवाद्याः सर्वदेवताः । कुलज्ञानी वसेद्यत्र स देशः पुण्यभाजनः ॥
दर्शनादर्चनात्तस्य त्रिसप्तकुलमुद्धरेत् । कुलज्ञानिनमालोक्य स्वगृहेऽन्यगृहे स्थितम् ॥
समायान्ति मुदा तत्र योगिन्यो योगिभिः सह । प्रविश्य कुलयोगीशं भुञ्जते पितृदेवताः ॥
यत् कृतं कुलनिष्ठानां तद्देवानां कृतं भवेत् । देवाः कुलप्रियाः सर्वे तस्मात् कौलिकमर्चयेत् ॥
ब्रह्मेन्द्राच्युतरुद्रादिदेवता मुनिराक्षसाः । कुलधर्मपरा ह्येते मानुषेषु च का कथा ॥
न तुष्टा चण्डिकाऽन्यत्र तथातः स्यात् सुपूजिता । कौलिकेन्द्रेऽर्चिते सम्यग् यथा तुष्टा हि चण्डिका ॥
यत् फलं कौलिकेन्द्राणां पूजनाल्लभते सुधीः । तत्फलं नाप्नुयात्तीर्थैस्तपोव्रतमखैः सदा ॥
पूजनाज्जपनाद्धोमात् सुकृतं विविधन्तथा । कौलिकस्य भवेद्व्यर्थं कौलिकं योऽवमानयेत् ॥

६

श्मशानं तद्गृहं विद्धि पापिष्ठः श्वपचाधमः । कुलनिष्ठं परित्यज्य यद्यान्यस्मै प्रदीयते ॥
तद्दानं निष्फलं विद्याद्दाताऽपि नरकं व्रजेत् । पापाचारसमायुक्तं सर्वलोकबहिष्कृतम् ॥
त्रायते हि कुलद्रव्यं कुलयोगीश्वरार्पितम् । कौलिकेन्द्रः सकृद्भुङ्क्ते पुण्यं कोटिगुणं भवेत् ॥
किं पुनर्बहुभिर्भुक्तैस्तत् पुण्यं नैव गण्यते । तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वथा ॥
कुलधर्मपरो भूत्वा कुलज्ञानिनमर्चयेत् । नन्दन्ति पितरः सर्वे गायन्ति च पितामहाः ॥
प्रपितामहाश्च नृत्यन्ति कौलिके गृहमागते । यज्ञकोटिफलं तस्य वाजपेयशतानि च ॥
ददाति कौलिकेभ्यश्च विन्दुमात्रालिसङ्गमात् । पृथिवी हेमपूर्णा च कल्पकोटिप्रदानतः ॥
तत्फलं स्पर्शनाज् ज्ञानात् कौलिके यागमन्दिरे । कौलिकेषु प्रसन्नेषु प्रसन्ना चण्डिका भवेत् ॥
संस्मृतः कीर्तितो दृष्टो वन्दितो भाषितोऽपि वा । पुनाति कुलधर्मिष्ठश्चण्डालोऽपि यदृच्छया ॥
सर्वज्ञो वापि मूर्खो वा उत्तमो वाऽधमोऽपि वा । सर्वथैव शिवः सोऽपि तस्माद्यत्नात् समर्चयेत् ॥
स धन्यः खलु लोकेषु पुण्यः क्षीणकल्मषः । यत्समीपं समायान्ति कुलाचार्याश्च साधकाः ॥
अथ कौलान् समानीय शक्तीश्चैव विशेषतः । स्वशक्तिं वीरशक्तिं वा दीक्षितां गृहिणीमथ ॥
पाययित्वा पिबेद्द्रव्यमिति शास्त्रस्य निर्णयः । अनिवेद्य तु यः शक्तौ कुलद्रव्यं निषेवते ॥
पूजा च विफला तस्य देवता न प्रसीदति । विना यन्त्रेण या पूजा विना मांसेन तर्पणम् ॥
विना शक्त्या तु यत्पानं तत्सर्वं निष्फलं भवेत् । आहुतो यो निवर्तेत अनाहुतोऽपि यो विशेत् ॥
चक्रमध्ये स पापी स्यात् सर्वधर्मबहिष्कृतः । तिरश्चां योनिमालभ्य नरकान् प्रतिपद्यते ॥
पूजास्थाने प्रयत्नेन आसनानि प्रदापयेत् । ततः कौलाः स्त्रियः सर्वा प्रक्षाल्य पाणिपादकम् ॥
प्रणम्य प्रविशेच्चक्रं मुद्राभिः पञ्चसंज्ञकैः । स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथक् ॥
अथवा मिथुनं कृत्वा क्रमात् समुपवेशयेत् । पङ्क्त्याकारेण वा सम्यक् चक्राकारेण वाऽथवा ॥
चक्रमध्ये तु मूढात्मा जातिभेदं करोति यः । तं भक्षयन्ति योगिन्यस्तं शपेच्चण्डिका सदा ॥
जातिभेदो न चक्रेऽस्मिन् सर्वे शिवसमाः स्मृताः । प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजातयः ॥
निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक् । रहस्यमार्गनिरता ये ये वर्णा भवन्ति हि ॥
ते ते विप्राः सर्वथैव सत्यं सत्यं न संशयः । स्वर्गादिपुण्यलोकेषु देवादन्यो यथा न हि ॥
तथैव चक्रमध्ये तु देवाः सर्वे हि मानवाः । वेदेऽपि स्थितमेवं हि सर्वं ब्रह्मेति चाब्रवीत् ॥
बहुनात्र किमुक्तेन चक्रमध्ये तु साधकाः । पुरुषाः शिवरूपाश्च देवीरूपाः स्त्रियः सदा ॥
शिवशक्तिधिया सर्वाश्चक्रमध्ये समर्चयेत् । संस्काराज्ज्येष्ठक्रमतो ललाटे गन्धचन्दनैः ॥
शक्तीनां साधकानाञ्च तिलकञ्च सहाक्षतम् । कृत्वा विलेपनं माल्यं प्रदद्यात् साधकोत्तमः ॥
न स्थूलं न हि सूक्ष्मञ्च पात्रं कृत्वा मनोरमम् । नयनाग्निबाणसंख्यातैः कर्षन्तु साधकेन च ॥
हेतुपानं प्रकर्तव्यमित्युक्तं कुलसाधने । इत्यप्यधिकपात्रन्तु न कर्तव्यन्तु साधकैः ॥
कराभ्यां पात्रमुद्धृत्य द्वितीयञ्च यथाक्रमात् । ततः श्रीगुरुपादाय साक्षात् परशिवाय च ॥

समांसं देवताबुद्ध्या समर्पयेद्धयथाक्रमात् । दत्वामृतरसं पूर्णं गुरवे तदनन्तरम् ॥
योषिद्भ्यस्त्ववशेषन्तु वीरेभ्यश्च ततः परम् । कुलजाय कुलीनाय कुलभक्ताय दापयेत् ॥
गुरुभ्यो गुरुपात्रञ्च शक्तिभ्यः शक्तिपात्रकम् । वीरेभ्यो वीरपात्रञ्च भोगपात्रं स्वयं पिवेत् ॥ ६०
साक्षाद्ययदि गुरुर्न स्यात्तदा तोये विसर्जयेत् । सुधाबुद्ध्या ततः सर्वं गृहीत्वा पात्रमुत्तमम् ॥
ध्यानं कुर्यात् सुधादेव्या यथाशास्त्रप्रमाणतः । समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ॥
तत्रोत्पन्नां सुधां देवीं कन्यकारूपधारिणीम् । गोमूत्रसदृशाकारां फेनामृतसमुद्भवाम् ॥
अष्टादशभुजैर्युक्तां नीरजायतलोचनाम् । आनन्दशिखरे जात आनन्दश्च महेश्वरः ॥
तयोर्योगाद्भवेद्ब्रह्मा विष्णुश्च शिव एव च । तस्मादिमां सुरादेवीं पूर्णोऽहं तां भजाम्यहम् ॥ ६५
एवं ध्यात्वा मूलमन्त्रं सप्तवारं जपेत्ततः । तस्योपरि ततो वीरः पञ्च मुद्राः प्रदर्शयेत् ॥
धेनुयोनिं ततः पश्चाद्दर्शयेच्च पुनः पुनः । तालत्रयछोटिकाभिः कुर्वीत दिक्षु बन्धनम् ॥
पूर्ववत्तर्पयेत् मूर्ध्नि आनन्दभैरवं तथा । आनन्दभैरवीं देवीं गुरुपङ्क्तिं प्रयत्नतः ॥
इष्टदेवं रश्मिवृन्दं गणेशं क्षेत्रपालकम् । वटुकं भैरवञ्चैव योगिनीं डाकिनीन्तथा ॥
महाभूतान् विघ्नदांश्च तर्पयेच्च यथाक्रमात् । अयष्ट्वा भैरवं देवमकृत्वा गुरुतर्पणम् ॥ ७०
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् । गुरुपङ्क्तीरसन्तर्प्य रश्मिवृन्दं तथैव च ॥
यः पिवेत् कौलिको द्रव्यं तस्य पानन्तु पाशवम् । कौलज्ञानं विना योऽपि तद्द्रव्यं भोक्तुमिच्छति ॥
स महापातकी भूयात् सर्वधर्मबहिष्कृतः । सेवेत मद्यमांसानि भ्रष्टश्च पातकी भवेत् ॥
मन्त्रार्थस्मरणार्थन्तु मनसः स्थैर्यहेतवे । भेदपाशविनिर्मुक्तो मद्यपानं समाचरेत् ॥
सेवेत यः सुखार्थाय मद्यादीनि स पातकी । प्राशयेद्देवताप्रीत्यै तत्त्वमांसानि साधकः ॥ ७५
पञ्चमुद्रां निषेवेत अन्यथा पातकी भवेत् । यागकालं विनाऽन्यत्र दूषणं जायते सदा ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः । न स सिद्धिमवाप्नोति परत्र न परां गतिम् ॥
स्वेच्छया वर्तमानो यो दीक्षासंस्कारवर्जितः । न तस्य सद्गतिः काऽपि तपसा सुकृतादिभिः ॥
पूर्णाभिषेकयुक्तानां पानमत्यन्तमिष्यते । पूर्णाभिषेकहीनानां पानमत्यन्तदुर्गतिः ॥
अकृत्वा कौलिकाचारमयष्ट्वा गुरुपादुकाम् । येऽस्मिन् चक्रे प्रवर्तन्ते तेषां हिंसन्ति भैरवाः ॥ ८०
अदीक्षितैरनाचारैर्मुद्रामन्त्रविवर्जितैः । जपपूजां विना नैव न कार्यं द्रव्यभक्षणम् ॥
भक्षणान्नरकं याति निष्कृतिर्नैव जायते । मन्त्रसंस्कारशुद्धात्मा अलिपानं समाचरेत् ॥
जायते देवताभावो भवबन्धविमोचकः । विचारयेत्ततो वीरः सत्तर्केण विशेषतः ॥
सिद्धान्नं भुञ्जते विप्राश्चूर्णं शम्बूकसम्भवम् । काञ्जिकं कासमर्दञ्च तथैव च शिवाघृतम् ॥
एतेषु यदि न दोषस्तदा सर्वं न दोषभाक् । सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिवेत् ॥ ८५
इति मन्वादिशास्त्रेषु निषेधः परिनिश्चितः । मोहादज्ञानतः पीत्वा प्रायश्चित्तं विधीयते ॥
यत्पाने दूषणं प्रोक्तं प्रायश्चित्तं तदैव हि । देवान् पितॄन् समभ्यर्च्य वेदशास्त्रोक्तवर्त्मना ॥

ज्ञानतो भैरवीचक्रे ज्ञानिनां नैव दूषणम् । गुरुं स्मरन् पिबन्मद्यं खादन्मांसं न दोषभाक् ॥
न मांसभक्षणे दोषो न मद्ये न च मैथुने । यथा क्रतुषु विप्राणां सोमपानं विधीयते ॥
मद्यपानं तथा कार्यं समये भोगमोक्षदम् । फलार्थिनामहङ्कारवतां दूषणमेव हि ॥ ९०
निरहङ्कारिणाञ्चैव न निषेधो न वा विधिः । पाने भ्रान्तिर्भवेद् यस्य घृणा स्याद्रक्तरेतसोः ॥
शुचौ चाऽशुद्धताभ्रान्तिः पापशङ्का च मैथुने । स भ्रष्टः पूजयेच्चण्डीं देवीमन्त्रं कथं जपेत् ॥
रोगी दुःखी भवेत् सोऽपि रौरवं नरकं व्रजेत् । तस्मादद्वैतभावेन साधकः पञ्चमं भजेत् ॥
पात्रं ब्रह्मा सुरा विष्णू रसादो रुद्र एव च । आनन्दः शेखरः प्रोक्त आनन्दस्तु सदाशिवः ॥
मद्यन्तु भैरवो देवो मदः शक्तिः समीरिता । अहो भुक्तश्च मद्यं हि मोहयेत् त्रिदशानपि ॥ ९५
सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम् । तयोरैक्यसमुत्पन्नमानन्दं मोक्ष उच्यते ॥
आनन्दं ब्रह्मणो रूपं तच्च देहे प्रतिष्ठितम् । तस्याभिव्यञ्जकं मद्यं योगिभिस्तेन पीयते ॥
एवं विचिन्त्य मतिमान् तत्त्वशोधनमाचरेत् । पूर्ववद्विधिना वीरः पात्रस्य वन्दनं चरेत् ॥

श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृताप्लावितं
क्षेत्राधीश्वरयोगिनीगणमहासिद्धैः समासेवितम् ।
आनन्दार्णवकं महात्मकमिदं साक्षात्त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥

वन्दयित्वा ततः पात्रं पठेद्भक्तिपरायणः । जानताऽजानता वापि यन्मया क्रियते शिवे ॥ १००
तव कृत्यमिदं सर्वमिति मत्वा क्षमस्व मे । इति स्तुत्वा महादेवोमन्योन्यवन्दनञ्चरेत् ॥
अनुज्ञां पुरतो लब्ध्वा गृह्णामीति स्वयं वदेत् । जुषस्वेत्यनुज्ञातो गुरुणा वा कुलीनकैः ॥
गृह्णीयाच्च [illegible] बद्धपद्मासनः सुधीः । सव्येनोद्धृत्य पात्रञ्च मुद्रां कृत्वाऽपसव्यतः ॥
त्रिलासाद्धन [illegible]न न कुर्याद् द्रव्यभक्षणम् । नोद्धरेदेकहस्तेन न पिबेदेकपाणिना ॥
ततः सञ्चिन्तयेद् देवीं प्रकृतिं परमां कलाम् । आत्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ॥ १०५
कुण्डलीशक्तिचिद्वह्नौ हुनेद् द्रव्यं समन्त्रकम् । सशब्दं न पिबेद् द्रव्यं न बिन्दुं पातयेदधः ॥
सशब्दं यो मुखं कुर्यात् कुलदेव्यास्तु तर्पणे । रौरवं नरकं याति यावदाहुतसंप्लवम् ॥
विना चर्व्येण यत्पानं केवलं विषवर्द्धनम् । तस्मात् प्रचर्वयेच्चर्व्यं यथाक्रमविधानतः ॥
एकासने निविष्टा ये भुञ्जानाश्चैकभाजने । एकपात्रे पिबेद्द्रव्यं ते यान्ति नरकं किल ॥
उच्छिष्टं न स्पृशेच्चक्रे कुलद्रव्याणि सर्वथा । बहिः प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥ ११०
नैकहस्तेन दातव्यं न मुद्रावर्जितं सदा । निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम् ॥
चक्रमध्ये तु यः कुर्यात् स भवेद् योगिनीपशुः । परीहासं प्रलापञ्च वितण्डां बहुभाषणम् ॥
औदासीन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत् । न पादाभ्यां स्पृशेत् पात्रमधमाङ्गेन सर्वथा ॥
न पात्रं चालयेत् स्थानान्न कुर्यात् पात्रसङ्करम् । सशब्दं नोद्धरेत् पात्रं तथैव च न पूरयेत् ॥

नान्योन्यं ताड़येत् पात्रं न पात्रमानयेदधः । साधारं नोद्धरेत् पात्रमनाधारे न निःक्षिपेत् ॥ ११५
रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत् कदा । न पात्रं लङ्घयेद्धीमान् उत्क्षिप्य न च पातयेत् ॥
समीनञ्च पुनः पात्रं प्रदद्याच्च यथाक्रमम् । वन्दयेच्च पुनः पात्रं इमं मन्त्रं स्मरेद्बुधः ॥

हैसं मीनरसावहं दयितया दत्तञ्च पेयाक्षिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदृशा तस्यै समावेदितम् ।
वामे स्वादु विशुद्धिशुद्धिकरणं पाणौ निधायात्मके
वन्दे पात्रमहं द्वितीयमधुनाऽऽनन्दैकसम्वर्द्धनम् ॥

पूर्ववत्तर्पणं कृत्वा तृतीयञ्च समाचरेत् । मुद्रया सहितं धृत्वा वन्दयेत् पात्रमुत्तमम् ॥

सर्वाम्नायकलाकलापकलितं कौतूहलद्योतकं
इन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ।
ध्यातं देवगणैः परं मुनिगणैर्मोक्षार्थिभिः सर्वदा
वन्दे पात्रमहं तृतीयमधुना स्वात्मावबोधक्षमम् ॥ १२०

पूर्ववत्तर्पयित्वा तु चतुर्थं वन्दयेत्ततः ॥

मद्यं मीनरसावहं हरिहरब्रह्मादिभिः पूरितं
मुद्रामैथुनधर्मकर्मनिरतं क्षाराम्लतिक्ताश्रयम् ।
आचार्याष्टकसिद्धिभैरवकलामांसेन संशोधितं
पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः ॥

पूर्ववत्तर्पयित्वा तु पञ्चमं वन्दयेत्ततः ॥

आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।
सोऽहं भैरवमर्चयन् प्रतिदिनं तारागणै रक्षित
आदित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः ॥

प्रपिवेत् तु ततः षष्ठं पात्रं संपूज्य मन्त्रवित् ॥

ॐ रुद्रं चामरभद्रपीठपरमानन्दोदितं दीपनं १२५
धामां राज्यमनोरमां शुभकरां सायुज्यसाम्राज्यकम् ।
नानाव्याधिभवान्धकूपहरणं जन्मान्तरं नाशनं
श्रीमत् सुन्दरितर्पणं हरिरसं पात्रञ्च षष्ठं भजे ॥

पूर्ववत् तर्पणं कृत्वा सप्तमञ्च समर्चयेत् ॥

ॐ जाग्रतस्वप्नसुषुप्तितूर्यपरमं चैतन्यं साक्षिप्रदं
विद्युद्भास्वरसन्निभं द्युतिधरं ज्योत्स्नाकलाव्यापितम् ।

इड़ापिङ्गलामध्यगा त्रिवलया सत्कुण्डली चोर्ध्वगा
पात्रं सप्तमपूरणेन परमानन्दाधिकं पातु माम् ॥

एभिः प्रवन्द्य पात्राणि स्वयं साधकसत्तमः । लभेत सर्वकर्माणि देहान्ते भैरवो भवेत् ॥ १३०

पीत्वा सप्तमपात्रञ्च शान्तिस्तोत्रं पठेत्ततः ॥

यस्यार्चनेन विधिना किमपीह लोके धर्मप्रसिद्धमिति कामफलं प्रसूते ।
तं सन्ततं सकलसाधकचित्तवृत्तिं चिन्तामणिं कुलगणाधिपतिं नमामि ॥
रक्ताम्बरं ज्वलनपिङ्गजटाकलापं भालावलीकुटिलचन्द्रधरं प्रचण्डं ।
बालार्कधातुकनकाचलधातुवर्णं देवीसुतं वटुकनाथमहं नमामि ॥
हरतु कुलगणेशो विघ्नसङ्घानशेषानुदयतु कुलचर्या पूर्णतां साधकानां ।
पिवतु वटुकनाथः शोणितं निन्दकानां दिशतु सकलकामान् कौलिकानां गणेशः ॥
धर्मो जयत्वखिल-लोकसुखावहोऽयं नश्यत्वधर्ममखिलं वहुदुःखमूलम् ।
आशीर्वचांसि समन्त्वमृतोपमानि शापाः पतन्तु समयद्विषि योगिनीनाम् ॥ १३५

याश्चक्रक्रमभूमिकावसतयो नाड़ीषु याः संस्थिताः
याः कायोद्गतरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छ्वासोर्मिमरुत्तरङ्गनिलया निश्वासवाताश्च या
स्ता देव्यो रिपुपक्षभक्षणपरास्तृप्यन्तु कौलार्चिताः ॥
देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो वटुकाश्च यक्षपितरो वेतालकाश्चेटकाः ।
अन्ये भूचराः खेचरा दिविचरा भूताः पिशाचा ग्रहा
स्तृप्यन्तां कुलपुत्रकस्य पिवतः पानं सदीपं चरुं ॥
सत्यञ्चेत् गुरुवाक्यमेव पितरौ देवाश्च चेत् योगिणो
प्रीता चेत् परदेवता यदि भवेद्व वेद्दा प्रमाणं हि चेत् ।
शाक्तेयं यदि दर्शनं भवति चेत् आज्ञाऽप्यमोघाऽपि चेत्
सत्यश्चापि च कौलधर्मपरमं स्यान्मे जयः सर्वदा ॥

शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् । कालाग्न्यादिशिवान्तञ्च जगद्व यज्ञेन तृप्यतु ।

सम्पूजकानां परिपालकानां जितेन्द्रियाणाञ्च तपोधनानां ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः करोतु शान्तिं भगवान् गणेशः ॥ १४०
शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वजनाः सुखीभवन्तु ॥

नन्दन्तु कुलयोगिन्यो नन्दन्तु कुलपुत्रकाः । नन्दन्तु च कुलाचार्या ये चान्ये कुलपालकाः ॥

नन्दन्तु साधकाः सर्वे विनश्यन्तु च दूषकाः । अवस्था शाम्भवी नोऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥

अनेककोट्यः कुलयोगिनीनामन्तर्बहिः कौलिकचक्रसंस्थाः ।
निपीयमानेन परामृतेन प्रीताः प्रसन्ना वरदा भवन्तु ॥
ये ये पापधियः सुदूषणरता मन्निन्दकाः पूजने
देवाचारविमर्दे नष्टहृदया भ्रष्टाश्च ये साधकाः ।
दृष्ट्वा च क्रमपूर्वमर्चनविधौ ये कौलिका दूषका
स्ते ते यान्तु विनाशमत्र समये श्रीभैरवस्याज्ञया ॥ १४५

साधकानाञ्च द्वेष्टार: सदैवाम्नाय दूषकाः । डाकिनीनां मुखे यान्तु तृप्तास्ते पिशितैः सदा ॥
इति स्तोत्रं पठन् पानं कुर्यात् साधकसत्तमः ॥

ॐ मूढाज्ञानकदम्बकाननकठोराग्निस्वरूपां परां
ज्ञानध्वान्तसमस्तसंशयधिया पूर्णं सुधाधारया ।
भोगं मोक्षकरं सभावशकरं मूर्ध्नि ज्वलन्तीं परां
देवीं वक्षसि संजपन्ननुदिनं पात्रं भजे चाष्टमम् ॥

पूर्ववत्तर्पणं कृत्वा नवमञ्च प्रपूजयेत् ॥

ॐ मन्ये ब्रह्ममयं समस्तजगतां सारं महत् शाश्वतं
दुर्ज्ञेयं भवभोगचञ्चलधिया स्थूलाकृति ध्यायताम् ।
अस्माकं द्रवरूपतां करुणया प्राप्तं तदेतद्द्रुतं
तत्पात्रं नवमं पिवेच्च नियतं भुक्तिञ्च मुक्तिप्रदम् ॥ १५०

सहस्रारे गुरुं ध्यायन् हृदि देवीं तथैव च । जिह्वाग्रे जपसाधनं शिवोऽहमिति चिन्तयन् ॥
यथाविधिसमभ्यर्च्य जुहुयात् कुण्डलीमुखे ॥

ॐ वामे चन्द्रमुखी मुखे च मधुरं पात्रं कराम्भोरुहे
मूर्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसम् ।
जिह्वायां जपसाधनं परिणतं कौलक्रमाभ्यासनं
तत्पात्रं दशमं पिवेच्च परमं भुक्तिञ्च मुक्तिप्रदम् ॥

नाहं कर्त्ता कारयिता न च कार्यं नाहं भोक्ता भोजयिता न च भोज्यम् ।
नाहं दुःखी दुःखयिता नच दुःखं सोऽहं प्रत्यक्चित्स्वरूपोऽहमात्मा ॥ १५५
एवं सञ्चिन्त्य वीरेन्द्र: पुनः पानं समाचरेत् ॥

ॐ वामां वामकरे सुधाञ्च अधरे मन्त्रं जपन्मानसे
वीणावेणुरवावयन्त्रविधिवद्गायन्ति पञ्चोरसः ।
क्रीडाकेलिकुतूहलेन कमलालावण्यलीलोरसः
पानोल्लासविलासपूर्णसमये पात्रञ्च एकादशम् ॥

स्वपात्रस्थितहेतुञ्च न दद्याद् भैरवाय च । दत्ते च सिद्धिहानिः स्याद् देवताशापमाप्नुयात् ॥
कश्चित् यदृच्छया प्राप्तमन्यमन्यन्तु भक्तितः । आदाय स्वीयपात्रञ्च पिबेद् द्रव्यं गुरुं स्मरन् ॥
गुरुशक्तिसुतानाञ्च गुरुज्येष्ठकनिष्ठयोः । उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत् ॥
अन्यथा चक्रमध्ये तु पतनं साधकस्य च । शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टञ्च चर्वणं ॥ १६०
शक्तिवीरप्रसादेन किन्न सिध्यति भूतले । कनिष्ठेभ्यः स्वशिष्येभ्यश्चोच्छिष्टञ्च प्रदापयेत् ॥
दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदां पदम् । यावन्न चलते दृष्टिर्यावन्न चलते मनः ॥
तावत् पानं प्रकुर्वीत पशुपानमतःपरम् । मन्त्रार्थस्फुरणार्थाय ब्रह्मज्ञान स्थिराय च ॥
अलिपानं प्रकर्तव्यं लोलुपो नरकं व्रजेत् । पीत्वा पीत्वा पुनः पीत्वा पतित्वा च महीतले ॥
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते । अलिमीनाङ्गनासङ्गे यत् सुखं जायते नृणाम् ॥ १६५
तदेव मोक्षो विदुषामबुधानाञ्च पातकम् । चक्रमध्ये घटे भग्ने पात्रे च पतिते तथा ॥
द्रव्यस्य पतने भूमौ भिन्ने पात्रे तथैव च । दीपनाशे च तच्छान्त्यै पुनश्चक्रं समाचरेत् ॥
पाययित्वा यथायोग्यं पीत्वा च साधकोत्तमः । पूर्ववत् तर्पयेद्देवीं परिवारसमन्विताम् ॥
पुनर्माल्यादिकं दत्त्वा गन्धचन्दनमिश्रितम् । धूपं दीपं ततः पश्चाद्दर्पणं चामरन्तथा ॥
नैवेद्यं शङ्खघण्टाञ्च वादयेत् सुमनोहरम् । यथाशक्ति स्तवं कृत्वा प्रदक्षिणीकृत्य साधकः ॥ १७०
सपुष्पार्घ्यामृतं नीत्वा आत्मानञ्च समर्पयेत् । ॐ इतः पूर्वं ततः प्राणबुद्धिदेहं ततो वदेत् ॥
धर्माधिकारतो जाग्रत् स्वप्नसुषुप्त्यवस्थासु च । कर्मणा मनसा वाचा हस्ताभ्याञ्च ततः पद्भ्याम् ॥
उदरेण च शिश्ना च यत् कृतं यत् स्मृतं ततः । यदुक्तं प्रोच्य तत्सर्वं मां मदीयञ्च संलिखेत् ॥
सकलं श्रीमदिष्टान्ते देवता च पदे ततः । समर्पणं ततः पश्चादेतेनैव समर्पयेत् ॥
देवीपदे ततो दत्त्वा क्षमस्वेति वदेत्ततः । पुनराचमनीयञ्च दद्याद्देव्यै पुनः पुनः ॥ १७५
समस्तावरणं देव्या अङ्गे लीनं विभाव्य च । अर्घ्यपात्रं ततः पश्चादुत्तोल्य साधकोत्तमः ॥
देव्युपरि त्रिधा भ्राम्य निवेदयेत्ततः परम् । तेजोमयीं महादेवीं संहारमुद्रया हृदि ॥
नासापथात् समानीय निर्माल्यवासिनीं यजेत् । निर्माल्यकुसुमैर्देवीं प्रणम्य गुरुपादुकाम् ॥
भक्तिभावे ततः पश्चात् प्राणायामषडङ्गकौ । कृत्वा सोऽहं विभाव्याथ साधक स्थिरमानसः ॥
ब्रह्मरन्ध्रे गुरोः स्थाने यन्त्रलेपञ्च धारयेत् । नास्तिकेभ्यो न पशुभ्यो न मूर्खेभ्यो प्रदापयेत् ॥
कुलीनाय च दातव्यमथवा जलमध्यतः । नैवेद्यं चण्डिकादेव्या वाञ्छन्ति विबुधाः सदा ॥
तस्माद् देयं सदा पुष्पं ब्रह्मणे विष्णवेऽपि च । मह्यं शुक्राय सूर्याय गणेशाय यमाय च ॥ १८०
अग्नये वरुणायापि वायवे धनदाय च । ईशानाय महादेवीसाधकाय प्रकल्पयेत् ॥
अथवा तरुमूले च गर्ते वा शुचिदेशके । यत्नतः साधकश्रेष्ठो निर्माल्यानि समर्पयेत् ॥
शक्तिभ्यः साधकेभ्यश्च दत्त्वा निर्माल्यचन्दनम् । माल्यं गन्धं ततो दत्त्वा आत्मदेहं ततोऽर्पयेत् ॥ १८५
अथवा कारयेत् पानं मधुना वीरसाधकः । श्रीपात्रग्रहणं कृत्वा आदौ चक्रं करोति यः ॥
पशुपानं भवेत्तस्य प्रायश्चित्ती स साधकः । अर्घ्यामृतं ततो वीरः सामयिकेभ्यो निवेदयेत् ॥

ततश्च साधकश्रेष्ठः शेषमात्मनि योजयेत् । प्रबन्धे पूर्णपात्रञ्च प्रगृह्य साधकोत्तमः ॥

देहं मन्त्रमयं विधाय पुरतः कृत्वा गुरोर्वन्दनम्
श्रीपात्रं कुलविद्यया विलसितं संशोध्य दिव्यामृतम् ।
विद्यापीठचतुष्टयं शिवशिवे सन्तर्प्य सिद्धिक्रमा-
दास्वाद्यापि पिबेद्रसं सुखकरं दुःखस्य निर्मूलनम् ॥

महापातकयुक्तो वा बहुपापान्वितोऽपि वा । अर्घ्यस्य बिन्दुमात्रेण मुक्तो भवति पातकात् ॥
एवं पानं समाचर्य स्वीकृत्य पूर्णपात्रकम् । न्युब्जीकुर्याच्च तद्भूमौ तत्र पुष्पं क्षिपेद् बुधः ॥
तदमृतस्निग्धभूमौ मायाबीजं त्रिलिख्य च । कनिष्ठाङ्गुलिना वामहस्तस्य तिलकन्तथा ॥
अनेन मनुना मन्त्री मूलाद्येन समाहितः । यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा ॥
स एव दासतां यातु यदि शक्रसमो भवेत् । ततः प्रक्षाल्य वीरेन्द्रो गोपयेत् पात्रमुत्तमम् ॥
ततो यथाक्रमेणैव प्रसादं परिवेश्य च । भोजयेच्च ततो विद्वान् स्त्रीभिश्च साधकैः सह ॥
भुक्त्वा दद्यात् पुनर्माल्यं गन्धचन्दनसंयुतम् । ताम्बूलाभरणादींश्च तथा तल्पं सुसाधकः ॥
सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शिनः । जायते भैरवावेशः सर्वत्र समदर्शनः ॥
न्तं वा ग त च्छ रं पि मा कौलिकं न निवारयेत् । वारणात्त्रिपुरा रुष्टा ततो हानिस्तु जायते ॥
कौलिकः पशुगामी च परशक्तिं रमेद्बलात् । गोष्ठीमध्ये तु यत्नेन स्पर्शं तस्य न कारयेत् ॥
र्वां वा तां गि भा नीं सु भ यो दद्यात् कुलयोगिने । मधुमत्ताय वीराय पुण्यं तस्य न गण्यते ॥
कुलं कुलाय यो दद्यात् सोऽपि योनौ न जायते । भगरूपा च सा देवी रेतःप्रीता च सर्वदा ॥
रेतःसमर्पणं तस्यै मद्यैर्मांसैः समं सदा । ध्यात्वा कुण्डलिनीं शक्तिं रमन् रेतो विमुञ्चयेत् ॥
अमन्त्रा तु यदा नारी बलाद् यत्नाद्वा लभ्यते । आत्मदेहस्वरूपेण तत् कर्णे मन्त्रमुत्सृजेत् ॥
ततः सा शक्तिरूपा स्याद्भुक्तिमुक्तिफलप्रदा । रतिकाले च दीक्षायामभिषेकं समाचरेत् ॥
सुरया रेतसा वापि जलेन चन्दनाम्बुना । सम्भोगेऽभिषिञ्चेन्नारीं रण्डाञ्च मन्त्रवर्जिताम् ॥
आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् । नमः शब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ॥
पवित्रीकुरुशब्दान्ते मम शक्तिं कुरुद्वयम् । वह्निजायां समुच्चार्य शुद्धिमन्त्रः प्रकीर्त्तितः ॥
अनेन मनुना चैव अभिषिक्ताः स्त्रियः सदा । रममाणो भवेन्नित्यं सर्वसिद्धिमवाप्नुयात् ॥
इहलोके परं भोगं भुक्त्वा मुक्तिमवाप्नुयात् । रम्भा शच्युर्वशी मुख्या या नारी गगने भुवि ॥
पाताले च स्थिता या च तस्या नाथस्तु कौलिकः । तस्य वर्ज्या च या नारी कथ्यते तन्त्रवर्त्मना ॥
त्रिपुरैव गुरुः साक्षात्तत्पत्नी तत्स्वरूपिणी । मनसा कर्मणा वाचा रमणं तत्र वर्जयेत् ॥
तस्या एव पदे भक्तो मुक्तिमप्यचिराल्लभेत् । गुरोः स्नुषा च कन्या च स्वपुत्री मन्त्रपुत्रिका ॥
एतस्या रमणं वर्ज्यं ब्रह्मविन्मानसेन च । कौलिकस्य च पत्नी वै साक्षात् सिद्धीश्वरी शिवा ॥
तस्या रमणमात्रेण कौलिको नारकी भवेत् । माताऽपि गौरवाद्वर्ज्या शिवहीना तथैव च ॥

अन्यस्थाने विचारे तु देवीशापः प्रजायते । मन्त्रमाता च पुत्री च भगिनी च कुलाङ्गना ॥ २२०
न रमेत् कौलिको नित्यमेताः सम्यक् समर्चयेत् । (यद्वा) गुरुवीरवधूं त्यक्त्वा रम्याः सर्वाश्च योषितः ॥
एता दर्व्याः प्रयत्नेन सन्दिग्धानाञ्च सर्वदा । अद्वैतानाञ्च कुत्रापि निषेधो नैव विद्यते ॥
मातृगर्भस्थबीजेन शिशुरेव न संशयः । गर्भनिःसारकाले तु बालको हि दिगम्बरः ॥
जननीजठराद्योनिरन्ध्रद्वाराद्बहिर्भवन् । जननीयोनिसम्बन्धः सुतः शिश्नाऽधिगच्छति ॥
एवं विचार्यमाणे तु को न स्याद्गुरुतल्पगः । निर्विकारतया नात्र भवेत् नह्यन्यथा ततः ॥ २२५
अतएव यदा यस्य वासना कुत्सिता भवेत् । तदा दोषाय भवति नान्यथा दूषणं क्वचित् ॥
निर्विकल्पमना भूत्वा चिन्मयीं समुपासयेत् । तदारूढेषु वीरेषु कार्याकार्यं न विद्यते ॥
तस्मादद्वैतरूपेण सर्वयोनिं विचारयेत् । निश्चयं मुक्तिमाप्नोति सहस्रयोनिदर्शनात् ॥
अनाचारः सदाचारः कुकार्यं कार्यमुत्तमम् । अमेध्यमपि मेध्यं स्यादद्वैतानाञ्च निश्चितम् ॥
अपेयमपि पेयं स्यादभोज्यं भोज्यमेव च । अगम्याऽपि च गम्या स्यादद्वैतानां सुनिश्चितम् ॥ २३०
न विधिर्न निषेधश्च न पुण्यं न च पातकम् । न स्वर्गो नैव नरकमद्वैतानाञ्च निश्चितम् ॥
यत्र यत्र निषेधश्च विधिर्वा परिकथ्यते । तत्र तत्रापि बोद्धव्यं सन्दिग्धानां सुनिश्चितम् ॥
सर्वथैव गुरोरग्रे अद्वैतं नैव कारयेत् । तस्माच्च यत्नतो वीरो गुरुयोनिं परित्यजेत् ॥
अद्वैताद्वैतमेवैव पूजनं कथितं महत् । पञ्चतत्त्वमसंयुक्तं पञ्चमं वस्तु कारयेत् ॥
तस्य पूजा च सा नष्टा प्रायश्चित्ती स साधकः । तत्त्वहीनं कृतं कर्म जपकर्म च निष्फलम् ॥ २३५
शाम्भवी कुप्यते तेभ्यो ब्रह्महत्या दिने दिने । चक्रं त्यक्त्वा तु देवेशीं पूजयेत्तर्पणं विना ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोबलम् । चक्रमध्ये तु यद्दृष्टं शुभं वा यदि वाऽशुभम् ॥
प्रभाते तन्न वक्तव्यं साधकेन महात्मना । नित्यपूजा च कथिता साधकानां सुसिद्धये ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये अष्टम उल्लासः ॥ ८ ॥

---

## नवम उल्लासः ।

इति गुप्ततरं ज्ञेयं गन्धर्वस्य क्रमं शुभम् । अत्यन्तगोपनाद्यस्तु पञ्चतत्त्वेन पूजयेत् ॥
सर्वसिद्धिमवाप्नोति मन्दभाग्योऽपि पूजनात् । तस्मात् पूजां सदा कुर्यात् सिद्धार्थी सिद्धिसंग्रहः ॥
पूजा फलेन दौर्भाग्यं दुःखदारिद्र्यनिग्रहम् । सर्वप्रशमनं याति ईश्वरो जायते भुवि ॥
अर्चनक्षणभङ्गेन विकला योगिनी भवेत् । पूजाहीनोऽशुचिर्नित्यं गर्हितः सर्वकर्मसु ॥
पूजां विहाय यो मूढो मन्त्रं जपति नित्यशः । तज्जपं विफलं विद्यात् स मन्त्री पातकी भवेत् ॥
विद्यां संगृह्य पूजायां श्रद्धा यस्य न विद्यते । स महापातकी भूत्वा पशुयोनिमवाप्नुयात् ॥
पूजाहीनस्य मांसेन रुधिरेण विशेषतः । पारणं योगिनीनाञ्च भैरवाणां भवेद्ध्रुवम् ॥
तस्मात् पूजां सदा कुर्यात् सिद्धार्थी मानसेऽथवा । यद्गृहे पूजयेद्देवीं सदैव तत्र पूजनम् ॥
अतिगुप्तेन तत् कार्यं दिवसे नैव सर्वथा । दिवसे पञ्चमैः पूजा राष्ट्रहानिं करोति हि ॥
साधकस्य महाक्षोभं प्रददाति सुनिश्चितम् । तस्मात् पञ्चमकारेण दिवसे नैव सर्वदा ॥
उत्तमा नित्यपूजा स्यात् पर्वपूजा च मध्यमा । मासपूजाऽधमा प्रोक्ता मासादूर्ध्वं पशुर्भवेत् ॥
पशोर्भूयः प्रवेशेच्छा यदि स्याद्दीक्षयेत् पुनः । विहितैर्मादिभिर्द्रव्यैर्मासादूर्ध्वं समाचरेत् ॥
कृष्णाष्टमी चतुर्दश्यमावस्याथ च पूर्णिमा । संक्रान्तिः पञ्चपर्वाणि पुण्यादि दिवसेषु च ॥
सम्पत्तौ च यजेल्लाभे तपोदीक्षाव्रतोत्सवे । पीठोपगमने वीरकुलपीठस्य दर्शने ॥
देशिकागमने पुण्यतीर्थदैवतदर्शने । एवमादिषु कालेषु विशेषदिवसेषु च ॥
गुरुजन्मदिने प्राप्ते तद्गुरोस्तद्गुरोरपि । मानवौघादिपुंसाञ्च स्वजन्मदिवसेऽपि च ॥
एकादश्यां व्यतीपाते कर्मलोपं न कारयेत् । अष्टम्याञ्च चतुर्दश्यां पूजा कार्या प्रयत्नतः ॥
न लङ्घयेदष्टमीञ्च लङ्घनात् पातकी भवेत् । इति पूर्वापरे प्राप्ते पञ्चतत्त्वैश्च साधकः ॥
पूजां कुर्यात् प्रयत्नेन अन्यथा सिद्धिहा भवेत् । बहिःपूजाविधानेन गन्धर्वो वापि किन्नरः ॥
राजाऽपि साधको वापि नान्यः कोऽपि महीतले । यतिर्वा भूपतिर्वापि नान्योऽस्ति पूजकः क्वचित् ॥
न देवः पर्वताग्रेषु न देशे विष्णुसद्मनि । देवश्चिदानन्दमयो हृदि भावेन दृश्यते ॥
यत्र यत्र दृढा भक्तिर्यदा यस्य महात्मनः । तत्र तत्र महादेवो प्रकाशमनुगच्छति ॥
अथ वक्ष्ये फलाधिक्यं पूजायां यत्र जायते । वाराणस्यां महापूजा सम्पूर्णफलदायिनी ॥
ततस्तु द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ । ततोऽपि द्विगुणा प्रोक्ता द्वारकायां विशेषतः ॥
सर्वक्षेत्रेषु तीर्थेषु पूजा द्वारावतीसमा । विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ॥
आर्यावर्त्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च । विन्ध्यवत् फलदा पूजा प्रयागे पुष्करेषु च ॥
ततश्चतुर्गुणा प्रोक्ता करतोयानदीजले । तस्माच्चतुर्गुणफला नन्दिकुण्डे च निश्चितम् ॥
ततश्चतुर्गुणा प्रोक्ता जल्पीशस्य च सन्निधौ । ततः सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा स्मृता ॥
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपाथसि । तत्समा कामरूपे च सर्वत्रैव जले स्थले ॥

सवर्श्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा। देवीपूजा तथा शक्त्यां कामरूपे सुरालये॥ ३०
कुलार्णवे।
कामरूपञ्च द्विविधं व्यक्तं गुप्तं महेश्वरि। करतोयानदीपूर्वं यावद्दिक्करवासिनी॥
त्रिंशद्युयोजनविस्तीर्णं शतयोजनमायतम्। त्रिकोणं कृष्णवर्णञ्च कामरूपमुदाहृतम्॥
व्यक्तं तत्रैव विज्ञेयं गुप्तञ्चैव गृहे गृहे। व्यक्ताद्गुप्तं महापुण्यं लभ्यते साधकोत्तमैः॥
देवीक्षेत्रं कामरूपं विन्ध्यादन्यत्र तत्समम्। अन्यत्र विरला देवी कामरूपे गृहे गृहे॥
ततः शतगुणा प्रोक्ता नीलकूटस्य मस्तके। ततोऽपि द्विगुणा प्रोक्ता सुमेरौ शिवलिङ्गके॥ ३५
ततोऽपि द्विगुणा प्रोक्ता शैलपुत्र्याश्च योनिषु। ततः शतगुणा प्रोक्ता कामाख्यायोनिमण्डले॥
तत्समापि च सा पूजा योषितां योनिमण्डले। पीठानां परमं पीठं कामरूपं महाकुलम्॥
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डलम्। यत्र कोटिगुणैः सार्द्धं माया महिषमर्दिनी॥
यत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम्। यतो देवाश्च देव्यश्च मुनयश्चैव भावजाः॥
सर्वेऽप्याविर्भवन्त्यत्र तेन गुप्तं महाकुलम्। कामाख्यायां महायोनौ पूजां यः कृतवान् सकृत्॥ ४०
स चेह लभते कामान् परत्र शिवतां व्रजेत्। अत्र यत्क्रियते पूजा सकृद्वा साधकेन च॥
विहाय सर्वपीठानि तस्य देहे वसेत् शिवा। अथ वक्ष्यामि सामान्य पूजायाः क्रममुत्तमम्॥
आदावृष्यादिकन्यासः करशुद्धिस्ततः परम्। अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च॥
तालत्रितयदिग्बन्धः प्राणायामस्ततः परम्। ध्यानं पूजा जपश्चेति सर्वतन्त्रेष्वयं विधिः॥
जपार्थं सर्वमन्त्राणां विन्यसेत्तु लिपिं विना। कृतञ्च निष्फलं विद्यात् तस्मादादौ लिपिं न्यसेत्॥ ४५
अथातः संप्रवक्ष्यामि शिवाया बलिमुत्तमम्। न ददाति बलिं यस्तु शिवायाः शिवतासये॥
स पापिष्ठो नाधिकारी कुलदेव्यास्तु पूजने। पशुरूपां शिवां देवीं यो नार्चयति निर्जने॥
शिवारावेण तस्यास्तु सर्वं नश्यति निश्चितम्। पूजा जपविधानानि यत्किञ्चित् सुकृतानि च॥
गृहीत्वा शापमासाद्य शिवा रोदिति निर्जने। अवश्यमन्नपानेन नियतं तोषयेच्छिवाम्॥
एकया भुज्यते यत्र शिवायाश्चैव निश्चितम्। तदैव सर्वशक्तीनां प्रीतिः परमदुर्लभा॥ ५०
पशुशक्तिर्नरशक्तिः पक्षिशक्तिस्तु सर्वदा। पूजिता त्रिगुणं कर्म सगुणं साधयेद्ध यतः॥
तेन सर्वप्रयत्नेन कर्तव्यं पूजनं महत्। राजादिभयमापन्ने ग्रहादिभयमेव च॥
शुभाशुभानि कर्माणि विचिन्त्य बलिमाहरेत्। विल्वमूले प्रान्तरे वा श्मशाने वापि साधकः॥
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत्। गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि॥
शुभाशुभं फलं व्यक्तं ब्रूहि गृह्ण बलिन्तव। एवमुच्चार्य दातव्यो बलिः कुलजनप्रियः॥ ५५
कालीकालीति वक्तव्यस्तत्तोमा शिवारूपिणी। पशुरूपा समायाति परिवारगणैः सह॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरा। तदैव मङ्गलं तस्य नान्यथा साधकस्य च॥
यदि न भुज्यते तत्र तदा नैव शुभं भवेत्। नित्ये नैमित्तिके काम्ये बलिं दद्यात् प्रयत्नतः॥

अति गुप्तेन कर्तव्यं बलिदानं शुभावहम् । कुलपूजां प्रवक्ष्यामि यथाशास्त्रविधानतः ॥
(कुलागमे) कुलवारे कुलाष्टम्यां चतुर्दश्यां विशेषतः । कुलतिथौ कुलर्क्षे च कुलपूजां समाचरेत् ॥ ६०
योगिनीपूजनं यत्र प्रधानं कुलपूजनम् । यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छितप्रदः ॥
तथा कुलतिथौ देवी पूजिता वरदायिनी । नित्यश्राद्धं तथा सन्ध्यावन्दनं पितृतर्पणम् ॥
तथैव कौलिकानाञ्च नित्यता कुलपूजने । एकरात्रं द्विरात्रं वा नहि चेत् कुलपूजनम् ॥
तदा तं साधकं त्यक्त्वा लयमेष्यति चण्डिका । कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये ॥
तस्माद् यः पूजयेद्भक्त्या भुक्तिमुक्त्योः स भाजनम् । अनधीतोऽप्यशास्त्रज्ञो गुरुभक्तो दृढव्रतः ॥ ६५
कुलपूजारतो यस्तु स मे प्रियतरो भवेत् । इच्छासिद्धिफलं दद्यात् पूजिता सुवधूरिव ॥
अपूजिता यदा देवी दुःखदा कुवधूरिव । कुलपूजान्तरायन्तु यः करोति हि दुर्मतिः ॥
स याति नरके घोरे एकविंशतिभिः कुलैः । त्रिगुणं यत्र यद्यत् स्यात् सगुणं कुलपूजनात् ॥
कुलावलोकनं चेत् स्यात् कुतः प्रोक्षणमार्जनम् । क स्नानं क च वा शुद्धिः क च न्यासविशोधनम् ॥
तस्मात् सर्वप्रयत्नेन कुलपूजां समाचरेत् । लभते सर्वसिद्धिञ्च नात्र कार्या विचारणा ॥ ७०
कथ्यते कुलवारादिनिर्णयः सिद्धिहेतवे । द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ॥
विषमाश्चाकुलाः सर्वाः शेषाश्च तिथयः कुलाः । रविः सोमो गुरुः शौरिश्चत्वारश्चाकुला मताः ॥
भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः । वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् ॥
कुलानि समधिष्ठानि शेषाण्यकुलभानि च । तिथिवारे च नक्षत्रे चाकुले स्थायिनो जयः ॥
कुलर्क्षे जयिनो नित्यं साम्यञ्चैव कुलाकुले । पौर्णमास्यन्तमासेन तिथिकृत्यं विधीयते ॥ ७५
महाष्टम्येव विज्ञेया कुलाष्टमी सुसिद्धिदा । कथितः कुलवारादिनिर्णयः सिद्धिहेतवे ॥
स्नानं पाद्यार्घ्यपर्यन्तं स्वकल्पोक्तं विधाय च । लाक्षारस हे वीरस्तूलिकां रचयेत्ततः ॥
नटी कापालिकी वेश्या रजकी नापिताङ्गना । ब्राह्मणी : कन्या च तथा गोपालकन्यका ॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्तिताः । (यद्वा) चण्डाली चर्मकारी च मागधी पुक्कसी तथा ॥
श्वपची खट्टिका चैव कैवर्त्ती विटयोषितः । कुलाष्टकन्तु कथितमकुलाष्टकमुच्यते ॥ ८०
कल्मषी चैव शौण्डी च शस्त्रजीवी च राक्षसी । गोमुखी रजकी शिल्पी वेनकी च तथाष्टमी ॥
(यद्वा) गणिका शौण्डिकी चैव कैवर्त्ती रजकी तथा । तन्त्रकारी चर्मकारी मातङ्गी पुक्कसी तथा ॥
(यद्वा) नटी कापालिकी वेश्या पुक्कसी योगिनी तथा । रजकी रजकी चैव सैरिन्ध्री च विलासिनी ॥
खटिका घटिका चैव तथा गोपालकन्यका । विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः ॥
उक्तजात्यङ्गना ावे भैरवीं तत्रतां यजेत् । मन्त्रतन्त्रसमायुक्ताः समयाचारपालकाः ॥ ८५
अघोराश्च व्रत रा योगमुद्राधरास्तथा । गुरुभक्ता देवभक्ता घृणालज्जाविवर्जिताः ॥
सङ्गोपनरताः प्रायस्तरुण्यः सिद्धिदायिकाः । दीक्षिता मनुना येन केन मूलेन वा पुनः ॥
तत्र वर्ज्या च या नारी कथ्यते तन्त्रमार्गतः । विकृतां विधवां व्यङ्गीं वृद्धाञ्चैव तपस्विनीम् ॥

हीनाङ्गीं हीनवसनां कुटिलां कलहप्रियाम् । लोकवेदविरुद्धाञ्च तथा निष्ठुरभाषिणीम् ॥
मिथ्याप्रलापनिरतां मिथ्याचारमदोत्सुकाम् । ईर्ष्यादिदोषसंयुक्तां प्रमत्ताञ्च विवर्जयेत् ॥ ९०
विकृतास्यामदीक्षितां सविकल्पकमानसाम् । वर्षीयसीं पापरतां क्रूरामत्यन्तलोलुपाम् ॥
अतर्कमानसां हीनां वर्जयेत् साधकोत्तमः । ततः समानयेद्वीरः पूर्वोक्ताष्टकुलोद्भवाम् ॥
अक्रूराञ्च सुरूपाञ्च सालङ्कारां सुदीक्षिताम् । घृणाद्योवर्जितां शान्तां शिववाक्यदृढव्रताम् ॥
गुरुदेवपदे भक्तां युवतीं साधिकां पराम् । स्वकान्तां परकान्तां वा विदग्धां चारुहासिनीम् ॥
तस्यै पाद्यादिकं दत्त्वा स्थापयेत्तुलिकोपरि । साधयेत् सिद्धिमतुलां साधकः स्थिरमानसः ॥ ९५
पूजाकाले शुभाः प्रोक्ताः शक्तयः सहजा बुधैः । तस्या देहे स्वकल्पोक्तन्यासजालं प्रविन्यसेत् ॥
देवी परा भगवती जगदाधाररूपिणी । ब्रह्मविष्णुशिवानाञ्च योनिरुत्पत्तिकारिणी ॥
सा योनिः सर्वभूतानां सृष्टिस्थितिलयात्मिका । गुणत्रयसमापन्ना वाक्यत्रयविभाविनी ॥
शृङ्गाररूपमापन्ना त्रिकोणाकारतां गता । भगरूपेण सर्वेषां भूतानां देहमध्यगा ॥
शिवसन्निधिमास्थाय रत्यर्थं लिङ्गरूपिणी । सर्वेषां जननी सा तु रत्यर्थं रमणी परा ॥ १००
पुंसो योनिः स्त्रियो योनिर्भगदा भगरूपिणी । यस्यान्तु जायते जन्तुस्तस्यां चान्ते प्रलीयते ॥
त्रिशक्तिसहिता योनिर्ब्रह्मविष्णुशिवात्मिका । देवी भगवती ख्याता भगवांश्च सदाशिवः ॥
एकैव परमा देवी भगलिङ्गस्वरूपिणी । सर्वेषां योनिरूपेण सा देवी भगरूपिणी ॥
योनिस्था योनिमध्यस्था योनिरूपस्वरूपिणी । त्रिकोणा सा त्रिगुणा सा त्रिदैवतमयी परा ॥
संयोगे चातुरी या या पूर्णता पञ्चमी स्मृता । तस्माद्योनौ यजेद्देवीं नित्यमानन्दरूपिणीम् ॥ १०५
प्रक्षाल्य गन्धतोयेन धूपयित्वाऽम्बुधूपकैः । सिन्दूररजसा चैव योनौ चक्रं समालिखेत् ॥
स्वकल्पोक्तविधानेन तत्र देवीं प्रपूजयेत् । सर्वयोनिमये देवि सर्वकामार्थदायिनि ॥
कामेश्वरि कामभूते कामुके सन्निधिं कुरु । अनेनाऽऽवाहयेद्देवीं स्वीयक्रममथाचरेत् ॥
पञ्चमीपूजने चैव वर्ज्यं स्वकुलमन्त्रकम् । यावत् पुंसां प्रसङ्गोऽत्र तावत् स्वैरं विवर्जयेत् ॥
यदि शङ्कास्पदं तत्र तदा देवीं विसर्जयेत् । प्रमादाद्यदि पापात्मा तत्सङ्गमनुगच्छति ॥ ११०
तदा कुष्ठी भवेत् सद्यो निन्दितां सिद्धिमाप्नुयात् । मद्यं मांसं विना यस्तु कुलपूजां समाचरेत् ॥
जन्मान्तरसहस्रस्य सुकृतं तस्य नश्यति । विधिवत् पूजनं कृत्वा जप्त्वा स्तुत्वा प्रणम्य च ॥
तस्यां यन्त्रं समालिख्य पुनस्तस्यां निवेदयेत् । यावत् सा विह्वला न स्यात्तावत्तां न विसर्जयेत् ॥
विसर्जनं विधायैव शक्तीच्छा यदि विद्यते । तस्या आज्ञां गृहीत्वा तु रेत् गै नं वं च वन् थु पू ॥
ततो जपेत् स्त्रियं गच्छन् शेषं पूर्ववदाचरेत् । मद्यं मांसं तथा चान्यं यत्किञ्चित् कुलसाधनम् ॥ ११५
तस्यै दत्त्वा ततः शेषं गुरवे विनिवेद्य च । तदनुज्ञां मूर्ध्नि कृत्वा शेषमात्मनि योजयेत् ॥
शक्तये दक्षिणां दत्त्वा सार्धं सञ्चिन्तयेत्ततः । कुलपूजनमेतत्तु कथितं सिद्धिहेतवे ॥
संक्षेपयजनं वक्ष्ये यथा तन्त्रानुसारतः । आलिङ्गनं भवेन्न्यासश्चुम्बनं ध्यानमीरितम् ॥

शीत्कारं यजनं प्रोक्तं नैवेद्यं नखलेखनम् । पानं जिह्वामृतं ज्ञेयं रमणञ्च जपो भवेत् ॥
आनन्दस्तवनं विद्धि रेतःपातो विसर्जनम् । अद्वैतज्ञानमाश्रित्य सदा देवीं समर्चयेत् ॥ १२०
अश्वमेधशतेनापि ब्रह्महत्याशतेन वा । पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ॥
पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्तकम् । जिह्वोपस्थपरित्यागी कर्मणा किं करिष्यति ॥
तावत् कर्माणि कुर्वीत यावज्ज्ञानं न जायते । पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः ॥
जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः । नहि ध्यानात् परो मन्त्रो न देवस्त्वात्मनः परः ।
नानुसन्धात् परा पूजा न हि तृप्तेः परं फलम् । मन्त्रोदकैर्विना सन्ध्यां जपहोमैर्विना तपः ॥ १२५
उपचारैर्विना पूजां योगी नित्यं समाचरेत् । देहो देवालयो देवि जीवो देवः सदाशिवः ॥
त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत् । जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ॥
पाशबद्धः पशुर्देवि पाशमुक्तः सदाशिवः । तुषेण बद्धो व्रीहिः स्यात् तुषाभावे तु तण्डुलम् ॥
कर्मबद्धः सदा जीवः कर्ममुक्तः सदाशिवः । ध्यायतां क्षणमात्रम् वा श्रद्धया परमन्त्विह ॥
यद्भवेत्तन्महापुण्यं तस्यान्तो नैव गम्यते । क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥ १३०
तत्सर्वं पातकं हन्यात्तमः सूर्योदये यथा ॥

स्नातं तेन समस्ततीर्थसलिलैः दत्ता च पृथ्वी द्विजे
नूनं तेन सुतर्पिताश्च पितरो देवाश्च संपूजिताः ।
यज्ञानाञ्च सहस्रमेवमखिलं तेनैव सर्वं कृतं
यस्य ब्रह्म विचारणे क्षणमपि प्राप्तञ्च धैर्यं मनः ॥

व्रतक्रतु तपस्तीर्थदानदेवार्चनादिषु । यत्फलं कोटिगुणितं तदेवाप्नोति तत्त्ववित् ॥ १३५
उत्तमा सहजावस्था मध्यमा ध्यानधारणा । जपस्तुतिः स्यादधमा होमपूजाऽधमाधमा ॥
उत्तमा तत्त्वचिन्ता स्याज्जपचिन्ता तु मध्यमा । शास्त्रचिन्ताऽधमा ज्ञेया लोकचिन्ताऽधमाधमा ।
यो निन्दास्तुतिशीलस्तु सुखदुःखारिबन्धुषु । समश्चेत् स तु योगीन्द्रो हर्षाहर्षविवर्जितः ॥
निस्पृहो नित्यसन्तुष्टः समदर्शी जितेन्द्रियः । आस्ते देहे प्रवासीव स योगी परतत्त्ववित् ॥ १४०
निःसङ्कल्पो निर्विकल्पो निर्जितोपाधिवासनः । निजस्वरूपनिर्मग्नः स योगी परतत्त्ववित् ॥
यथा पङ्ग्वन्धबधिरक्लीवोन्मत्तजडादयः । निवसन्ति च सर्वत्र स योगी परमो मतः ॥
पञ्चमुद्रासमुत्पन्न परमानन्दनिर्भरः । य आस्ते स तु योगीन्द्रः पश्यत्यात्मानमात्मनि ॥
येन युक्तेन मनसा प्रसन्ना चण्डिका भवेत् । तेन सन्तुष्टहृदयैः सेव्या देवी न संशयः ॥
इति ज्ञानानन्दपरहंसविरचिते कौलावलीनिर्णये नवम उल्लासः ॥ ९ ॥ १४५

---

## दशम उल्लासः

अथाचारं प्रवक्ष्यामि यथातन्त्रानुसारतः । सर्वभूतहिते युक्तः समयाचारतत्परः ॥
अनित्यकर्मसन्त्यागी नित्यानुष्ठानतत्परः । मन्त्रधारणमात्रेण शिवभावेन तत्परः ॥
परस्यां देवतायान्तु सर्वकर्मनिवेदकः । येषाञ्च निश्चला भक्तिर्गुरौ देवे मनावपि ॥
तेषां सिद्धिर्भवेदाशु नान्यथा कल्पकोटिषु । गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ॥
गुरुर्मनुर्गुरुर्जापो गुरुरेव परन्तपः । तेषां सिद्धिर्भवेदाशु नाभक्तस्य कदाचन ॥
प्रातरेव गुरुं ध्यायेत् ब्रह्मरन्ध्रे च साधकः । संपूज्य सकलं कर्म कुर्यात्तस्याऽऽज्ञया सदा ॥
विंशतिः पुरुषान् वापि सप्त सप्तत्रयोऽपि वा । अज्ञात्वा गुरुवंशानां शिष्यश्चेन्नष्टसन्ततिः ॥
ध्यात्वा गुरुकुलं नैव नष्टमार्गो भविष्यति । नष्टमार्गान् मन्त्रविद्ये न तादृक्सिद्धिगोचरे ॥
गुरूणां शिष्यभूतानां नास्ति चेत् सन्ततिक्रमः । तन्त्रमन्त्राश्च विद्याश्च निष्फला नात्र संशयः ॥
स्ववंशादधिको ज्ञेयो गुरुवंशः शुभावहः । उत्पादकब्रह्मदात्रोर्गरीयान् मन्त्रदः पिता ॥
अस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् । गमनं पूजनं स्वप्नं भोजनं रमणन्तथा ॥
गृहीत्वाऽऽज्ञां गुरोः कुर्यात्तस्य सिद्धिर्विना जपात् । गुरौ मनुष्यबुद्धिञ्च मन्त्रे चाक्षरभावनाम् ॥
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् । गुरौ मानुषबुद्ध्या न पश्येत् शिष्यः कदाचन ॥
कदाचिन्न लभेत् सिद्धिं मन्त्रैर्वा देवतार्चनैः । श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति च ॥
तेषां हि सुकृतं सर्वं पातकं भवति क्षणात् । चापल्यं परिहासञ्च गुरोः साक्षाद्विवर्जयेत् ॥
वृथा तु पूजनं मुद्रा क्रियते मन्दबुद्धिभिः । श्रीगुरौ संस्थिते साक्षात् किं वृथा ध्यानयोगतः ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम् । स याति नरकं घोरं सा पूजा विफला भवेत् ॥
यतः सर्वत्र मन्त्राणां गुरुपूजा गरीयसी । तदग्रे मन्त्रतन्त्राणां भाषणं नैव कारयेत् ॥
पूजिते गुरुपादे वै सर्वदेवः सुखी भवेत् । सर्वेषां मन्त्रतन्त्राणां पिताऽसौ यः सदाशिवः ॥
अन्यदेवसपर्या वा अन्यदेवस्य कीर्तनम् । गुरुदेवं विना चैव तदग्रे नरकं व्रजेत् ॥
गुरोः प्रीतिकरं कर्म यः कुर्यात् साधकोत्तमः । तस्याऽऽशु सिद्धयः सर्वाः सन्ति पादतले सदा ॥
कायेन मनसा वाचा यो भक्तश्चरणे गुरोः । तस्य सिद्धिर्भवेदाशु पूजाहोमजपादृते ॥
गुरुभक्तिविहीनश्चेत् हानिस्तस्य पदे पदे । प्रत्यक्षे वा परोक्षे वा प्रत्यहं प्रणमेद्गुरुम् ॥
गुरोरग्रे पृथक् पूजामौद्धत्यञ्च विवर्जयेत् । दीक्षां व्याख्यां प्रभुत्वञ्च गुरोरग्रे न कारयेत् ॥
सर्वथा तुष्टिमुत्पाद्य गुरोः प्रसादमालभेत् । ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम् ॥
न कुर्याद्गुरुणा सार्द्धं शिष्योऽपि च कदाचन । आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियवर्तनम् ॥
गुरुद्रोहमिदं प्राहुः यः कुर्यात् स च पातकी । स्नेहद्रव्यनियोगञ्च नाऽनिवेद्य गुरौ चरेत् ॥
अनिवेद्य तु यः कुर्यात् स भवेद्ब्रह्मघातकः । गुरुनाम न भाषेत जपकालादृते क्वचित् ॥
श्रीनाथ देव स्वामीत्यभिवादे साधने वदेत् । गुरुं तुङ्कृत्य हुङ्कृत्य वाचा निर्भर्त्स्य यः कदा ॥

देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताः । सिद्धिं सिद्धाधिवासांश्च श्रीपूर्वं समुदीरयेत् ॥
विकल्प्य कुलशास्त्राणि भवन्ति कुलराक्षसाः । एकाक्षरप्रदातारं यो गुरुञ्चावमानयेत् ॥
शुनो योनिशतं गत्वा चण्डालत्वमवाप्नुयात् । गुर्वग्रे न तपः कुर्यान्नोपवासव्रतादिकम् ॥
तीर्थयात्राञ्च यः कुर्यान्न कुर्यादात्म शुद्धये । न नियोगं गुरोर्दद्याद्दुरुक्तं न विभावयेत् ॥
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेत्ततः । अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया ॥
यस्तिलार्धं तदर्धं वा गुरुस्वमुपजीवति । मोहाल्लोभात् पतेद्वयस्तु नरके च तिसप्तके ॥
बह्वल्पं हि गुरोर्द्रव्यं अदत्तं स्वीकरोति यः । तिरश्चां योनिमालम्ब्य क्रव्यादैर्भक्ष्यते सदा ॥
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः । पतितस्यापि तस्यापि प्रायश्चित्तं न विद्यते ॥
तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् । गोब्राह्मणवधं कृत्वा यत्पापं समवाप्नुयात् ॥
शक्तिच्छायां गुरुच्छायां देवच्छायां न लङ्घयेत् । यद्यत्र गुरुणा सार्द्धं स्वपितुरुपविशेत्तु यः ॥
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश । गुरुवाक्यहतं कृत्वा आत्मवाक्यन्तु रोपयेत् ॥
गुरुं जतुं मनो यस्य पच्यते नरकार्णवे । अनेकधा पशोरन्नं भुञ्जते ये च कौलिकाः ॥
तेभ्यः प्रकुप्यते देवी तत्सङ्गं नैव कारयेत् । लक्षत्रयं जपेत्तोषां लक्षत्वाऽप्यजपां जपेत् ॥
होमयेद्धविषाऽऽज्येन निष्पापः स्यात्तदा ध्रुवम् । गुरुणाऽऽलोकितः शिष्य उत्तिष्ठेदासनं त्यजेत् ॥
गुरुणा सदसद्वापि यदुक्तं तन्न लङ्घयेत् । रभसं मैथुनं मिथ्या यो वदेद्गुरुमन्दिरे ॥
स याति नरकं घोरं शम्भुना परिभावितम् । न विशेदासने धीरो देवतागुरुसन्निधौ ॥
गुरोः सिंहासनं देयं ज्येष्ठानामुत्तमासनं । देश्यासनं कनिष्ठानामितरेषां समासनम् ॥
रिक्तहस्तो न पश्येत्तु राजानं दैवतं गुरुम् । फलपुष्पादिकं नीत्वा यथाशक्त्या समर्पयेत् ॥
एवं यो नाचरेन्मन्त्री ब्रह्मराक्षसतां व्रजेत् । आलिङ्गनप्रदानेन गुरौ तुष्टे सकृद्यदि ॥
तदा किम्वा न लभन्ते साधका गुरुसेवकाः । गुरुत्यागे ध्रुवो मृत्युर्मन्त्रत्यागाद्दरिद्रता ॥
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् । गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद्ध्रुवम् ॥
लक्षं श्रीपादुकामन्त्रं जप्त्वा पापात् प्रमुच्यते । मन्त्रत्यागकरः शिष्यस्तत्सङ्गं नैव कारयेत् ॥
लक्षमेकं जपन्मन्त्रं होमतर्पणतः शुचिः । ब्रह्मा पराशरव्यासविश्वामित्रादयः पुनः ॥
गुरुशुश्रूषणात् सिद्धिं प्राप्तास्ते भुवनत्रये । शिवो गुरुप्रसादेन सर्ववित् सर्वगः प्रभुः ॥
साधकः शिव एव स्याद्गुरौ तुष्टे सकृद्यदि । तदा किम्वा न लभन्ते साधका गुरुसेवकाः ॥
तस्मादेव प्रयत्नेन गुरुसेवां समाचरेत् । सर्वदा गोपयेदेनं गुरुञ्च मनुमेव च ॥
गुरुशय्यासनं यानं पादुकोपानहौ तथा । स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥
वृथा कालं न गमयेद्द्यूतक्रीड़ादिना सुधीः । गमयेद्देवतापूजाजपयागस्तवादिना ॥
गुरोः कृपालापकथास्तोत्रागमावलोकनैः । गमयेदनिशं कालं न वदेत् परदूषणम् ॥
रागलोभमदक्रोधपैशुन्यादि विवर्जयेत् । कुलाचारं गुरुं देवं मनसाऽपि न निन्दयेत् ॥

पूजां ध्यानं जपं होमं यथा कर्मचतुष्टयम्। प्रत्यहं साधकः कुर्यात् स्वयञ्चेत् सिद्धिमिच्छति॥
कन्यायोनिं पशुक्रीड़ां दिग्वस्त्रां प्रकटस्तनीम्। नालोकयेत् परद्रव्यं परदाराश्च वर्जयेत्॥ ६०
न निन्देद्व्रतिनं विप्रं वेदाङ्गसंहितास्तथा। पुराणागमशास्त्राणि कल्पांश्चापि न दूषयेत्।
अन्यमन्त्रार्चने श्रद्धामन्यमन्त्रप्रपूजनम्। एकस्यावाहनं कृत्वा नान्यसाधनमाचरेत्॥
अन्यस्य स्मरणाद्दुःखं योगिनीशापमालभेत्। अपमृत्युर्भवेत्तस्य मृते च नरकं व्रजेत्॥
किमधिकञ्चापरैः साध्यं तस्याः सर्वं यतो लभेत्। कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान्॥
सेवकान् प्रेरकान् वापि वाचकान्दर्शकांस्तथा। शिक्षकान् मोक्षकान् वापि योगिनीसिद्धिरूपकान्॥ ६५
कन्यां कुमारिकां नग्नामुन्मत्तामपि योषितम्। न निन्देन्न जुगुप्सेत न हसेन्नाऽवमानयेत्॥
नाप्रियं नानृतं ब्रूयात् कस्यापि कुलयोगिनः। कुरूपेति निकृष्टेति न वदेत् कुलयोषितम्॥
परीक्षयेन्न भक्तांश्च वीराणाञ्च कृताकृतम्। या काचिदङ्गना लोके सा मातृकुलसम्भवा॥
कुप्यन्ति कुलयोगिन्यो वनितानामतिक्रमात्। स्त्रीणां शतापराधेन पुष्पेणापि न ताड़येत्॥
कुलस्त्रीवीरनिन्दाञ्च तत्त्वद्रव्यापहारणम्। कुलरोधप्रहारञ्च वर्जयेन्मतिमान् सदा॥ ७०
स्त्रीमयञ्च जगत् सर्वं स्वयं तावत्तथा भवेत्। न हिंसेदखिलान् जन्तून्न निन्देद्वामलोचनाम्॥
न निन्देद्दक्षिणं वामं देववाक्यन्तथैव च। न निन्देत् शक्तिसिद्धान्तं शक्तिपूजनतत्परः॥
न निन्देद्वृद्धवाक्यन्तु न निन्देद्व वेदवादिनं। न निन्देद्बहुमान्यञ्च न निन्देच्च पतिव्रताम्॥
न निन्देद्देवलोकादीन्न निन्देत् समयस्थितान्। न निन्देद्बहुलं मांसं निन्दां सर्वत्र वर्जयेत्॥
प्रमत्तामन्त्यजां कन्यां पुष्पितां पतितस्तनीम्। विरूपां मुक्तकेशीञ्च कामार्त्ताञ्च न निन्दयेत्॥ ७५
शक्तिमयं जगत् सर्वं स्वयं तावत्तथा भवेत्। शक्तिरूपा यतो देवी सृष्टिमध्ये व्यवस्थिता॥
शक्तेः सृष्टिः समुत्पन्ना शक्तौ च लीयते पुनः। तस्मात् शक्तिः प्राधाना च पूजनीया प्रयत्नतः॥
भक्षयेद्योषिता सार्द्धं जुहुयादग्निसम्मुखे। आरक्तवसनां नारीं यत्नाद्भक्त्या समानयेत्॥
शक्तिपूजां सदा कुर्यात् प्रसन्ना येन जायते। सुखं शक्तिप्रसन्ने तु दुःखं तद्वर्जनाद्भवेत्॥
भक्ष्यं भोज्यं तथा पेयं गन्धं पुष्पं तथा पुनः। शक्तौ निवेद्य प्रथमं तथा चाऽऽभरणादिकम्॥ ८०
तत्पश्चादात्मसात् कुर्यात् सिद्धार्थी साधकश्च यः। शक्तौ दर्पं घृणां लज्जां वर्जयेत् क्रोधदर्शनम्॥
कदाचिद्दर्परूपेण पुष्पेणापि न ताड़येत्। शक्तौ न विस्मयं कार्यं यस्मात् क्रुद्धा च चण्डिका॥
विस्मिते बहुलं नाशं मृत्युलाभमवाप्नुयात्। मृतेऽपि नरकं याति श्रियमाप्नोति पूजनात्॥
चर्व्यं चोष्यं लेह्यपेयं भक्ष्यं भोज्यं गृहं सुखम्। सर्वञ्च युवतीरूपं भावयेत् यतमानसः॥
कुलजां युवतीं वीक्ष्य नमस्कुर्यात् समाहितः। यदि भाग्यवशेनैव कुलदृष्टिस्तु जायते॥ ८५
तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत। बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीन्तथा॥
कुत्सितां वा महादुष्टां नमस्कृत्य विसर्जयेत। तासां प्रहारं निन्दाञ्च कौटिल्यमपि चाप्रियम्॥
सर्वथा न च कर्त्तव्यमन्यथा सिद्धिरोधकृत्। स्त्रियो देव्यः स्त्रियः प्राणाः स्त्रिय एव विभूषणम्॥

स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रिया अपि । न पश्येत् पतितां नग्नामुन्मत्तां प्रकटस्तनीम् ॥
दिवसे न रमेन्नारीं तद्योनिं न निरीक्षयेत् । विपरीतरता सा तु भविता हृदयोपरि ॥
स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियः । जपस्थाने महाशङ्खं निवेश्योर्ध्वं जपञ्चरेत् ॥
स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात् कुलजां शुभाम् । मांसमत्स्यदधिक्षौद्रभक्ष्यद्रव्ये यथारुचि ॥
भोज्यान्नासनभक्तानि भुक्त्वा भक्ष्यं चरेज्जपम् । विना पीत्वा सुरां भुक्त्वा मांसं गत्वा रजस्वलाम् ॥
यो जपेच्चण्डिकां देवीं दुःखन्तस्य पदे पदे । अन्तःशाक्ता बहिःशैवाः सभायां वैष्णवा मताः ॥
नानावेशधराः कौला विचरन्ति महीतले । कुलपूजादिलिङ्गैस्तु रहितो विष्णुतत्परः ॥
गच्छन् स्वपन् भ्रमन् वापि स्खलन् विष्णुपरायणः । हरिनाम्ना जातभावो भावाखिलविचेष्टितः ॥
जय विष्णो हरे ब्रह्मन् नानार्थपरविस्तरैः । स्मर्त्तव्या च महादेवी कुलीनैर्विपिने गृहे ॥
रात्रौ पर्यटनञ्चैव रात्रौ च शक्तिपूजनम् । न करोति कथञ्चैव साधकः कौलिको भवेत ॥
बधिरान्धिद्विरेकैः सदा सङ्गविलङ्घितः । दिक्कालनियमो नात्र स्थित्यादिनियमो न च ॥
न जपे कालनियमो नार्चादिषु बलिष्वपि । स्वेच्छानियम उक्तोऽत्र शक्तिमन्त्रस्य साधने ॥
स्नानादिमानसं शौचं मानसः प्रवरो जपः । पूजनं मानसं दिव्यं मानसं तर्पणादिकम् ॥
सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् । न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ॥
वस्त्रासनस्थानगेह देहस्पर्शादिधारिणः । शुद्धिं न चाचरेत्तत्र निर्विकल्पं मनश्चरेत् ॥
नात्र शुद्धेरपेक्षास्ति न चामेध्यादिदूषणम् । य एवं चिन्तयेन्मन्त्री सर्वकामार्थसिद्धिभाक् ॥
गद्यपद्यमयी वाणी सभायां तस्य जायते । तस्य दर्शनमात्रेण वादिनो निष्प्रभां गताः ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः । सर्वदेवमयं देहं सर्वदेवमयीं तनूम् ॥
आत्मानं देवतारूपं अद्वैतं परिचिन्तयेत् । आत्मा च परमात्मा च अगद्व्यापी स्वयं विभुः ॥
आत्मानं ब्रह्मरूपञ्च सर्वदा परिचिन्तयेत् । शत्रवश्चापि मित्रन्ति साक्षाद्दासन्ति भूमिपाः ॥
वाचयन्ति यशः सर्वे साधकानां सुनिश्चितम् । दुर्मुखाः सुमुखाः सर्वे गर्विता प्रणमन्ति च ॥
बाधकाः साधका यान्ति साधकस्य विशेषतः । सर्वदा पूजयेद्देवीमस्नातः कृतभोजनः ॥
महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत् । अत्यन्तरोगयुक्तो वा शुचिर्वाऽप्यथवाऽशुचिः ॥
अकालेऽप्यथवा काले अधिकारी सदैव हि । कृतार्थमन्यमानस्तु सन्तुष्टनिजमानसः ॥
नाधर्मो विद्यते किञ्चित् किञ्चिद्धर्मो महान् भवेत् । कुलान्नञ्चैव भुञ्जीत कुलीनेन सह स्वपेत् ॥
कुलप्रसङ्गः कर्त्तव्यः कुलीनैर्न पशोः क्वचित् । यस्मिन्मन्त्रे य आचारस्तस्य धर्मस्तु तादृशः ॥
तद्धस्तावचितं भोज्यं तद्धस्तावचितं जलम् । तद्धस्तावचितं पुष्पं देवताभ्यो निवेदयेत् ॥
षडङ्गन्यासमाचर्य ध्यात्वा रात्रौ जपेत् सुधीः । सदाकालं जपेन्मन्त्रं सर्वसिद्धिपरायणः ॥
न दोषः सर्वदा जापे सर्वदेशेऽपि सर्वदा । जपनिष्ठो जपेद्यस्तु सर्वयज्ञफलं लभेत् ॥
सर्वेषामेव यज्ञानां जपयज्ञः प्रशस्यते । रात्रौ जपैकमात्रेण सिद्धिदा चण्डिका भवेत् ॥

इड़ायाञ्च गते रात्रौ शक्तिमन्त्रं जपेद्‌ यदि। पिङ्गलायां गते जीवे पुंमन्त्रं प्रजपेत् सदा॥
न चेज्जन्मसहस्रैस्तु नैव सिद्धिः प्रजायते। कृतार्थस्तेन जायेत स्वर्गो वा मोक्ष एव वा॥ १२०
भ्रान्तिरत्र न कर्त्तव्या सिद्धिहानिः प्रजायते। विस्मिता विलयं यान्ति पशवः शास्त्रमोहिताः॥
विशुद्धचित्तोऽत्र भवेत् सिद्धिः स्यादपवर्गदा। एतैस्तु तत्क्षणात् सिद्धिर्विस्मयो नास्ति चापरः॥
सर्वाचारपरिभ्रष्टः कुलाचारं समाचरेत्। कुलाचारपरिभ्रष्टो रौरवं नरकं व्रजेत्॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि। कुलभ्रष्टस्य कुत्रापि न दृष्टा निष्कृतिः क्वचित्॥
आपदं दुरितं रोगो दारिद्र्यं कलहो भयम्। योगिनीनां प्रकोपश्च स्खलितानि पदे पदे॥ १२५
भ्रंशमानः प्रणष्टश्च तेजोहीनश्च दुर्मतिः। निन्दितः सर्वविद्विष्टो विह्वलः सङ्गवर्जितः॥
देशाद्देशान्तरं याति कार्यहानिश्च सर्वदा। तत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालिकाः॥
भक्षयन्ति पुरा तासां वरो दत्तो मयैव तु। तस्मादाचारवान् वीरो योगिनीनां प्रियो भवेत्॥
कुलाचारेण देवत्वं योगिनीवीरमेलनम्। तिर्यग्योनिं समाप्नोति कौलिकस्तद्विपर्ययात्॥
आज्ञासिद्धिर्भवेत्तस्य आचारपालनात् सदा। संस्कारस्य विहीनत्वाद्‌ गुरुवाक्यस्य लङ्घनात्॥ १३०
आचारवर्जनाच्चैव कौलिकः पतितो भवेत्। भोगो मोक्षायते तस्य पातकं सुकृतायते॥
मोक्षायते च संसारः साधकशुद्धभावतः। पञ्चतत्त्वेन कर्त्तव्यं सदैव पूजनं महत्॥
अतिगुप्तेन कर्त्तव्यं सर्वथैव सुनिश्चितम्। इत्याचारपरः श्रीमान् जपपूजापरायणः॥
पालकः कुलतत्त्वानां परतत्त्वे प्रलीयते। अणिमाद्यष्टसिद्धीनामाश्रयः साधको भवेत्॥
प्रायश्चित्तं भृगोः पातं सन्न्यासं व्रतधारणम्। कायक्लेशञ्च नास्तिक्यं तीर्थयात्रामुपोषणम्॥ १३५
वर्जयेच्च प्रयत्नेन यदीच्छेत् सिद्धिमात्मनः। वीरहत्या वृथापानं वीरद्रव्यापहारिता॥
वीरस्त्रीगमनञ्चापि तत्संसर्गाच्च पञ्चमम्। महापातकमित्युक्तं सर्वथा परिवर्जयेत्॥
कुसुम्भं नालिकाञ्चैव चिञ्चामेव न खादयेत्। भुक्त्वा चान्द्रायणं कुर्यात् सिद्धविद्याप्रपूजकः॥
इक्षुखण्डं न भुञ्जीत शिवा कालीति नो वदेत्। न छेदयेत् कदम्बञ्च त्रिपुरापूजकः सदा॥
प्रमादाद्यदि कुर्वीत सुन्दरीशापमाप्नुयात्। कुलधर्मं समाश्रित्य आचारं यो न पालयेत्॥ १४०
यथेच्छाचारिणस्तस्य महापातकिनः सदा। निष्कृतिर्नास्ति तस्यैव महारौरवसंकुले॥
स सदा पशुरित्युक्तो देवताशापमाप्नुयात्। गुप्तप्रकटसम्भूतं ज्ञानाज्ञानकृतन्तथा॥
निषिद्धाचरणं यत्र कुत्रापि यदि जायते। प्रायश्चित्तं तत्र तत्र कर्त्तव्यं साधकेन च॥
निषिद्धाचरणे सम्यक् पापस्य गुरुलाघवम्। देशं कालं वयो वित्तं सम्यक् ज्ञात्वा यथाविधि॥
प्रायश्चित्तं गुरोः कुर्यात् सर्वपापविशुद्धये। शिष्योऽपि खलु तत्प्रोक्तं प्रायश्चित्तं समाचरेत्॥ १४५
अथवा सर्वपापानां गुरुनामजपः स्मृतः। जाम्बूनदस्य कलुषं परिशुद्धं यथाऽग्निना॥
अनाचारस्य मालिन्यं प्रायश्चित्ताऽग्निना दहेत्। लक्षं नाम्नो गुरोर्जापे सर्वपापाद्विशुद्ध्यति॥
अथवाऽप्यजपालक्षं लोपालक्षत्रयन्तथा। जपान्मुच्येत पापेभ्यः सर्वेभ्यः साधकः सदा॥

वियच्छून्ययुतः शक्तिः सविसर्गोऽजपामनुः । वियच्छक्तिस्ततः कामः क्षौणी च परमेश्वरी ॥
आकाशं भृगुकामौ च शिवः शक्रश्च पार्वती । चन्द्रोऽनङ्गो धरा देवी लोपामुद्रा प्रकाशिता ॥ १५०
बहुनाऽत्र किमुक्तेन रहस्यं कथ्यतेऽधुना । वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ॥
प्रजादोषश्च राजानं जायादोषं पतिं यथा । तथा प्राप्नोत्यसन्देहः शिष्यपापं गुरुः सदा ॥
गुरुस्त्रिवारमाचारं कथयेच्च स्वशिष्यके । न गृह्णाति हि शिष्यश्चेत् तदा पापं गुरोर्न हि ॥
कुलधर्मप्रसङ्गन्तु पशूनां पुरतस्त्यजेत् । कदाचिन्नैव कुर्याद्धि शूद्राग्रे वेदपाठवत् ॥
पीठक्षेत्रागमाम्नायं तद्विद्याचारकौलिकान् । कुलद्रव्यादिकञ्चापि न वदेत् पशुसन्निधौ ॥ १५५
यथा रक्षति चौरेभ्यो धनधान्याम्बरादिकम् । कुलधर्मं तथा चैव पशुभ्यः परिरक्षयेत् ॥
सुगुप्तकौलिकाचारमनुगृह्णन्ति देवताः । वाञ्छासिद्धिमवाप्नोति नाशयन्ति प्रकाशकान् ॥

या देवी भुवनेश्वरी त्रिभुवन लोकोद्धृता ह्यग्रतो
विद्यास्वीकृता स्वकीयवपुषो वर्णाश्रिता देवता ।
सा नित्या सकला गृहस्थनिलया कान्ताद्भुता कोमला
नित्यं पञ्चगुणैर्भजस्व तपसा भोगेन तां साधकः ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये दशम उल्लासः ॥ १० ॥

---

## एकादश उल्लासः

अथ भावं प्रवक्ष्यामि यथा तन्त्रानुसारतः। भावस्तु त्रिविधः प्रोक्तो दिव्यवीरपशुक्रमात्॥
गुरुश्च त्रिविधश्चैव तथैव मन्त्रदेवता। आद्यभावो महान् श्रेयान् सर्वसिद्धिप्रदायकः॥
द्वितीयो मध्यमश्चैव तृतीयो विश्वनिन्दितः। बहुजापात्तथा होमात् कायक्लेशादि विस्तरैः॥
न भावेन विना चैव यन्त्रमन्त्राः फलप्रदाः। किं वीरसाधनैर्लक्षैः किम्वाऽऽकृष्टकुलाकुलैः॥
किं पीठपूजनेनैव किं कन्याभोजनादिभिः। स्वकुले प्रीतिदानेन किं परेषान्तथैव च॥
किं जितेन्द्रियभावेन किं कुलाचारकर्मणा। यदि भावविशुद्धात्मा न स्यात् कुलपरायणः॥
भावेन लभते मुक्तिं भावेन कुलवर्धनम्। भावेन गोत्रवृद्धिः स्याद्भावेन कायशोधनम्॥
किं न्यासविस्तरेणैव किं भूतशुद्धिविस्तरैः। किं वृथा पूजनेनैव यदि भावो न जायते॥
केन वा पूज्यते विद्या न वा केन प्रजप्यते। फलाभावश्च नियतं भावाभावात् प्रजायते॥
प्रथमं दिव्यभावस्तु कथ्यते तन्त्रवर्त्मना। यद्वर्णदेवता यत्र तत्तेजःपुञ्जपूरितम्॥
तेजोमयं जगत् सर्वं विभाव्य मूर्त्तिकल्पनम्। तत्तन्मूर्त्तिमयैर्मन्त्रै स्वेन स्वेनैव वा पुनः॥
आत्मानं तन्मयं दृष्ट्वा सर्वं भावं तथैव च। तत्सर्वं योषिति ध्यात्वा चिन्तयेद्‌ यतमानसः॥
अष्टाब्दात् षोड़शाब्दान्तं युवतीति प्रचक्ष्यते। तत्र भावप्रकाशश्चेत् स भावः परमो मतः॥
चरणान्मूलपर्यन्तं पीत्वा पीत्वा पुनः पिबेत्। तस्या नखशशिज्योत्स्नाखण्डिताघतमो भवेत्॥
स्निग्धान्तःकरणो वीरो निर्विकारः सदा भवेत्। सुवृत्तजानुना चारुजङ्घोरुजघनश्रिया॥
नाभिरोमावली वक्षःस्थलैः पीनपयोधरैः। ग्रीवानयनपर्यन्तं केशाग्रैः प्रकरस्मितैः॥
यावन्मधुमदा पूर्णदिव्यभावविलोकितैः। स्निग्धेन्द्रियश्च सन्तुष्टश्चतुर्वर्गपदाश्रयः॥
ततः कामकलां ध्यायेत् साधकः स्थिरमानसः। निवृत्तिकाले पुनस्तस्या भावपूर्णामृतैर्निजम्॥
मुखं विन्दुवदाकारं तदधः कुचयुग्मकम्। तदधः सपरार्धञ्च चिन्तयेत्तदधोमुखम्॥
सर्वविद्यामृतापूर्णं सर्ववाग्विभवप्रदम्। सर्वार्थसाधकञ्चैव सर्वरञ्जनकारकम्॥
सर्वदेवादिभूतञ्च सर्वदेवनमस्कृतम्। सर्वाह्लादनसम्पूर्णं सर्वमोहन कारणम्॥
सर्वार्थसाधनञ्चैव सर्ववश्यप्रवर्त्तकम्। एवं कामकलाध्यानं सुगोप्यं साधकोत्तमैः॥
एतद्रूपन्तु चात्मानं चिन्तयेत् साधकः सदा। मेढ्रस्थाने शिवाकारमाधारे कनकप्रभम्॥
नाभिस्थं सूर्यविम्बाभं तरुणादित्य वर्चसम्। हृदि वह्निशिखाकारं तदूर्ध्वे भास्करद्युतिम्॥
कण्ठे दीपशिखाकारं घण्टा वैदूर्यसन्निभम्। लम्बिके चन्द्रविम्बाभं भ्रूमध्ये रत्नवद्रुचिम्॥
नयने विश्वतेजश्च चिन्तयेदेषु साधकः। धृत्वा स्पृष्ट्वाऽथवा दृष्ट्वा ध्यात्वा कामकलातनूम्॥
कुलेषु तत्कलारूपमकुले परिचिन्त्य च। क्षणं तद्वद्विमर्शेन जायते भावसञ्चयः॥
कुलीनो जायते यस्मात्तत् सर्वं कथितं शुभम्। कुले साक्षाद्‌ यतस्तत्त्वं देवी तिष्ठति तत्त्वतः॥
तेन तत्कुलशास्त्राङ्गे पूजनीया प्रयत्नतः। कुलदेवी चाद्या देवी निश्चला यस्य विद्यते॥

स धन्यः पुरुषो लोके निश्चलो यत एव सः । इति कामकलाध्यानं कथितं सर्वसिद्धिदम् ॥
परयोपाधिका ज्ञेया निजस्त्री प्रीतिवर्द्धिनी । आगते स्वागतं कुर्याल्लीलायोगात् स्वलीलया ॥
तल्पाच्चोत्थाप्य हस्ताग्रे धृत्वा सम्वेशयेत्ततः । वामभागसमासीनां सुवेशीं कामरूपिणीम् ॥
ध्यात्वा कामकलां तत्र विन्द्वादिपूर्वं विग्रहाम् । गन्धमाल्यन्ततो दत्त्वा कुलद्रव्याणि योजयेत् ॥
हेतुयुक्तं सताम्बूलं दत्त्वा भुक्त्वा च साधकः । पृच्छेत् कुलकथां सर्वां लौकिकालौकिकादिकाम् ॥
तस्यां निन्दाभयक्रोध कटूक्तियोजनं यदि । करोति कुलशास्त्रज्ञः सिद्धोऽपि नश्यति ध्रुवम् ॥
कृत्वा दोषादिकं तत्र स्नेहदृष्टीव शिक्षया । भावयेन्न कटूक्त्या वै कृते तु निष्फलं भवेत् ॥
कुलशास्त्रे रहस्यन्तु कुलमूलं ततो जगत् । वरं कुलमनोस्त्यागो वरं कुलगुरोरपि ॥
न त्यागयोग्यं स्वकुलं दृष्टदोषेण सर्वथा । स्वकुले कुलवाहुल्यं यदि स्याद्भाग्ययोगतः ॥
समरूपं विधातव्यं वैपरीत्यं परित्यजेत् । पृथक् स्थानं पृथग्ध्यानं पृथक् पूजा पृथक् स्तुतिः ॥
न कर्त्तव्या प्रयत्नेन किमेभिर्बहु जल्पितैः । वीरापत्यकुले चैव वीरपत्नीकुलेऽपि च ॥
सदा तिष्ठति देवेशि नात्र कार्या विचारणा । तासां निश्वासयोगेन तद्देशश्चैव नश्यति ॥
प्रमोदादमृतस्नानं देव्याः स्यान्नात्र संशयः । कुलजा सा महायुद्धे वीरास्फालननादिनी ॥
न दोषमनुगच्छन्ती पालयन्ती यतो जगत् । मात्सर्यं पतिविद्वेषः कटूक्तिः कलहादिकम् ॥
नीचाभिगमनाद्यं च न सा देवी हरप्रिया । एवं कुलं परित्यज्य साधयेत् सिद्धिमात्मनः ॥
फलपाकविधानं हि कथ्यते तन्त्रवर्त्मना । वीरपत्नी च परमा स्वयमेव महेश्वरी ॥
तत्सुता कुलविद्यानामाद्या रौद्री सनातनी । तद्वधू भुवनेशानी सर्वमन्त्रप्रबोधिनी ॥
न्यायतोऽन्यायतो वापि वीरपत्नी गुरुर्यदि । दीक्षणादेव सर्वार्थसाधकः साधको भवेत् ॥
यदि भाग्यवशाद्देवि वीरपत्नी तु लभ्यते । फलपाकं तत्र कृत्वा किं न सिध्यति भूतले ॥
फलपाकविधानन्तु सर्वदेवनमस्कृतम् । दृष्टादृष्टफलञ्चैव देवगन्धर्वकिन्नराः ॥
आयान्ति फलपाकार्थं तस्माद्यत्नविशेषतः । विसर्जनं विधातव्यं गोपनं भावशक्तिकम् ॥
तत्तत्कल्पविधानेन कुलं कुर्यात् सुशिक्षितम् । यतः पतिव्रताधर्मात् धर्मो नास्ति जगत्त्रये ॥
पतिः प्राणप्रदो नित्यं पतिरेव परा गतिः । पतिरेव परं ब्रह्म पतिः प्राणाधिकः प्रभुः ॥
सर्वतीर्थमयः स्वामी सर्वदेवमयः पतिः । सर्वदेवीमयश्चैव पतिरेव महागुरुः ॥
सर्वदेवमयं हित्वा या नारी परगोचरा । शूकरी गर्दभी काको शृगाली जायते ध्रुवम् ॥
अहन्तु पुत्रवद्देवि नात्र भीतिर्न च त्रपा । तव लिङ्गे यो हि याति पतिरूपधरः क्वचित् ॥
मूलमन्त्रजपतोयं तद्गात्रे देयमीश्वरि । तदा यदि वह्निर्न स्यात्तदा स्वपतिरेव हि ॥
इत्यादिशिक्षया कार्याः शिक्षिताः कुलयोषितः । आगत्योपविशेत् पार्श्वे मुखं वीक्ष्य स्थिरा भवेत् ॥
पतिभावेङ्गिते दक्षा हृष्टा स्यात् पतिदर्शने । उत्तरे नोत्तरं दद्यात् व्याहरेच्छुभकर्मणि ॥
रक्षां कृत्वा विधानेन साधकः स्थिरमानसः । योगिनीनां महापूजा बटुकानां तथैव च ॥

कार्या विघ्नविनाशार्थं कुलवारक्षयोगतः। तासां मूलतरोर्मूले मूलविद्याञ्च कालिकाम्॥ ६०
विसर्जनविधौ कुर्यात् साधकः कुलपातनम्। यद्रूपे प्रीतिरेतस्य कुलस्य कुलवित्तमः॥
तद्रूपं विग्रहं कृत्वा साधकः स्थिरमानसः। तत्र बीजार्पणं कृत्वा कुर्वन्ति कुलरक्षणम्॥
लिङ्गैर्वाक्यैः पदैश्चैव ज्ञात्वा कुलसमुद्भवम्। देवजातं नरैर्जातं यथार्थंकुलशास्त्रतः॥
ज्ञात्वा कुलविभागन्तु पञ्चमात् परतो बुधः। सप्तमाष्टममासाद्वा वृक्षमध्ये सरोवरे॥
हस्तं दत्वा पादुकाख्यां विद्यां संहारयोगतः। जपेदष्टसहस्रं वै स्वयं वृक्षात् पतिष्यति॥ ६५
पादुकां पूजयामीति कथितः पादुकामनुः। एवं कृते यत् पतितं तत्फलं देवनिर्मितम्॥
स्वस्त्रामिकञ्च पतति वैपरीत्यागमागमात्। एतल्लिङ्गफलं ज्ञात्वा आनीय क्षालयेत्ततः॥
गन्धद्रव्यं कटुद्रव्यं दत्वा च साधकोत्तमः। धेनुमुद्रामृतीकृत्य होमं कुर्यादलक्षितः॥
रात्रावेवं विधायैव यज्ञशेषं भुजेत्तत। भुक्तमात्रे तु तस्मिन् वै चिरजीवी क्षितौ भवेत्॥
मुख्या मधुमती तस्य करस्था भोगदायिनी। नित्या मधुमती तस्य जायते नात्र संशयः॥ ७०
मधुमत्याः फलञ्चैव कथयामि शृणुष्व मे। सुधाधारासमा वाणी वक्त्रात्तस्य प्रजायते॥
सर्वज्ञः सर्वशास्त्राणामधीशः कुलनायकः। चन्द्रसूर्यावधि श्रीमान् भुनक्ति बहुलं सुखम्॥
देवकन्याप्सरोभिश्च दिव्यगन्धर्वचारणैः। नानाविलाससम्पन्नैः कलाकुशलकोविदैः॥
नृत्यगीतैश्च बहुलैर्नानोपायरसायनैः। अमृताद्यैः प्रीतिकरैर्देवभोग्यैः सुदुर्लभैः॥
देवकन्याहस्तगतैरथमारुह्य सोत्सुका। आयाति साधकाकाङ्क्षहृदया परमेश्वरी॥ ७५
यत्र कामेश्वरो देवश्चिन्तारसमुपागतः। तत्रैवाऽऽयान्ति सततं देवकन्याः सहस्रशः॥
इन्द्रयोग्यां पुरीं कृत्वा वसन्ति साधकैः सह। तत्रोपगतपीठस्था भुक्त्वा तु बहुलं सुखम्॥
चिरकालं भुवि स्थित्वा चान्ते मुक्तिमवाप्नुयात्। साधकानां कुलज्ञानां न दोषः फलपातने॥
एतत्फलनिपातार्थं कुलप्राप्त्या पदे पदे। विघ्नं करोति सर्वत्र निजसङ्कोचकारणात्॥
फलं वृक्षोपरि तथा विघ्नमाचरति ध्रुवम्। फलवृक्षस्य हानिश्चेत् कदाचिद्दैवयोगतः॥ ८०
साधकोऽपि भवेदत्र तदा च सविकल्पकः। तावन्न कुलपूजा स्याद्यावत्तु निष्कृतिर्भवेत्॥
तावन्निजकुलालापा वर्जनीयाः प्रयत्नतः। एतत् कार्यविधाने तु योग्यो नास्तीह भूतले॥
अतिदूरस्थिते देशे नामवर्णविवर्जिते। करोति यदि तत्र स्याद्विघ्नं वा फलपातनम्॥
न दोषैस्तत्र बाध्यन्ते साधकाः कुलसेवकाः। विघ्नप्रधानमेतत्तु कदाचित् फलसाधनम्॥
सङ्केतेनैव कर्त्तव्यं सर्वत्र फलसाधनम्। स्वफलं समनुप्राप्य क्रियते यदि पामरैः॥ ८५
फलं भवति तेनैव पापेन बध्यते ध्रुवम्। दिव्यभावः साधकेन्द्रो मर्त्यो शक्रसमो भवेत्॥
एष ते कथितो दिव्यो भावः परसुखावहः। न देयो यस्य कस्यापि पशोः गोप्यः प्रयत्नतः॥
अथातः संप्रवक्ष्यामि वीरभावञ्च मध्यमम्। निर्द्वन्द्वमानसो भूत्वा हृदि कामकलातनुः॥
निशि पूजा प्रकर्त्तव्या हेतुयुक्तः सदा भवेत्। निजं कलं समादाय स्वयं भैरवरूपधृक्॥

कुलञ्च भैरवीरूपं तद्गात्रे न्यासविस्तरम्। विन्यसेत् सकलं न्यासं नवयोन्यात्मकन्तथा॥
प्रसूनतूलिकामध्ये पुष्पप्रकरसङ्कुले। नानागन्धसमाकीर्णं कुलद्रव्येण यन्त्रकम्॥
लिखित्वा पूजयेच्छक्तौ घटस्थापनपूर्वकम्। पूर्ववन्मण्डलं कृत्वा पूर्वोक्तैकतमं घटम्॥
संस्थाप्य हेतुनाऽऽपूर्य ब्राह्मणादिविभेदतः। तत्र मन्त्रं विलिख्यादौ यद्‌यत्कुलसमुद्भवम्॥
ध्यात्वेष्टदेवतां तत्र जपेदष्टोत्तरं शतम्। धेनुमुद्रां प्रदर्श्याऽथ अमृतं तद्विचिन्तयेत्॥
दृष्ट्वाऽर्घ्यस्य तु पात्रं वै नृत्यन्ति योगिनीगणाः। इन्द्रादयः सुराः सर्वे नृत्यन्ति मधुलोलुपाः॥
ब्रह्मविष्णुमहेशाद्या नृत्यन्ति हर्षतत्पराः। अर्घ्यपात्रं त्रिधा कृत्वा गुरवे चैकभागकम्॥
एकं कुलाय दत्त्वा वै एकेन देवतर्पणम्। पीत्वा कुलरसं पूर्णं नानालङ्कारभूषितः॥
आनन्दरूपवान् भूत्वा पूजयेत् परमेश्वरीम्। तत्तत्कल्पोक्तविधिना तत्तन्मन्त्रं प्रपूज्य च॥
विसर्जनं विधायाथ स्वकुले योजयेत्ततः। भक्तिस्वरसपानेन देवी भुनक्ति चामृतम्॥
तत्तत्कुलरसास्वादैर्देव्याः प्रीतिः प्रजायते। तत्फलग्रहणादेव सुमेरुशृङ्गरोहणम्॥
लतालिङ्गनमात्रेण सुधाधौतकलेवरः। मूलयोगे कृते तत्र जपेदष्टसहस्रकम्॥
जपस्यान्ते हविर्द्रव्यं गृहीत्वा तेन तर्पयेत्। विधाय तर्पणं चैव प्रदक्षिणमनुव्रजन्॥
कल्पोक्तेन प्रणम्याऽथ स्तोत्रेण तोषयेत्ततः। इदं वीरकुलं चैव सुन्दरं सुमनोहरम्॥
यद्देशे विद्यते वीरस्तत्कुलं चैव तत्सुतः। न च मारीभयं तत्र न च राजभयादिकम्॥
सुमङ्गलं सदा तत्र धनपुत्रविवर्धनम्। लक्ष्मीर्वाणी सदा तत्र सुस्थिरा भवति ध्रुवम्॥
मन्त्रपुष्पं प्रबोधिन्यामवश्यं ब्रह्ममूलतः। योजनीयं प्रयत्नेन न च विघ्नं प्रवर्तते॥
नान्यचोरेण तद्योगं ग्रहणे दैवतैरपि। योगिनीभिर्न लुप्तं तन्न च पापेन युज्यते॥
यत्र तत्र कुजे वारे श्मशाने गमने कृते। पूजाफलं भवेत्तत्र सप्तवासरसम्मितम्॥
चतुर्दश्यां गते तत्र पक्षपूजाफलं लभेत्। न गते नार्चिते स्थाने पशुरेव न संशयः॥
नान्यस्मादधिको देव इति चिन्तापरायणः। साधके क्षोभमापन्ने देव्याः क्षोभः प्रजायते॥
तस्माद्यत्नाद्भोगयुक्तो भवेद्वीरवरः सुधीः। भोगेन मोक्षमाप्नोति भोगेन कुलसाधनम्॥
यद्यद्ददति निद्राति यत्करोति यदर्चति। तत्सर्वं कुलरूपन्तु ध्यात्वा च विहरेत् सुधीः॥
एकाकी निर्जने देशे श्मशाने निर्जने वने। शून्यागारे नदीतीरे निःसङ्गो विहरेन्मुदा॥
वीराणां जपकालस्तु सर्वदैव प्रशस्यते। सर्वपीठे सर्वदेशे कर्तव्यं नात्र संशयः॥
वीरसाधनकार्यञ्च कर्त्तव्यं वीरपुरुषैः। दिव्यैरपि च कर्तव्यं पशुभिर्न च पामरैः॥
वरं पामरकार्यञ्च न पशोरिति निश्चयः। यच्च देव्याः पुरा प्रोक्तं शाश्वतं मन्त्रसाधनम्॥
अञ्जनं गुटिकादींश्च कुर्याद्वीरो महाबलः। दिव्यवीरे न भेदोऽस्ति यो भेदः स तु कथ्यते॥
शान्तो विनीतो मधुरः कलालावण्यसंयुतः। दिव्यश्च देववत् प्रायो वीरश्चोद्धतमानसः॥
विभूतिभूषणो वापि चन्दनेनापि लेपितः। आकारगोपनो वापि व्यक्तो वा दिव्यसाधकः॥

रक्तचन्दनदिग्धाङ्गो वैष्णवो वाप्यवैष्णवः। असंस्कृतः संस्कृतो वा नित्यसिक्तः कुलेश्वरः॥
अपमाने च पूजायां हृष्टपुष्टः सदा भवेत्। देवनिन्दापरो वापि तत्पूजादिपरोऽपि वा॥
पूजारतस्तद्रहितः कुलाकुलमते स्थितः। निजभावसमायुक्तो देववत् विहरेत् क्षितौ॥
वेदहीने द्विजे चैव यथा न श्रुतिसंस्क्रिया। विष्णुभक्तिं विना चैव भक्तिर्न प्रभवेद्यथा॥
शक्तिज्ञानं विना मुक्तिर्यथा हास्याय कल्पते। गुरुं विना यथा तन्त्रे नाधिकारः कथञ्चन॥
पतिहीना यथा नारी सर्वकर्मविवर्जिता। कुलं विना यथा वीरो देव्या वा मम साधकः॥
नाधिकारीति कौलेयस्तस्माद्भावपरो भवेत्। विना कुलेन दिव्यानां वीराणाञ्च तथैव च॥
मन्त्रसिद्धिर्न जायेत जन्मकोटिशतैरपि। अविनीतं कुलं यस्य स कथं मम पूजकः॥
तस्माद्यत्नात् सदा कार्यं यथा स्याद्विनयान्वितम्। भावाभावात् कुले शास्त्रे नाधिकारः कथञ्चन॥
तेन भावविशुद्धस्तु साधकः कौलिको भवेत्। इदं वीरकुलञ्चैव दिव्यादपि मनोरमम्॥
पशुभावं प्रवक्ष्यामि तृतीयं सर्वनिन्दितम्। यथाविधि पशोर्विद्यां गृहीत्वा भावतत्परः॥
प्रथमं पूर्वमेवार्थं यत्नतः शुद्धिमाचरेत्। न मत्स्यभोजनं कुर्यान्न स्त्रियं मनसा स्मरेत्॥
परद्रव्ये न लोभः स्यान्न भोगो मानसो भवेत्। सिन्धुतीरे पर्वते वा कानने वा सुरालये॥
बिल्वमूले विविक्ते तु पुण्यक्षेत्रे सुशोभने। न शूद्रदर्शनं कुर्यात् कौटिल्यं दूरतस्त्यजेत्॥
देवता शुभ्रवर्णा तु ध्यातव्या सुसमाहितैः। त्रिसन्ध्यं देवपूजा स्यात् त्रिसन्ध्यं जपमाचरेत्॥
रात्रौ मालाञ्च यन्त्रञ्च स्पृशन् नैव कदाचन। न मन्त्रमुच्चरेद् भुक्त्वा मौनी स्यात् सर्वकर्मसु॥
पर्वकाले स्त्रियं नैव गच्छेद्वै साधकोत्तमः। पुष्पं गन्धं जलं चैव स्वयमानीय पूजयेत्॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत्। ऋतुकालं विना गच्छेन्न च स्वस्त्रियमादरात्॥
पुराणश्रवणे श्रद्धा वेदवेदाङ्गतत्परः। न रात्रौ भोजयेद्विद्वांस्ताम्बूलञ्च तथैव च॥
गुरुणा यद्यदादिष्टं तत्सर्वं यत्नतश्चरेत्। स्वजातकुसुमं चैव हेतुद्रव्यं तथैव च॥
पतत्स्पृष्ट्वा त्रिरात्रञ्च पञ्चगव्येन शुध्यति। रक्तवस्त्रं न गृह्णीयात् देवीभक्तिपरायणः॥
विष्णुतन्त्रोक्तकल्पादि तदनुष्ठानमेव च। कार्यं वीरकथालापं न कुर्याद्वीरवन्दितम्॥
नित्यश्राद्धं गवां ग्रासं सन्ध्यावन्दनमेव च। तीर्थस्नानं पीठदेशे गमनं धर्मतत्परः॥
पशुस्तु द्विविधश्चैवाऽदीक्षितो दीक्षितस्तथा। दीक्षितस्याऽधिकारोऽस्ति पूजायां चैव निश्चितम्॥
गुरुत्वे तस्य कुत्रापि नाधिकारश्च सर्वदा। पूर्वस्य नाधिकारोऽस्ति पूजादेशगतागतौ॥
पूर्वस्तु कौलिकैः सर्वैर्बहिः कार्यः स्वदेशतः। पूर्वदर्शनमात्रेण कुलदर्शनमाचरेत्॥
ब्रह्महत्यादिकं पापं वरं सह्यं कथञ्चन। पूर्वस्य दर्शनं नैव सत्यं सत्यं सुनिश्चितम्॥
देव्यात्मा सोऽपि नियतं विभुत्वाद्यद्यपि ध्रुवम्। तथापि जायते शङ्का तदा देव्याः पदे पदे॥
वरं कुलपरित्यागं वरं स्वकुलहिंसनम्। वरं स्वकुलकुत्सा स्याद्वरं स्वकुलनिन्दनम्॥
वरं स्वकुलहानिस्तु वरं स्वकुलकुट्टनम्। कायेन मनसा वाचा वरं स्वकुलपातनम्॥

न च कुर्यात् पूर्वसङ्गं देव्यङ्गक्षयकारणात्। कुलशास्त्रे द्वयं पापं गरिष्ठो भवति ध्रुवम्॥ १५०
स्वकुले महती निन्दा परयोगे तथैव च। तस्मादपि महत् पापं पशुसङ्गात् प्रजायते॥
गोलोकेन सहाऽऽलापात् पशोः सम्भाषसंस्कृतात्। न सिध्यन्ति महामन्त्राः सत्यं सत्यं सुनिश्चितम्॥
ब्रह्महत्या सूरापानमगम्यागमनन्तथा। स्तेयं संसर्गं एवैते महापातकजातयः॥
दीक्षणादेव नश्यन्ति जपान्नश्यन्ति चापरे। वीरहत्या वृथापानं वीरजायाश्च सङ्गमः॥
एतद्ग्रन्थैकदेशस्य गुरोरर्थावलोपनम्। ज्ञात्वा वीरवरस्यापि तन्निन्दा तदकीर्त्तनम्॥ १५५
न च तस्मै धनारोपस्तेयमित्यभिधीयते। पशुना यः समालापः समा शय्या समासनम्॥
एकत्र भोजनं चैव संसर्गश्च ततः परम्। संसर्गंपातकं प्रोक्तं कुलीनस्य महात्मनः॥
पातकं न च तेषां वै संक्षये पुण्यसञ्चयम्। प्रभवन्ति न तीर्थानि न गङ्गा न च काशिका॥
महाविद्याजपादेव चत्वारि पातकानि च। नश्यन्ति न च संसर्गः क्षयं याति कदाचन॥
अज्ञानात् पशुसंसर्गो यदि दैवात् प्रजायते। तदा द्वादशवर्षाख्यं व्रतार्थं यत्नमाचरेत्॥ १६०
कुलीनायाः समीपस्थः कुलसेवापरायणः। उच्छिष्टभोजी तन्नामप्रजापी तत्पतेरपि॥
तदन्ते तां समभ्यर्च्य यत्नैश्च परितोष्य च। शुचिर्भूत्वा पुनर्विद्यां गृहीत्वा शुद्धिमाप्नुयात्॥
व्रताशक्तो यदि भवेत् सुवर्णैः परितोषकृत्। दद्यात् कुलाय पापानां क्षयार्थं साधकोत्तमः॥
ज्ञानात् संसर्गमासाद्य मरणान्नैव शुध्यति। मृते च भासकाकादि योनिमालम्ब्य सर्वतः॥
नानाक्लेशसमायुक्तो नरकान् प्रतिपद्यते। नचैनं दीक्षयेन्नाम न चास्य दर्शनञ्चरेत्॥ १६५
देवीशास्त्रकथाश्चात्र प्रयत्नेन विवर्जयेत्। कर्मणा मनसा वाचा पशुशास्त्रादिपूजनम्॥
प्रकुर्वन्ति महापापास्त्यज्यास्ते कुलसाधकैः। निषेधे कुलशास्त्राणि साधकः सर्वदा चरेत्॥
पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत्। श्वचर्मस्थं [illegible] ॥ क्षीरं न देयं स्याद्विद्विजेष्वपि॥
तथा पशुमुखाद्धर्मो न श्रोतव्यश्च कौलिकैः। अश्रद्दधाना [illegible] चात्र कुलधर्मेषु कौलिकाः॥
न वा ध्यानान्निवर्तन्ते यावदाहूतसंप्लवम्। कौलाः पशुव्रताश्चैव पक्षद्वयविडम्बकाः॥ १७०
केशसंख्या स्मृता यावत्तावत्तिष्ठन्ति रौरवे। दीक्षणात् पूजनाद्धोमात्तथा दृष्ट्यवलोकनात्॥
यत्किञ्चिज् ज्ञानमात्रेण पशुना निर्जितो यदि। तस्य सत्रं हरेद्देवी शापं दत्त्वा सुनिश्चितम्॥
पशोर्विद्यां समादाय यदि पूजापरो भवेत्। तस्य वक्त्रं समालोक्य कुलवक्त्रं विलोकयेत्॥
एवं न चेत् कुलीनस्य विद्याहानिस्तु जायते। पशूपदिष्टं यत्किञ्चित् क्रियते कुलसाधकैः॥
तत्तत्कर्म सदा तेषामभिचाराय कल्पते। या याः सर्वा महाविद्याश्चण्डिकायाः सुनिश्चितम्॥ १७५
पशुदृष्टिनिपातेन साधकं नाशयेद्ध्रुवम्। यदि दैवात् पशोर्विद्यां लभते कुलजैर्नरैः॥
द्विजस्य कौलिकां प्रार्थ्य पुनर्विद्यामुपालभेत्। अज्ञानाद् यत् कृतं मातर्नाऽऽलोच्य कुलकौलिकम्॥
क्षमस्व मातस्तत्पापं हर देवि कृपां कुरु। एवं प्रार्थ्य महायत्नै रत्नैः स्वर्णादिविस्तरैः॥
सम्पूज्य कुलदारू त्यमग्र्यां यत्नतो नयेत्। भ्रष्टस्य चाऽष्टमी चेति तिथिरेव न चान्यथा॥

दीक्षाकालः स एव स्यान्नान्यः कालः प्रशस्यते । भ्रष्टा बहुविधाः सन्ति यद्यत्र कुलसाधकाः ॥
पशुशिष्यसमो नास्ति सत्यं सत्यं न चान्यथा । कुलाचारं पशौ गुप्तं तत्तु तेषां परं विदुः ॥
एतच्छास्त्रप्रसङ्गो वा एतत् पुस्तकदर्शनम् । पशोरग्रे न कर्त्तव्यं प्राणान्तेऽपि कदाचन ॥
कृत्वा सूर्यमुखं दृष्ट्वा स्मर्त्तव्यः कुलनायकः । निर्जीवे काष्ठलोष्ट्रे वा शर्करायां तृणेऽपि वा ॥
सर्वत्र चिन्तिता देवी न पशोर्मन्त्रविग्रहे । चेतनाधिष्ठितं सर्वं सुखं दुःखं प्रकल्पितम् ॥
तत्रैव चेतनाभावान्नियमो नास्ति तादृशः । तस्माद्देव्याश्च सर्वस्वं देवीपूजापरायणैः ॥
गोप्तव्यं सर्वथा चैव पशोः कल्याणहेतवे । सर्वथा तत्र भावौ द्वौ न प्रकाश्यौ कदाचन ॥
स्वभावश्च विभावश्च पशुर्द्वेधा व्यवस्थितः । स्वभावः पशुभावेन जन्मत्रयविभावनात् ॥
वीरभावो भवेदेव ततो देवः प्रजायते । दैवाच्च जायते वीरो वीराद्देवः प्रजायते ॥
दैवे वीरे न सन्देहः साम्यमित्यभिधीयते । भावस्तु मनसो धर्मः स हि शाब्दः कथं भवेत् ॥
तस्माद्भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम् । यथेक्षुगुड़माधुर्य्यं जिह्वया ज्ञायते सदा ॥
तस्माद्भावो विभावस्तु मनसा परिभाव्यते । एक एव महाभावो नानात्वं भजते यतः ॥
उपाधिभेदभावेन भावभेदो लयिष्यति । आनन्दघनसन्दोहः प्रभुः प्रकृतिरूपधृक् ॥
रसरूपी स एवाऽऽत्मा स प्रभुः परमो महान् । श्रोतव्यः स च मन्तव्यो निध्यातव्यः स एव हि ॥
साक्षात् कार्यस्ततो वीरैरागमैर्विविधैस्तथा । श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यो मननादिभिः ॥
सोपपत्तिभिरेवायं ध्यातव्यो गुरुदेशितैः । तदा स एव सर्वात्मा प्रत्यक्षीभवति ध्रुवम् ॥
तस्मिन् देहे तु भगवान् प्रत्यक्षः परमेश्वरः । भावैर्बहुविधैश्चैव भावस्तत्रापि लीयते ॥
भुक्त्वा नानाविधं ग्रासं गवि चैको यथा रसः । दुग्धाद्यभ्यासयोगेन नानात्वं भजते यतः ॥
तृणेन जायते चैव रसस्तस्मात् परो रसः । तस्माद्दधि ततो हव्यं तस्मादपि रसोदयः ॥
स एव कारणं तस्य तत् कार्यं न च कथ्यते । दृश्यते च सदा तत्र न कार्यं नापि कारणम् ॥
तथैवायं स एवाऽऽत्मा नानाविग्रहयोनिषु । जायेज्जनिष्यते जातः कार्यभेदादि भाव्यते ॥
स जातः स मृतो बद्धः स मुक्तः स सुखी पुमान् । स स्त्रीनपुंसकः सोऽपि स एवाऽनङ्ग एव सः ॥
नानाध्यानसमायोगान्नानात्वं भजते यथा । एक एव स एवात्मा रसरूपी सनातनः ॥
अव्यक्तः स च सुव्यक्तः प्रकृत्या क्रियते ध्रुवम् । तस्मात् प्रकृतियोगेन ज्ञायते नान्यया क्वचित् ॥
विना घटत्वयोगेन न प्रत्यक्षो यथा घटः । इतरान्द्रियमानोऽपि न भेदमुपगच्छति ॥
न भेदं पुरुषो याति विना शक्तिं कथञ्चन । न प्रयोगैर्न च ज्ञानैर्न श्रुत्या न गुरुक्रमात् ॥
प्रकृत्या ज्ञायते ब्रह्म प्रकृत्या लीयते पुनः । प्रकृत्याऽधिष्ठितं सर्वं प्रकृत्या वाञ्छितं जगत् ॥
प्रकृत्या भेदमाप्नोति प्रकृत्या लीयतेऽखिलम् । न वस्तु प्रकृतिर्नैव न पुमान् परमेश्वरः ॥
तयोः समरसं ज्ञानं वस्तुतत्त्वं परं पदम् । उभयोः समवायस्तु वस्तुतत्त्वं सुनिश्चितम् ॥
ज्ञायतेऽस्मिन् स्वयं प्राज्ञश्चित्स्वरूपः पुमानसौ । निर्विकारः सर्वदैव प्रमाणागोचरः पुमान् ॥

व्यक्तो भवति सर्वत्र स्वयमात्मा स्वयम्भुवः । उपायाः सन्ति बहवो ज्ञातुं ब्रह्म सनातनम् ॥ २१०
तथापि प्रकृतेर्योगात् क्षिप्रं प्रत्यक्षतां व्रजेत् । सांयात्रिकाः कुले देशे यथा नावं प्रगृह्य च ॥
नानादेशं समुत्तीर्य समुद्रं विशते चिरात् । तत्तटे नावमास्थाय क्षणाद्द यान्ति यथा पुनः ॥
वैजात्यं नास्ति चेत्तत्र कथं तच्चद्धि कारणम् । तस्मात् परम्परायातास्ते हि कारणतां गताः ॥
न कारणानि ते चैव साक्षात् प्रकृतिकारणम् । स्त्रीभावः प्रकृतिर्ज्ञेयः पुम्भावः पुरुषो मतः ॥
ज्ञातिच यविभागेन ज्ञायतां साधकोत्तमैः । घटप्रत्यक्षतायान्तु आलोको व्यञ्जको यथा ॥ २१५
चक्षुरादि ततः किञ्चिदधिकं निर्विकल्पनम् । घटत्वं पुनरेतस्य भेदकारणमेव हि ॥
तथा न व्यक्तिविषये त्वन्ये व्यञ्जकतां गताः । साक्षात्कारणमेवैतत् प्रकृतिश्चैव निश्चितम् ॥
दिव्यभावो वीरभावो यस्य देहे व्यवस्थितः । एकेन जन्मना तस्य परं प्रत्यक्षमाप्नुयात् ॥
जीवन्मुक्तः स एवाऽऽत्मा भोगार्थमटते महीम् । देवीपुत्रः स एवाऽऽत्मा भैरवः परिकीर्त्तितः ॥
भावत्रयाणां मध्ये तु द्वौ भावौ सुप्रतिष्ठितौ । न वक्तव्यौ मुक्तिमार्गौ कुलसारौ कुलोत्तमौ ॥ २२०
यो भावो यस्य वै प्रोक्तस्तैर्भावैर्नार्चयेद्यदि । दशाहक्रमयोगेन भ्रष्टो भवति साधकः ॥
नोपदिशेत्तत्र भावं न पूजां तत्र सन्दिशेत् । कुलान्मन्त्रं गृहीत्वा तु भावशुद्धिः प्रजायते ॥
तस्माद्भावपरो भूत्वा देवीं सम्पूजयेत् सुधीः ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये एकादश उल्लासः ॥ ११ ॥

---

## द्वादश उल्लासः

अथ वक्ष्ये च मालानां विधानं तन्त्रवर्त्मना । आरभ्याऽनामिकामध्यात् प्रादक्षिण्येन वै क्रमात् ॥
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु । तर्जन्यग्रे तथा मध्ये यो जपेत् स तु पामरः ॥
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनम् । शक्तिमाला समाख्याता सर्वमन्त्रप्रदीपनी ॥
( अथवा ) अनामिकात्रयं पर्वं कनिष्ठा च त्रिपर्विका । मध्यमायास्त्रयं पर्वं तर्जनीमूलपर्विका ॥
अङ्गुलीनं वियुञ्जीत किञ्चित् सङ्कोचयेत्तलम् । अङ्गुलीनां वियोगे तु छिद्रेषु क्षरते जपः ॥
अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने । पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
नित्यजापे महादेवि करमाला शुभप्रदा । अक्षमाला तथाऽन्या च सर्वथा सिद्धये पुनः ॥
( अथवा मुक्ताफलमयी माला राज्यमोक्षप्रदायिनी । सर्वसिद्धिप्रदा नित्यं सर्वराजवशङ्करी ॥
यथा मुक्ताफलमयी तथा स्फाटिकनिर्मिता । रुद्राक्षमालिका मोक्षे भवेत् सर्वसुसिद्धिदा ॥
प्रवालमालिका वश्ये लक्ष्मीविद्याप्रदा मता । तथा माणिक्यमाला च साम्राज्यफलदायिनी ॥
पुत्रजीवकमाला तु विद्यालक्ष्मीप्रदायिनी । पद्माक्षमालया लक्ष्मीर्जायते च महद्धनम् ॥
रक्तचन्दनमाला तु वैश्यसौभाग्यदायिका । रुद्राक्षमालिका सूते जपेन स्वमनोरथान् ॥
पद्माक्षैः शत्रुहा माला कुशग्रन्थ्या तु पापहा । पुत्रजीवभवा माला पुत्रं वितनुतेऽचिरात् ॥
हिरण्मयी कामदा स्यात् प्रवालैः पुष्कलं धनम् । सौभाग्यं स्फाटिकी माला रुद्राक्षेऽक्षयकामदा ॥
शाकानां स्फाटिकी माला रक्तचन्दनसम्भवा । पुत्रजीवैर्दशगुणं शतं शङ्खैः सहस्रकम् ॥
प्रवालैः पद्मरागैश्च तथाऽयुतगुणं भवेत् । अयुतं स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षं स्याद्राजतैः कोटिरुच्यते । सौवर्णैर्दशकोटिः स्यादनन्तं रक्तचन्दनैः ॥
रुद्राक्षैश्च महासिद्धिं तनुते मालिका सदा । रक्तचन्दनमालाभिः शिवत्वं लभते ध्रुवम् ॥
कुशग्रन्थेन रुद्राक्षैरनन्तफलदा भवेत् । गुञ्जायाः सर्वसिद्धिः स्याद्बिल्वकाष्ठेन सिद्धिदा ॥
शङ्खेन रचिता माला सर्वसौभाग्यदायिका । सामान्या कथिता माला विशेषात् कथ्यतेऽधुना ॥
रक्तेन चन्दनेनापि बालामालां प्रकल्पयेत् । दन्तेन कालिकायास्तु राजदन्तेन मेरुणा ॥
उग्रताराजपे शस्ता महाशङ्खस्य मालिका । उन्मुख्याश्च तथा ज्ञेया मोक्षदा मालिका भवेत् ॥
वैष्णवानां पद्मबीजैर्मालिका तुलसी मता । गजदन्तैर्गणेशे तु शैवे रुद्राक्ष उच्यते ॥
गर्दभानां वराहाणां दन्तैरप्यभिचारके । अष्टोत्तरशता माला चतुःपञ्चाशिकाऽपि वा ॥
षट्त्रिंशद्रचिता माला उत्तमाधममध्यमाः । अथवा मातृकासंख्या माला कार्या प्रयत्नतः ॥
सप्तविंशतिभिः कार्या सर्वसाधारणे जपे । पञ्चविंशतिभिर्मोक्षार्थी धनार्थी त्रिंशता जपेत् ॥
पुष्ट्यर्थी सप्तत्रिंशत्या पञ्चदश्यभिचारके । अष्टोत्तरशतैः सर्वा सिद्धिरुक्ता मनीषिभिः ॥
पञ्चाशद्भिः सर्वकार्यं कर्त्तव्यं नात्र संशयः । सुवृत्तं सुन्दरं बीजं बदरीबीजमालिकम् ॥

शिल्पिने दक्षिणां दत्त्वा गृहीत्वा साधकोत्तमः । संस्कारञ्च ततः कुर्यात् यथाशास्त्रप्रमाणतः ॥
अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः । सर्वं तद्विफलं विन्द्यात् क्रुद्धा भवति चण्डिका ॥ ३०
पुण्यस्त्रीरचितं सूत्रं कार्पासं वाऽथ पट्टकम् । पङ्कजोद्भवसूत्रञ्च तथाच शणसूत्रकम् ॥
कोषकारस्य सूत्रेण ग्रथयेदक्षमालिकाम् । स्वर्णादिसम्भवं सूत्रं त्रिगुणं त्रिगुणीकृतम् ॥
शुक्लं रक्तं तथा कृष्णं शान्तिवश्याभिचारके । रक्ते मुक्तिमवाप्नोति श्वेतैर्योगादिसाधनम् ॥
पीतैः कामं यशस्यञ्च कृष्णे रोगादिसम्भवः । नित्ये नैमित्तिके शस्तं शुक्लं रक्तं तथा शुभम् ॥
बीजानि च तथा सूत्रं पञ्चगव्ये द्वयं क्षिपेत् । प्रक्षाल्य मूलमन्त्रेण ग्रथयेदथ सूत्रकम् ॥ ३५
गुरुश्वशुरजामातृपुत्रैः स्वयमनन्यधीः । तैरेव ग्रथितां मालां कारयेन्नाऽन्यतः क्वचित् ॥
कान्तया रचिता माला द्रुतसिद्धिकरी मता । एकैकमणिमादाय ब्रह्मग्रन्थिं विनिर्दिशेत् ॥
ग्रन्थिहीनं न कर्त्तव्यं स्पृष्टास्पृष्टेन दूष्यति । शैवे च वैष्णवे सौरे गणेशे श्रीकरेऽपि च ॥
बीजस्पर्शे पुनः कुर्यात् संस्कारं यत्नतः सुधीः । दूषणं यत्र नास्त्येव ग्रन्थिहीनोऽपि नित्यशः ॥
कालिकात्वरितयोस्तु वज्राद्याः षट्कभेदके । तोतलावनवासिन्योर्वाराह्याद्याविशेषतः ॥ ४०
अन्यायाश्चण्डिकादेव्या ग्रन्थिहीना विधीयते । एकैकमणिमादाय साधकः स्थिरमानसः ॥
ब्रह्मग्रन्थिं ततो दद्यात् हृदये तारमास्मरन् । स्वयमेव जपेन्मन्त्रमन्यः प्रणवमुच्चरेत् ॥
गोपुच्छसदृशी कार्या अथवा सर्परूपिणी । मेरुमेकं विधायाथ मालान्ते साधकोत्तमः ॥
अर्चयेच्च गुरुं ध्यायन् न्यासमन्त्रञ्च दक्षिणे । वामतोऽपि भवेद्देवं ध्यानतः सिद्धिमाप्नुयात् ॥
यो मेरुः तं गुरुं विन्द्यान्मन्त्रबीजन्तु दक्षिणे । एवं निष्पाद्य मालाञ्च प्रतिष्ठाञ्च समाचरेत् ॥ ४५
अनुलोमविलोमाभ्यां मातृकान्तरितां न्यसेत् । पञ्चगव्ये क्षिपेन्मालां शिवमन्त्रेण मन्त्रिताम् ॥
सान्तं शक्रस्वरारूढं नादविन्दुविभूषितम् । कथितं शिवमन्त्रञ्च साधकानां हिताय च ॥
पञ्चामृतैः पञ्चगव्यैः स्नापयेन्मूलमुच्चरन् । घृतं क्षीरं तथा नीरं शर्करामधुसंयुतम् ॥
पञ्चामृतमिदं ख्यातं प्रत्येकन्तु पलं पलम् । पलार्धं गोमयं क्षीरं प्रस्थं दधि तथा समम् ॥
गोमूत्रं प्रस्थमानं स्यादाज्यञ्चैव तदर्धकम् । मूलेन मन्त्रितं कृत्वा योजयेत् पञ्चगव्यकम् ॥ ५०
अशीतलजलेनैव स्नापयेत्तदनन्तरम् । क्षालयेत् पञ्चगव्येन सद्योजातेन मार्जयेत् ॥
ओँ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवेऽभवेऽनादिभवे भजस्व मां भवोद्भवाय नमः ॥
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत् ॥
ओँ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमः ।
बलाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो नम उन्मनाय नमः ॥ ५५
सुधूपैर्धूपयेत्ताञ्च अघोरमनुना बुधः ॥
ओँ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥
गन्धचन्दनकुङ्कुमैर्लेपयेत्तपुरुषेण च ॥

ओँ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।
मन्त्रयेच्च ततो धीरः प्रत्येकञ्च शतं शतम् । ईशानमनुना मेरुं शतं चैव ततः परम् ॥ ६०
ओँ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ब्रह्माधिपतिः ब्रह्मणोऽधिपतिः शिवो मेऽस्तु सदाशिवोम् ॥
ततः संस्थापयेन्मालां स्वर्णादिपीठके बुधः । पद्माकारेषु चाश्वत्थपत्रेषु स्थापयेच्च वा ॥
पीठे वापि च संस्थाप्य पूजयेत् स्वीयदेवताम् । साङ्गावरणसंयुक्तामुपचारैः सुविस्तरैः ॥
एकैकक्रमयोगेन बीजानां साधकोत्तमः । प्राणप्रतिष्ठां कुर्वीत अष्टोत्तरशतं ततः ॥
प्राणशक्तिसमारूढं औकारबिन्दुरूपधृक् । प्रणवं अक्षमालाधिपतये तदनन्तरम् ॥ ६५
इदन्तं मूलमुच्चार्य पूजयेन्मालिकां क्रमात् । तिलेन घृतयुक्तेन शक्त्या होमं प्रकल्पयेत् ॥
होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् । तारोऽक्षमालाधिपतये सुसिद्धादिं वदेत्ततः ॥
सर्वमन्त्रार्थसाधनीति साधयद्वितयं पुनः । सिद्धिं प्रकल्पय स्वाहा अभिमन्त्रितमालया ॥
मूलमन्त्रं जपेत्तत्र अष्टोत्तरसहस्रकम् । अष्टोत्तरशतं वापि जप्त्वा मालां समर्पयेत् ॥
शिष्यहस्ते ततः सोऽपि जपेदष्टसहस्रकम् । अष्टोत्तरशतं वापि जप्त्वा मालाञ्च गोपयेत् ॥ ७०
गुरवे दक्षिणां दत्वा यथाशक्त्या तु साधकः । गुरोरभावे मालायाः संस्कारं स्वयमाचरेत् ॥
गुरुं प्रकाशयेद्विद्वान् न तु मन्त्रं कदाचन । अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत् ॥
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः । हरन्ति प्रकटाद्यस्मात्तस्माद्यत्नेन गोपयेत् ॥
जपान्यसमये मालां पूजयित्वा तु गोपयेत् । अशुचिर्न स्पृशेन्मालां अशुचौ न प्रकल्पयेत् ॥
हस्तात् पतति चेन्माला न जप्तव्या त्र्यहं बुधैः । प्रायश्चित्तं विधातव्यं जपेन्मन्त्रं सहस्रकम् ॥ ७५
( अथवा ) करभ्रष्टे शब्दकृते जपेदष्टोत्तरं शतम् । जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ॥
छिन्ना भवति चेन्माला पूजां कृत्वा ततोऽधिकाम् । गुरूणां शिल्पिनाञ्चैव पूजां कृत्वा तु साधकः ॥
प्रतिष्ठां पूर्ववत् कृत्वा पुनर्जपं समाचरेत् । एवम्विधा सर्वमाला सर्वदेवे प्रतिष्ठिता ॥
अथान्यां संप्रवक्ष्यामि मालां कुलमयीं पराम् । कुण्डगोलोद्भवैर्द्रव्यैः स्वयम्भूकुसुमेन च ॥
रोचनाकुङ्कुमेनैव अक्षमालां समर्चयेत् । कर्पूरागुरुकस्तूरी तथा मृगमदेन च ॥ ८०
अक्षमालामुपस्कृत्य प्रतिष्ठां विधिवच्चरेत् । अथातः संप्रवक्ष्यामि मालां सर्वोत्तमोत्तमाम् ॥
यस्य विज्ञानमात्रेण मन्त्राः सिध्यन्ति तत्क्षणात् । अनुलोमविलोमेन मन्त्रमातुर्विभेदतः ॥
मन्त्रेणाऽन्तरितं वर्णं वर्णेनाऽन्तरितं मनुम् । कुर्याद्वर्णमयीं मालां सर्वमन्त्रप्रदीपिनीम् ॥
चरमार्णं मेरुरूपं लङ्घयेन्न कदाचन । एतद्रहस्यं परमं नाऽऽख्येयं यस्य कस्यचित् ॥
अनुलोमविलोमस्थैर्बिन्दुयुङ्मातृकाक्षरैः । क्षमेरुकैः साष्टवर्गैः क्लृप्तया वर्णमालया ॥ ८५
प्रत्येकं वर्णयुङ्मन्त्रा जप्ताः स्युः क्षिप्रसिद्धिदाः । सबिन्दुं वर्णमुच्चार्य पश्चान्मन्त्रं जपेत् सुधीः ॥
क्षं मेरुं कल्पयित्वा तु जपेत्तन्नाऽभिलङ्घयेत् । अथ यन्त्रप्रतिष्ठानं कथयामि प्रसङ्गतः ॥
सुवर्णं रजतं ताम्रं श्रेष्ठं मध्यमथाऽधमम् । ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ॥

सुवर्णेऽनन्तफलदं स्फाटिकेऽपि तथा समम् । एकतोलं द्वितोलं वा त्रितोलं पञ्चतोलकम् ॥
दसतोलं चतुस्तोलं सप्ततोलं पलन्तु वा । साधकस्य मनोज्ञं वा कृत्वा पीठे सुसाधकः ॥
पूर्वोक्तधातुद्रव्यैश्च सुन्दरं सुमनोहरम् । सुरेखं सुमुखं यन्त्रं लेखयित्वा विधानतः ॥
अथवा प्रतिमां कृत्वा निजदेवस्वरूपिणीम् । प्रतिष्ठाञ्च ततः कुर्याद् यथाशास्त्रप्रमाणतः ॥
स्नात्वा सङ्कल्पयेन्मन्त्री ततो न्यासादिकञ्चरेत् । पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण शोधितम् ॥
तत्र यन्त्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम् । तस्मादुद्धृत्य तच्चक्रं स्थापयेत् स्वर्णपट्टके ॥
पञ्चामृतेत सुस्नाप्य शीतलेन जलेन च । वाससा जलमुत्तोल्य स्थापयेद्धेमपीठके ॥
पीठपूजां विधायाथ कुशैर्यन्त्रञ्च संस्पृशन् । प्रणवं यन्त्रराजाय विद्महे तदनन्तरम् ॥
महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् । गायत्रीमिति संजप्य शतमष्टोत्तरन्ततः ॥
आवाह्य पूजयेद् देवीं जीवन्यासपुरःसरम् । उपचारैः षोड़शभिर्नानाविधरसायनैः ॥
नानाविधफलैर्द्रव्यैर्नानाङ्गरागविस्तरैः । स्वकल्पोक्तविधानेन संपूज्य परमेश्वरीम् ॥
ततो जाप्यं सहस्रन्तु कुर्यादीप्सितसिद्धये । बलिदानं ततः कृत्वा प्रणमेच्चक्रमुत्तमम् ॥
अष्टोत्तरशतं होमं घृतेन कारयेत् सुधीः । गुरवे दक्षिणां दद्यात्तथा च शिल्पिने ततः ॥
देवतायाः प्रतिष्ठानमेवन्तु कारयेद्बुधः । न्यासादिकं स्वकल्पोक्तं गायत्रीं तत्र सन्दिशेत् ॥
देवतायाः प्रतिष्ठाने विशेषः कथितो मया । अथ वक्ष्यामि मन्त्राणां पुरश्चरणमुत्तमम् ॥
भाग्यहीनोऽपि मूर्खोऽपि यद्बोधादमरो भवेत् । साधयेत् सिद्धिसकलान् साक्षात् सिद्धीश्वरो भवेत् ॥
आदौ पुरस्क्रियां कुर्यान्नियमेन यथाविधि । ततः सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा ॥
पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः । किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥
वश्याय सर्वमन्त्राणां यदि न स्यात् पुरस्क्रिया । जीवहीनो यथा देही सर्वकर्मसु न क्षमः ॥
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः । पुरस्क्रिया हि मन्त्राणां प्रधानं जीव उच्यते ॥
तस्मादादौ पुरश्चर्यां कृत्वा साधकसत्तमः । प्रयोगञ्च ततः कुर्यात् साधक. सिद्धिहेतवे ॥
ग्रामे क्रोशमितं स्थानं नद्यादौ स्वेच्छया मतम् । नगरात् परतः क्रोशं क्रोशयुग्ममथाऽपि वा ॥
आहारादिविहारार्थं तावतीं भूमिमाक्रमेत् । गृहे जपः समः प्रोक्तो नद्यां शतगुणः स्मृतः ॥
पुण्यारण्ये तथाऽऽरामे सहस्रगुण उच्यते । अयुतं पर्वते पुण्यं लक्षं भागीरथीजले ॥
कोटिर्देवालये प्राहुरनन्तं शिवसन्निधौ । यत्र वा कुत्रचिद् देशे लिङ्गे वै पश्चिमामुखे ॥
स्वयम्भूर्वाणलिङ्गे वा इतरे वा तदन्तिके । प्रयागे सुरनद्यां वा वाराणस्यां वराहके ॥
उजटे पर्वते वापि श्मशाने गहनान्तरे । एकलिङ्गे शून्यगेहे चतुष्पथे शिवान्तिके ॥
एकवृक्षगिरौ वापि वटमूले शिवालये । महानिशि पुरश्चर्यां कुर्याद्दिषु स्थलेषु च ॥
क्षीरवृक्षस्य काष्ठानि दशास्त्रमन्त्रितानि वै । पूर्वादिक्रमतो वीरः स्थापयेत् कीलकानि च ॥
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणन्तथा । वायुं कुवेरमीशानं ब्रह्मानन्तौ ततः परम् ॥

१०

सर्वदिक्षु प्रपूज्यैव बलिं पश्चान्निवेदयेत् । ईशानशक्रयोर्मध्यमूर्ध्वं ज्ञेयं सदा बुधैः ॥
वरुणासुरयोर्मध्यमधश्च परिकथ्यते । क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ॥
क्षेत्रपालं गणेशञ्च विधिवत्तत्र पूजयेत् । दीपस्थाने च वीरेन्द्रो यथाविधि पुरःसरम् ॥
मण्डलं तत्र कुर्वीत चतुर्द्वारात्मकं ततः । शुचिः पूर्वदिने भूत्वा साधकः स्थिरमानसः ॥
प्रातः स्नात्वा च गायत्रीं सहस्रं प्रयतो जपेत् । ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं पुनः ॥
विप्रान् सन्तर्पयेत् सम्यग्भोजनात् सादरादिभिः । बहुभिर्वस्त्रभूषाभिः संपूज्य गुरुमात्मनः ॥
आरभेच्च जपं पश्चात् तदनुज्ञापुरःसरम् । आरम्भकाले नियतं परयोषां प्रपूज्य च ॥
दीक्षितां वस्त्रपुष्पाद्यैः स्वयं संयतमानसः । पायसं पिष्टकं चैव नानारससमन्वितम् ॥
दुग्धं दधि तथा तक्रं नवनीतं सशर्करम् । ऐक्षवं मोदकं चैव नानाविधरसायनम् ॥
नानाविधफलं चैव नानागन्धविलेपनम् । चन्दनं मृगनाभिञ्च श्रीखण्डं कुङ्कुमन्तथा ॥
आसनं पादुकां वस्त्रं तथा चाऽऽभरणादिकम् । धूपदीपञ्च कौषेयं पुष्पमालां तथा परम् ॥
पञ्चतत्त्वं कुलाद्यञ्च शून्यगेहे समानयेत् । द्वारदेशे ततो वीरः पूजयेद् द्वारदेवताम् ॥
गणेशं वटुकं चैव क्षेत्रपालञ्च योगिनीम् । चतुर्द्वारेषु संपूज्य पूर्वादिक्रमतो बुधः ॥
तेभ्यो बलिं प्रदद्यात्तु साधकश्च ततः परं । भूतापसरणं कृत्वा दीपस्थानं समाचरेत् ॥
नानालङ्काररचितो विहितासनमाश्रितः । स्वकल्पोक्तं विधायाऽथ प्रोक्षयेत्तदनन्तरम् ॥
अर्घ्योदकेन सम्भारमात्मानञ्च ततः परम् । नानालङ्कारसंयुक्तं अर्घ्योदकविशोधितम् ॥
अमृतीकरणं कृत्वा शक्तीरष्टौ सुखं नयेत् । अष्टकन्यारूपभेदं विलोपयाऽऽमर्शनेरितम् ॥
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुरुभूषणा । वेश्या नापितकन्या च रजकी योगिनी तथा ॥
विदग्धाः सर्वजातीनां प्रशस्ताः सर्वसिद्धिदाः । ब्रह्माण्याद्यष्टशक्तीनां नामभिः कृतसंज्ञकाः ॥
आसनं प्रथमं दत्त्वा स्वागतञ्च पुनः पुनः । अर्घ्यं पाद्यञ्च पानीयं मधुपर्कं जलन्ततः ॥
स्नापयेद् गन्धपुष्पाद्भिः केशसंस्कारमाचरेत् । धूपयित्वा ततः केशान् कौषेयञ्च निवेदयेत् ॥
ततः स्थानान्तरे पीठे आस्तीर्य पादुकायुगम् । दत्त्वा तत्र समासीनां नानालङ्कारभूषणैः ॥
भूषयित्वाऽनुलेपञ्च गन्धं माल्यं निवेदयेत् । तां तां शक्तिं ततो ध्यायेद् यथाक्रमविधानतः ॥
हंसारूढां सुवर्णाभां चतुर्वक्त्रां त्रिलोचनाम् । ब्रह्मकूर्चाब्जदण्डाक्षसूत्राणि करपङ्कजैः ॥
दधतीं चारुरूपाञ्च जटामुकुटमण्डिताम् । स्त्रलङ्कारसमायुक्तां ब्रह्माणीं संस्मरेत् सुधीः ॥
माहेश्वरीं वृषारूढां शुक्लां नेत्रत्रयान्विताम् । कपालं डमरुं बाणं शूलं टङ्कमभीतिदम् ॥
कराब्जैर्दधतीं चन्द्रचूडारत्नविभूषिताम् । त्रिनेत्रां कुङ्कुमनिभां कौमारीं शिखिवाहनाम् ॥
शक्तिपाशाङ्कुशाभीतिकरां चारुविभूषिताम् । वैष्णवीं गरुडारूढां श्यामां मधुमदाकुलाम् ॥
घण्टां शङ्खं कपालञ्च चक्रञ्च करपङ्कजैः । दधानां पीतवसनां मुक्तामणिविभूषिताम् ॥
वराहवाहिनीं धूम्रां वराहसदृशाननाम् । फलकां मूषलं चैव वरं खड्गं तथा परम् ॥

पाणिपङ्कजविभ्राणां चारुभूषणभूषिताम् । इन्द्रनीलप्रभामैन्द्रीमैरावतनिषेदुषीम् ॥
चन्द्रवक्त्राञ्च दधतीं वज्रशङ्खधनुः शरान् । नानालङ्काररचितां सदा भक्तानुरागिणीम् ॥ १५०
भीमवक्त्राञ्च चामुण्डां मुण्डमालावलीयुताम् । साट्टहासां शवासीनां मणिमुक्ताविराजिताम् ॥
कपालं खेटकं शूलं खड्गञ्च करपङ्कजैः । विभ्राणां नीलमेघाभां भावयेद्भक्तवत्सलाम् ॥
सिंहासनां महालक्ष्मीं पीताभां रत्नभूषिताम् । मातुलुङ्गफलाभीतिमालापद्मविधारिणीम् ॥
एवं ध्यात्वा क्रमाद्वीर आवाहन्यादिमुद्रया । तां तां शक्तिं समावाह्य मूर्ध्नि तासां प्रपूजयेत् ॥
पुनः पाद्यादिकं दत्त्वा साधकः स्थिरमानसः । भोज्यमण्डलमध्ये तु स्वर्णादिस्थानके ततः ॥ १५५
चर्व्यं चोष्यं लेह्यपेयं भोज्यं भक्ष्यं निवेदयेत् । अदीक्षिताश्चेत्तत्रैव ततो मायां निवेदयेत् ॥
तासां सव्येषु कर्णेषु ततः स्तोत्रं पठेन्नरः ॥
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
माहेशि वरदे देवि परमानन्दरूपिणि । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
कौमारि सर्वविघ्नेशि कुमारक्रीड़ने वरे । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ १६०
विष्णुरूपधरे देवि विनतासुतवाहिनि । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
शक्ररूपधरे देवि शक्रादिसुरपूजिते । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
चामुण्डे मुण्डमालासृक्चर्चिते भयनाशिनि । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
महालक्ष्मि महोत्साहे क्षोभसन्तापनाशिनि । कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ १६५
मितिमातृमये देवि मितिमातृवहिष्कृते । एके वहुविधे देवि विश्वरूपे नमोऽस्तु ते ॥
एतत् स्तोत्रं पठेद्यस्तु कर्मारम्भेषु संयतः । विदग्धाश्च समालोक्य तस्य विघ्नं न जायते ॥
कुलीनस्य द्वारदेव्यः कथितास्तव पुत्रक । दीक्षाकाले नित्यपूजासमये नाऽर्चयेद्य यदि ॥
तस्य पूजाफलं सर्वं लीयते यक्षराक्षसैः । यदि व्रीड़ापरा सा तु भोजयेत्तद्गृहाद्वहिः ॥
स्थित्वा स्तोत्रं पठेत्तावद्यावत्तृप्तिः प्रजायते । आचम्य मुखवासादिताम्बूलञ्च निवेदयेत् ॥ १७०
ततो दद्यात् पुनर्माल्यं गन्धचन्दन पङ्किलम् । बिन्दुयुक्तस्य दीर्घस्य एकैकान्ते नियोजयेत् ॥
स्वस्वनाम चतुर्थ्यन्तं हृन्मनुं तदनन्तरम् । मन्त्राणि कथितान्येव तासां वीरस्ततो जपेत् ॥
यथाशक्ति क्रमाज्जप्त्वा समर्प्याऽथ स्तुतिं पठेत् । विसृज्य च नमस्कृत्य वरं प्रार्थ्य सुखी भवेत् ॥
अन्या यदि नाऽऽगच्छन्ति निजकन्या निजानुजा । अग्रजा वा मातुलानी माता वा तत्सपत्निका ॥
वयसा जातितो वापि हीनाऽपि परमा कला । पूज्याः कुलरसैः सर्वा निजाहङ्कारवर्जितैः ॥ १७५
सर्वाभावे एकतरा पूजनीया प्रयत्नतः । संस्कृताऽसंस्कृता वापि जननी वापि निष्पतिः ॥
पूर्वाभावेऽपरा पूज्या देव्यंशा योषितो यतः । एकश्चेत् कुलशास्त्रज्ञः पूजार्हस्तत्र निश्चितम् ॥
सर्वत्रैव सुराः पूज्याः ब्रह्मविष्णुशिवादयः । एका चेद्युवती तत्र पूजिता त्र्यऽवलोकिता ॥

सर्वा एव परा देव्यः पूजिताः साधकोत्तमैः । आदावन्ते च मध्ये च लक्षपूर्त्तौ विशेषतः ॥
न पूजयति चेत् कान्तां तदा विघ्नै र्विलिप्यते । पूर्वार्जितफलं नास्ति का कथा परजन्मनि ॥
तस्मात् सर्वप्रयत्नेन यदीच्छेदात्मनो हितम् । देवीनां क्रोधसन्तापशमनं विघ्ननाशनम् ॥
सर्वथा च प्रयत्नेन पूजयेत् कुलयोषितम् । शक्तिपूजां समाप्याऽथ प्रकृतश्च समाचरेत् ॥
स्वकल्पोक्तविधानेन देवीं सम्पूजयेत्ततः । प्रातरेव ततः पश्चाज्जपेन्मध्यन्दिनावधि ॥
अन्यूनं नातिरिक्तश्च न दिनश्चाऽतिलङ्घयेत । एककालं द्विकालं वा त्रिकालं चाथ साधकः ॥
स्नानं कुर्याच्छुद्धतोयैर्हविष्यान्नं सुभोजयेत् । एकग्रामे स्थितो नित्यं गत्वा वन्देत्ततो गुरुम् ॥
प्रणमेत्तद्दिशोऽन्यत्र देवतावन्दनं सदा । प्रातरुत्थाय पूजायां स्नानकालेऽथवा पुनः ॥
संस्कृताऽसंस्कृता वापि हीनजाताऽपि वा तथा । नमस्या सर्वजातीनां कुलीनानां कुलार्चने ॥
वर्जयेद्‌ गीतवाद्यादिश्रवणं नृत्यदर्शनम् । अभ्यङ्गगन्धलेपश्च पुष्पधारणमेव च ॥
अस्नातांश्च द्विजान् शूद्रान् स्त्रियं नैव स्पृशेत् क्वचित् । त्यजेदुष्णोदकस्नानमनिवेदितभोजनम् ॥
नानाचारः प्रकर्त्तव्यो न चारणमितस्ततः । भूतहिंसा न कर्त्तव्या पशुहिंसा विशेषतः ॥
बलिदानं विना देव्या हिंसां सर्वत्र वर्जयेत् । अन्यमन्त्रपुरस्कारं निन्दां चैव विवर्जयेत् ॥
उष्णीशी कञ्चुकी नग्नो मुक्तकेशोऽप्यनावृतः । अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥
अनावृतकरो भूत्वा शिरसा चावृतोऽपिवा । चिन्ताव्याकुलचित्तो वा क्रुद्धो वा न जपेत् कदा ॥
वीरासनशयानो वा गच्छन्नखिल एव वा । रथ्यायामशिवस्थाने न जपेत्तिमिरालये ॥
पतितानामन्त्यजानां दर्शने भाषणे श्रुते । क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥
उत्थायाऽऽचमनं कृत्वा प्राणायामषडङ्गकम् । कृत्वा सम्यग्जपेच्छेषमथवा सूर्यदर्शनम् ॥
स्त्रियं शूद्रं पशुश्चैव तथा च भ्रष्टसाधकम् । सम्भाषयेत् कदाचिन्न ब्रह्मचर्यं समाचरेत् ॥
जपकाले च सततं भार्यां यत्नेन वर्जयेत् । शयीत शुद्धशय्यायां शुचिर्वस्त्रधरः सदा ॥
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् । नाऽऽलोकयेदन्यशास्त्रं वेदागमं विना सुधीः ॥
नक्तं भोजी हविष्यान्नं जपेद्विद्यां दिवा शुचिः । दिवसे सर्वथा वीरो ब्रह्मचारी भवेत् सदा ॥
देवताध्यानसंयुक्तो गमयेदनिशं बुधः । रात्रौ सम्पूजयेद्‌ देवीं कुलाचारक्रमेण तु ॥
पञ्चतत्त्वैः प्रपूज्यैव यथाशक्ति जपश्चरेत् । पुरश्चरणकाले तु यदि स्यात् पीठदर्शनम् ॥
तदा तत्र पीठपूजा मनसापि न हीयते । प्रसङ्गात् कथ्यते पीठपूजा तन्त्रविधानतः ॥
देवीकूटे महाभागे उड्डीयाने तथा पुनः । योगनिद्रा कामरूपे महिषासुरमर्दिनी ॥
कात्यायनी कामभूमौ कामाख्या कामदायिनी । जालन्धरे च पूर्णेशी पूर्णशैले च चण्डिका ॥
कामरूपे तु वेहारे पूज्या दिक्करवासिनी । अथवा कामरूपस्य दर्शनं यदि भाग्यतः ॥
तदा भगादिदेवीनां पूजा तत्र विधीयते । वक्ष्यमाणविधानेन तासां ज्ञात्वा स्वनामकम् ॥
कुलनाथं पुनर्ध्यात्वा स्वयमच्युमानसः । पूजां समापयेद्वीरः तदनुस्मृतिपूर्वकम् ॥

पूजाकाले हीनजाता स्ववयोधिका विधानतः । पूजनीया प्रयत्नेन द्वैधं तत्र विवर्जयेत् ॥
यथा विष्णुपुरं गोप्यं यथा वा शम्भुरीश्वरः । यथा कमलजन्मापि ये वा व्यासमुखा द्विजाः ॥
इन्द्राद्या लोकपालाश्च सर्वगन्धर्वकिन्नराः । यक्षरक्षःपिशाचाद्या गुह्यचारणचारिणः ॥
यैर्यथा गोपितं गुप्तं तदुक्तं शास्त्रसम्भवम् । तथा शैवेन गोप्तव्यः कुलाचारः सुदुर्लभः ॥
अनेन विधिना मन्त्री पुरश्चर्यां समाचरेत् । येषां जपे च होमे च संख्या नोक्ता मनीषिभिः ॥
तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः । यस्मिंश्च निगदे चैव मन्त्रे संख्या विधीयते ॥
तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् । कल्पोक्ते यत् कृता संख्या त्रेतायां द्विगुणा भवेत् ॥
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा । न दिव्यवीरयोरेव युगसेवापरिश्रमः ॥
पशूनां विद्यते चात्र संख्यावृद्धिर्युगक्रमात् । तेषां पूजा त्रिकालं हि रात्रौ नैव कदाचन ॥
कथितं सर्वशास्त्रेषु विधानं तन्त्रवर्त्मना । चतुर्गुणन्तु ताराया विना शङ्खाक्षमालया ॥
एवं कृत्वा हविष्याशी जपेल्लक्षचतुष्टयम् । नरास्थिमालामादाय जपेद्वा लक्षमेककम् ॥
भावनारहितानाञ्च क्षुद्राणां क्षुद्रचेतसाम् । चतुर्गुणजपः प्रोक्तः सिद्धये नान्यथा भवेत् ॥
सिद्धविद्या यथा नात्र युगसेवापरिश्रमः । विशेषतः कालयुगे तारा काली तथोन्मुखी ॥
आसामेव कदा नास्ति युगसेवाविधिः स्मृतः । उन्मुख्याः कालिकायाश्च विशेषः कथ्यतेऽधुना ॥
दिवसे ब्रह्मचर्येण स्वीयसंख्यं जपं पठेत् । रात्रौ मांसासवैर्मत्स्यैर्मुद्राभिर्मैथुनोद्भवैः ॥
संपूज्य च महादेवीं गन्धपुष्पादिभिस्तथा । ततो नग्नां स्त्रियं नग्नो रमणक्लेन्ततोऽपिवा ॥
जपेल्लक्षं प्रयत्नेन साधको मन्त्रसिद्धये । द्विजन्मनान्तु सर्वेषां द्विधा विधिरिहोच्यते ॥
शूद्राणान्तु तथा प्रोक्तं रात्राविष्टं महाफलम् । ततः सर्वं स्वकल्पोक्तजपसंख्यां समाप्य च ॥
ततस्तु तद्दशांशेन होमयेद्धविषाऽनले ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये द्वादशोल्लासः ॥ १२ ॥

---

## त्रयोदश उल्लासः

अथ होमविधिं वक्ष्ये यथातन्त्रानुसारतः। आदौ भूमिं परीक्षेत वास्तुज्ञानविशारदः॥
शल्यादीन् शोधयेद्युत्नादथवा पुरुषं खनेत्। नवहस्तप्रमाणं वा सप्तहस्तमथापि वा॥
पञ्चहस्तप्रमाणं वा चतुरस्रसमन्वितम्। विच्छिद्रन्तु चतुर्द्वारं दिव्यदृष्टिविभूषितम्॥
दिव्यमालापरिवृतं तन्तुना परिवेष्टितम्। आदौ कुण्डं प्रकुर्वीत साधकः सिद्धिहेतवे॥
चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं सुवर्त्तुलम्। षडस्रं पङ्कजाकारं अष्टास्रं तानि नामतः॥
हस्तमात्रमितां भूमिं पूर्ववत् परिसूत्रयेत्। समन्तात् कुण्डमेतत् स्याच्चतुरस्रं शुभावहम्॥
चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः। कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलपर्वणः॥
मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदीरितम्। यवानामष्टभिः क्लृप्तं मानाङ्गुलमितीरितम्॥
चतुरस्रीकृतं क्षेत्रं पञ्चधा विभजेत् सुधीः। न्यसेत् पुरस्तादेकांशं कोणार्धार्धप्रमाणतः॥
भ्रामयेत्तेन मानेन तथान्यदपि मन्त्रवित्। सूत्रयुग्मं ततो दद्यात् कुण्डं योनिनिभं भवेत्॥
चतुरस्रीकृतं क्षेत्रं दशधा विभजेत् सुधीः। एकमेकं त्यजेदंशमध ऊर्ध्वंश्च मन्त्रवित्॥
ज्यासूत्रं पातयेदग्रे तन्मानात् भ्रामयेत् पुनः। अर्धचन्द्रनिभं कुण्डं रमणीयमिदं भवेत्॥
चतुर्धा भेदिते क्षेत्रे विन्यसेत् पार्श्वयोर्द्वयोः। एकैकमंशं तन्मानादग्रतो लाञ्छयेत् पुनः॥
सूत्रयुग्मं बुधः कुर्यात् त्र्यस्रं कुण्डमुदाहृतम्। अष्टादशांशके क्षेत्रे न्यसेदेकं बहिर्बुधः॥
भ्रामयेत्तेन मानेन वृत्तकुण्डमनुत्तमम्। अष्टधा विभजेत् क्षेत्रं मध्यसूत्रस्य पार्श्वयोः॥
भागं न्यसेदेकमेकं मानेनाऽनेन मध्यतः। कुर्यात् पार्श्वद्वये मत्स्यचतुष्कं तन्त्रवित्तमः॥
सूत्रषट्कं ततो दद्यात् षडस्रं कुण्डमुत्तमम्। चतुरस्रीकृतं क्षेत्रं विभज्याऽष्टादशांशतः॥
एकं भागं बहिर्न्यस्य भ्रामयेत्तेन वर्त्तुलम्। वृत्तानि कर्णिकादीनां बहिस्त्रीणि प्रकल्पयेत्॥
पद्मकुण्डमिदं प्रोक्तं विलोचनमनोहरम्। पूर्वोक्तं विभजेत् क्षेत्रं चतुर्विंशतिभागतः॥
एकं भागं बहिर्न्यस्य चतुरस्रं प्रकल्पयेत्। अन्तःस्थचतुरस्रस्य कोणार्धार्धप्रमाणतः॥
बाह्यस्य चतुरस्रस्य कोणाभ्यां परिलाञ्छयेत्। दिशं प्रति यथान्यायमष्ट सूत्राणि पातयेत्॥
अष्टास्रं कुण्डमेतद्धि तन्त्रविद्भिरुदाहृतम्। यावान् कुण्डस्य विस्तारः खननं तावदीरितम्॥
कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम्। कुण्डाद्द्व्यङ्गुलं त्यक्त्वा कर्त्तव्या मेखलाः शुभाः॥
कुण्डानां मेखलास्तिस्रो मुष्टिमात्रेण ताः क्रमात्। उत्सेधायामतो ज्ञेया द्वादशार्धाङ्गुलिसम्मिताः॥
अरत्निमात्रकुण्डस्य तास्त्रिद्विकाङ्गुलात्मिकाः। अष्टादशाङ्गुलं ज्ञेयं अरत्निमानं धीमता॥
द्वादशाङ्गुलिभिश्चैव हस्तार्धं परिकीर्त्तितम्। एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः॥
मेखलानां भवेदन्तः परितो नेमिरङ्गुलात्। एक हस्तस्य कुण्डस्य वर्धयेत् तत्क्रमात् सुधीः॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः। चतुर्हस्तेषु कुण्डेषु वसुतर्कयुगाङ्गुलाः॥

कुण्डे रसकरे ताः स्युर्दशाष्टरससम्मिताः । वसुहस्तमिते कुण्डे भानुपङ्क्त्यष्टकाङ्गुलाः ॥
दशहस्तमिते कुण्डे मनुभानुदशाङ्गुलाः । विस्तारोत्सेधतो ज्ञेया मेखलाः सर्वतो बुधैः ॥ ३०
होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् । षट्चतुर्द्व्यङ्गुलायाम विस्तारोन्नतिशालिनी ॥
योन्याः पश्चिमतो नालं विस्तारं चतुरङ्गुलम् । त्रिद्व्येकाङ्गुलमानेन क्रमान्मूलाग्रमिष्यते ॥
नालमेखलयोर्मध्ये परिधिस्थापनाय च । स्थलादारभ्य नालं स्यात् योन्या मध्ये सरन्ध्रकम् ॥
नार्पयेत् कुण्डकोणेषु योनिं तां तन्त्रवित्तमः । मुष्ट्यरत्न्येकहस्तानां कुण्डानां योनिरीरिता ॥
एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्धयेत् । यवद्वयक्रमेणैव योन्यग्रमपि वर्धयेत् ॥ ३५
कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसन्निभाम् । तत्तत् कुण्डानुरूपं वा मानमस्य निगद्यते ॥
मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतारतः । नेत्रवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्धयेत् ॥
यवद्वयक्रमेणैव नाभिं पृथगुदारधीः । योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्जयेत् ॥
नाभिक्षेत्रं त्रिधा भित्वा मध्ये कुर्वीत कर्णिकाम् । बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ॥
मुष्टिमात्रमितं कुण्डं शतार्धे संप्रचक्ष्यते । शतहोमेऽरत्निमात्रं हस्तमात्रं सहस्रके ॥ ४०
कोणसूत्रप्रमाणेन कुर्याद्द्विहस्तकुण्डकम् । चतुर्हस्तादिकेऽप्येवं कर्त्तव्यं साधकेन च ॥
द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् । दशलक्षेषु षट्करं कोट्यामष्टकरं स्मृतम् ॥
(यद्वा) एकहस्तमितं कुण्डमेकलक्षे विधीयते । लक्षाणां दशकं यावत् तावद्धस्तेन वर्धयेत् ॥
दशहस्तमितं कुण्डं कोटिहोमे च दृश्यते । सर्वसिद्धिकं कुण्डं चतुरस्रमुदाहृतम् ॥
पुत्रप्रदं योनिकुण्डं अर्धचन्द्रं शुभप्रदम् । शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्मणि ॥ ४५
छेद मारणयोः कुण्डं षडस्रं पद्मसन्निभम् । वृष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम् ॥
(यद्वा) योनिकुण्डं वाक्प्रदं स्यादब्जमाकृष्टिकरणम् । लक्ष्मीप्रदं वर्त्तुलञ्च चन्द्रार्धं तु भयं हरेत् ॥
वृत्तं त्रिकोणकुण्डं हि खेचरीसिद्धिदायकम् । चतुरस्रं शान्तिलक्ष्मीपुष्टिऋद्धिप्रदायकम् ॥
कारणं सर्वसम्पत्तेर्ध्वंनसौभाग्यवर्द्धनम् । षडस्रं सर्वसम्पत्तिकारणं पौरुषप्रदम् ॥
अष्टास्रन्तु तथा ज्ञेयं समीहितफलप्रदम् । गुणानि सर्वकार्याणि चतुरस्रे भवन्ति हि ॥ ५०
विप्राणां चतुरस्रं स्याद् राज्ञां वर्त्तुलमिष्यते । वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् ॥
चतुरस्रन्तु सर्वेषां किञ्चित्तान्त्रिकसम्मतिः । कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुः ॥
प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः । उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥
नित्यं नैमित्तिकं कर्म स्थण्डिले वा समाचरेत् । हस्तमात्रे तु तत् कुर्याद्वालुकाभिः सुशोभनम् ॥
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः । एषामेकतमं कुण्डं निष्पाद्य स्रुक्स्रुवौ ततः ॥ ५५
प्रकल्पयेत् स्रुचं यागे वक्ष्यमाणेन वर्त्मना । श्रीफलशिंशपाक्षीरशाखिष्वेकतमं बुधः ॥
गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः । विंशत्यंशैर्भवेद्दण्डो वेदी तैरष्टभिर्भवेत् ॥
एकांशेन मितं कण्ठं सप्तभागमितं मुखम् । वेदीत्र्यंशेन विस्तारः कण्ठस्य परिकीर्त्तितः ॥

अग्रं कण्ठसमानं स्यात् मुखे मार्गं प्रकल्पयेत् । कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय च ॥
वेदीमध्ये विधातव्या भागेनैकेन कर्णिका । विदधीत बहिस्तस्या एकांशेनाऽमितोऽबटम् ॥
तस्य खातं त्रिभिर्भागैर्वृत्तमर्धांशतो भवेत् । अंशैनैकेन परितो दलानि परिकल्पयेत् ॥
मेखला मुखवेद्याः स्यात् परितोऽर्धांशमानतः । दण्डमूलाग्रयोर्गण्डी गुणवेदाङ्गुलैः क्रमात् ॥
गण्डीयुग्मं यमांशैः स्याद्दण्डस्याऽऽनाह ईरितः । षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत् ॥
हंसस्य वा हस्तिनो वा पतिणो वा मुखं लिखेत् । मुखस्य पृष्ठभागस्य संप्रोक्तं लक्षणं स्रुचः ॥
स्रुचश्चतुर्विंशतिभिर्भागैर्वा रचयेत् स्रुवम् । द्वाविंशत्या दण्डमानमंशैरेतस्य कीर्त्तितम् ॥
चतुर्भिरंशैरानाहः कर्षाज्यग्राहि तच्छिरः । अंशद्वयेन निखनेत् पङ्के मृगपदाकृतिम् ॥
दण्डमूलाग्रयोर्गण्डी भवेत् कङ्कणभूषिता । मूलात् षडङ्गुलं त्यक्त्वा अग्रे चैव द्विसप्तकम् ॥
स्रुवन्तु धारयेन्मन्त्री मूलमेव न दर्शयेत् । स्रुवस्य विधिराख्यातो यथातन्त्रविधानतः ॥
संस्काराणि च वा कुर्यात् कुण्डस्य साधकोत्तम: । अष्टादशाः स्युः संस्काराः कुण्डानां तन्त्रचोदिताः ॥
मूलेन वीक्षणं कृत्वा अस्त्रेण प्रोक्षणं ततः । तेनैव ताडनं दर्भैर्वर्मणाऽभ्युक्षणं मतम् ॥
अस्त्रेण खनोद्धारौ हृन्मन्त्रेण प्रपूरणम् । समीकरणमस्त्रेण वर्मणा सेचनं मतम् ॥
कुट्टनं हेतिमन्त्रेण कवचेन तु मार्जनम् । विलेपनं कलारूपकल्पनं तदनन्तरम् ॥
त्रिसूत्रीकरणं पश्चात् हृदयेनाऽर्चनं तथा । शरेण वज्रीकरणं हृदयेन कुशैः शुभैः ॥
चतुष्पथं तनुत्रेण तन्तयादक्षपाटनम् । यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ॥
अथवा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः । तिस्रस्तिस्रो लिखेद् रेखा हृदा प्रागुदगग्रगाः ॥
प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः । रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥
षट्कोणान्तर्गतां योनिं मण्डलं चाष्टपत्रकम् । वृत्तं क्षितिगृहं चैव कुण्डमध्ये लिखेत्ततः ॥
तारेण प्रोक्षणं कृत्वा पूजयेत् पीठदेवताः । मण्डले कालवह्निञ्च रुद्रमेव ततः परम् ॥
आधारशक्तिं कूर्मञ्च पृथिवीं रत्नद्वीपकम् । मणिगेहं प्रपूज्याथ कल्पवृक्षं ततः सुधीः ॥
सुवर्णवेदिकामध्ये आग्नेयादिषु तत्परम् । धर्मं ज्ञानञ्च वैराग्यं ऐश्वर्यञ्च यथाक्रमात् ॥
पूर्वाद्येतांस्च मध्ये च पुनर्मध्ये ततो यजेत् । परमानन्दकन्दञ्च सम्विन्नालं ततः परम् ॥
सर्वतत्त्वार्थकाब्जञ्च प्रकृतिपत्रकं ततः । विकारमयकेशरं मातृकामयकर्णिकाम् ॥
सूर्यस्य मण्डलं सोममण्डलं वह्निमण्डलम् । सत्त्वरजस्तमश्चैव आत्मानमन्तरात्मनम् ॥
परमात्मानमभ्यर्च्य ज्ञानात्मानं तत. परम् । नामाद्यक्षरबीजाद्यान् चतुर्थ्यन्तान्नमोऽन्वितान् ॥
प्रणवाद्यान् यजेदेतान् वर्त्तुले भुवनेश्वरीम् । वागीश्वरीञ्च वागीशं यजेद्योगस्वरूपकम् ॥
पीठाय नम इत्युक्त्वा कर्णिकायां प्रपूजयेत् । वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ॥
वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् । मायाबीजं समुच्चार्य वागीश्वरीञ्च ङेयुताम् ॥
नमोऽन्तोऽयं महामन्त्रो वागीश्वर्याः प्रकीर्त्तितः । वागीश्वरं स्वमन्त्रेण ततो वह्निं समानयेत् ॥

सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् । ताम्रपात्रे पुटीकृत्य क्रव्यादंशं परित्यजेत् ॥
वह्निबीजेन चास्त्रेण नैर्ऋत्यां दिशि साधकः । संस्कुर्यात्तं यथान्यायं चतुर्भिर्वीक्षणादिभिः ॥
औदर्यवैन्दवाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः । योजयेद्वह्निबीजेन चैतन्यं पावके ततः ॥
तारेण मन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् । अस्त्रेण रक्षितं पश्चात् कवचेनाऽवगुण्ठितम् ॥
अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः । प्रदक्षिणं तदा तारमन्त्रोच्चारणपूर्वकम् ॥
आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः । शिवबीजधिया देव्या योनावेव विनिःक्षिपेत् ॥
पश्चाद् देवस्य देव्याश्च दद्यादाचमनादिकम् । ज्वालिनीं दर्शयित्वा च ज्वालयेन्मनुनाऽमुना ॥
चित्पिङ्गल हन दह पच युग्मान्युदीर्य च । सर्वज्ञाऽऽज्ञापय स्वाहा मन्त्रोऽयं समुदीरितः ॥
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतो मुखम् ॥
उपतिष्ठेत विधिवत् मनुनाऽनेन पावकम् । विन्यसेदात्मनो देहे मन्त्री जिह्वा हविर्भुजः ॥
लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः । वह्नीरार्घीशसंयुक्ताः सादियान्ताः सबिन्दवः ॥
वह्नेर्मन्त्राः समुद्दिष्टाः जिह्वानां सप्त देशिकैः । जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेषु कर्मसु ॥
हिरण्या गगना रक्ता कृष्णाऽन्या सुप्रभा मता । बहुरूपाऽतिरक्ता च सात्त्विक्यो यागकर्मसु ॥
पद्मरागा सुवर्णाऽन्या तृतीया भद्रलोहिता । लोहिताऽनन्तरं श्वेता धूमिनी च करालिका ॥
राजस्यो रसना वह्नेर्विहिताः काम्यकर्मसु । विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥
लोहिताऽन्या करालाख्या काली तामस्य ईरिताः । एताः सप्त प्रयुज्यन्ते क्रूरकर्मसु मन्त्रिभिः ॥
स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः । अमर्त्यपितृगन्धर्वयक्षनागपिशाचकाः ॥
राक्षसाः सप्तजिह्वानामीरितास्त्वधिदेवताः । वह्नेरङ्गमनून् न्यस्येत्तनावुक्तेन वर्त्मना ॥
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषः पुनः । धूमव्यापी सप्तजिह्वो धनुर्धर इतीरितः ॥
षडङ्गमनवः प्रोक्ता जातिभिः सह संयुताः । मूर्त्तीरष्टौ तनौ न्यस्येद्देशिको जातवेदसः ॥
मूर्द्धांशपार्श्वकट्यन्धु कटी पार्श्वांशुकेषु च । प्रदक्षिणवशान्न्यस्येदुच्यन्ते ता यथाक्रमम् ॥
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः । अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ॥
कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः । ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः ॥
आसनं कल्पयित्वाऽग्नेर्मूर्त्तिं तस्य विचिन्तयेत् ॥

इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिः धारयन्तं जवाभम् ।
हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥

परिषिञ्चेत्ततस्तोयैर्विशुद्धैर्मेखलोपरि । दर्भैरगभमध्यस्थमेखलायां परिस्तरेत् ॥
निःक्षिपेद्दिक्षु परिधीन् प्राचीवर्ज्जञ्च मन्त्रवित् । प्रादक्षिण्येन संपूज्यास्ते ब्रह्माद्यष्टमूर्त्तयः ॥
ध्यायेद्वह्निं यजेन्मध्ये गन्धाद्यैर्मनुनाऽमुना । वैश्वानर जातवेदपदं पश्चादिहाऽऽवह ॥
लोहिताक्ष पदस्यान्ते सर्वकर्माणि साधय । वह्निजायावधिः प्रोक्तो मनुः पावकवल्लभः ॥

मध्ये षट्स्वपि कोणेषु जिह्वा वह्नेस्ततो यजेत् । केशरेषूक्तमार्गेण पूजयेदङ्गदेवताः ॥
दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः । दलाग्रे मातरः पूज्याः सासिताङ्गादिभैरवाः ॥ १२०
लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान् । पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ॥
त्रिः संप्रतापयेद्वह्नौ दर्भानादाय देशिकः । तदग्रमध्यमूलानि शोधयेत्तौ यथाक्रमात् ॥
गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ । पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिःक्षिपेत् ॥
आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशास्तरे । आज्यस्थालीमथाऽऽदाय प्रोक्षयेदर्घवारिणा ॥
तस्यामाज्यं विनिःक्षिप्य संस्कुर्याद्वीक्षणादिभिः । निरुह्य वायव्येऽङ्गारान् हृदा तेषु निवेशयेत् ॥ १२५
इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः । दीप्तदर्भयुग्ममाज्ये क्षिप्त्वाऽनले क्षिपेत्ततः ॥
गुरुर्हृदयमन्त्रेण पवित्रीकरणन्त्विदम् । दीप्तेन दर्भयुग्मेन नीराज्याज्यं सवर्मणा ॥
अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् । घृते प्रज्वलितान् दर्भान् प्रदर्श्याऽस्त्राणुना गुरुः ॥
जातवेदसि तान् न्यस्येदुद्योतनमितीरितम् । गृहीत्वा घृतमङ्गारान् संयोज्याऽग्नौ जलं स्पृशेत् ॥
अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसम्मितौ । धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनन्त्विदम् ॥ १३०
तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मनो मुखम् । घृतेन प्लावनं कुर्यात् संस्काराः षडुदीरिताः ॥
प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे । निःक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत् ॥
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः । सुषुम्णां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि ॥
स्रुवेण दक्षिणभागादादायाऽऽज्यं हृदा सुधीः । जुहुयादग्नये स्वाहा अग्नेर्दक्षिणलोचने ॥
वामतस्तद्वदादाय वामे वह्निविलोचने । जुहुयादथ सोमाय स्वाहेति हृदयाणुना ॥ १३५
मध्यादाज्यं समादाय वह्नेर्भालविलोचने । जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना ॥
हृन्मन्त्रेण स्रुवेणाऽऽज्यं भागादादाय दक्षिणात् । जुहुयादग्नये स्विष्टिकृते स्वाहेति तन्मुखे ॥
इति सम्पातयेद्भागेष्वाज्यस्याऽथाऽऽहुतिं क्रमात् । इत्यग्निनेत्रवक्त्राणां कुर्यादुद्घाटनं सुधीः ॥
सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः । जुहुयादग्निमन्त्रेण त्रिवारान् साधकोत्तमः ॥
गर्भाधानादिकां वह्नेः क्रियां निर्वर्तयेत् क्रमात् । अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ॥ १४०
गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः । अनन्तरं जातकर्म स्यान्नामकरणं तथा ॥
उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् । चूडोपनयने भूयो महानाम्ना महाव्रतम् ॥
तथोपनिषदं पश्चात् गोदानोद्वाहकौ स्मृतिः । शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मसु ॥
मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः । ततश्च पितरौ तस्य संपूज्याऽऽत्मनि योजयेत् ॥
समिधः पञ्च जुहुयादादाय घृतसंप्लुताः । मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद्वह्नेर्यथाविधि ॥ १४५
प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः । अवदाय स्रुवेणाऽऽज्यं चतुः स्रुचि पिधाय ताम् ॥
स्रुवेण तिष्ठन्नेवाग्नौ देशिको यतमानसः । जुहुयाद्वह्निमन्त्रेण वौषडन्तेन सम्पदे ॥
विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश । तारं रमा तथा मायां क्लीं ग्लौं तदनन्तरम् ॥

गं गणपतये वरवरदान्ते सर्वपदं जनम्। मे वशमानय प्रोच्य वह्निजाया ततः परम्॥
कथितं विघ्नराजस्य मन्त्रराजं सुदुर्लभम्। सामान्यं सर्वदेवानामेतदग्निमुखं मतम्॥ १५०
ततः पीठं समभ्यर्च्य देवताया हुताशने। अर्चयेद्वह्निरूपां तां देवतामिष्टदायिनीम्॥
तन्मुखे जुहुयान्मन्त्री पञ्चविंशतिसंख्यया। आज्येन मूलमन्त्रेण वह्न्यैकीकरणं त्विदम्॥
वह्निदैवतयोरैक्यमात्मना सह भावयन्। मूलमन्त्रेण जुहुयादाज्यैरेकादशाऽऽहुतीः॥
नाड़ीसन्धानमुद्दिश्येदागमवेदिभिः। जुहुयादङ्गमुख्यानामावृतीनामनुक्रमात्॥
पक्षैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः। त्रिमध्वक्तैस्तिलैर्मन्त्री हुनेज्जपदशांशतः॥ १५५
मुद्रा ज्ञेया च धीरेण पाणिहोमेषु सर्वदा। शूकरी करसङ्कोचो हंसी मुक्तकनिष्ठिका॥
कनिष्ठा तर्जनी मुक्ता मृगीति कथिता त्रिधा। अभिचारे च पुष्टौ च शान्त्यादौ च यथाक्रमात्॥
रिक्तहस्तेन यद्दानं हूयते च हुताशने। दातुः पुण्यफलं नास्ति होता च नरकं व्रजेत्॥
एवं ज्ञात्वा विशेषज्ञो होमं कुर्यात् प्रयत्नतः। आज्येन मधुना चैव शर्करा च मधुत्रयम्॥
द्रव्यैः पूर्वोदितैर्वापि होमयेत् संस्कृतेऽनले। स्वकल्पविहितैर्द्रव्यैः साधको यतमानसः॥ १६०
जपसंख्यादशांशेन होमयेद्विधिपूर्वकम्। अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते॥
छिन्नायाः कालिकायाश्च विशेषस्तन्यतेऽधुना। दिवा जपदशांशेन मधुरत्रयसंयुतम्॥
तिलपुष्पं फलं चैव हविष्यान्नञ्च यद्भवेत्। एषामेकतमं कृत्वा मधुरत्रयसंयुतम्॥
हुत्वा संख्यां समाप्याथ रात्रिकल्पं समाचरेत्। योनिकुण्डे स्थिते सर्पिर्मांसमत्स्ययुतं भृशम्॥
अथ काम्यविधिं वक्ष्ये सर्वशाक्तेषु सिद्धिदम्। मल्लिकाजातिपुन्नागैर्होमाद्वाग्यालयो भवेत्॥ १६५
फलैर्बिल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद्भवेत्। राजपुत्रस्य राज्याप्तिः पङ्कजैः श्रियमाप्नुयात्॥
उत्पलैर्वशयेद्विश्वं लक्ष्मीं पुष्पैस्तथा नरः। बन्धुकपुष्पैर्वकुलैर्जवोत्थैः किंशुकोद्भवैः॥
वशाय जुहुयान्मन्त्री मधुना सह सिद्धये। लवणैर्मधुरोपेतैर्हुत्वा कर्षति सुन्दरीम्॥
वञ्जुलस्य समिद्धोमात् वृष्टिं वितनुतेऽचिरात्। क्षीराक्तैरमृताखण्डैर्होमो नाशयति ज्वरम्॥
दूर्वाभिरायुराप्नोति कदम्बैर्वश्यमाप्नुयात्। राजीलवणहोमेन शत्रून् मारयतेऽचिरात्॥ १७०
अन्नेन मधुयुक्तेन निर्धनो धनमाप्नुयात्। सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम्॥
नन्द्यावर्त्तभवैः पुष्पैर्होमाद्वाग्मी भवेन्नरः। बिल्वप्रसूनैर्जुहुयादीप्सितां श्रियमाप्नुयात्॥
पलाशकुसुमैर्होमात्तेजस्वी जायते नरः। चन्दनागुरुकर्पूररोचनाकुङ्कुमादिभिः॥
वशाय जुहुयान्मन्त्री वशयेदखिलं जगत्। निर्गुण्डीमूलहोमेन निगड़ान्मुच्यते नरः॥
निम्बतैलान्वितैर्लोणैर्होमः शत्रुविनाशनः। हरिद्राचूर्णसंमिश्रैर्लवणैः स्तम्भयेत् परान्॥ १७५
रसवद्भिः फलैः पक्वैः पुष्पैः परिमलान्वितैः। हुत्वा सम्यगवाप्नोति साधकः सर्वमीप्सितम्॥
मालतीपुष्पहोमेन वाग्मी द्रुतकविर्भवेत्। वशयेद्वचहोमेन नरान्नरपतीनपि॥
पद्मैर्हुत्वा जयेत् शत्रुन् दूर्वाभिः शान्तिमाप्नुयात्। पलाशकुसुमैः पुष्टिं धनं धान्यं श्रियं लभेत्॥

शशकस्य तु मांसेन मधुना लोढ़ितेन च । हुत्वा हेममवाप्नोति वित्तविद्यावरस्त्रियः ॥
काकपक्षैः कृते होमे विद्वेषं तनुते नृणाम् । मरीचहोमैर्मरणं रिपुराप्नोति निश्चितम् ॥ १८०
अयुतं वटवृक्षोत्थैः संशुद्धिरर्चितेऽनले । होमं समिद्वरैः कुर्यान्नाशयत्यापदां कुलम् ॥
अपामार्गसमिद्भिर्वा तिलैर्वा काननोद्भवैः । व्रीहिभिर्जुहुयाद्वीरो वत्सरात् व्रीहिमान् भवेत् ॥
दूर्वाहोमेन दीर्घायुर्मधुना वत्सराद्भवेत् । आरग्वधैः समृद्धिः स्यादाज्येन लभते धनम् ॥
गोदुग्धेन गवां वृद्धिमाप्नुयान्नात्र संशयः । काम्यहोमं सदा धीरः कुर्यादयुतसंख्यया ॥
लतापुष्पान्वितं कृत्वा पर्णानां शतकं सुधीः । तानि संभन्त्र्य विधिवदसकृत् साधकोत्तमः ॥ १८५
ततो वै होमयेत्तानि संस्कृतेऽग्नौ यथाविधि । युगानामयुतं तेन पूजनं जायते तथा ॥
अनेन क्रमयोगेन यश्चरेद्भुवि साधकः । न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥
वीरो भवति वाग्मीकः सर्वसिद्धिमुपालभेत् । हुनेदाज्येन तक्रेण मांसेन रुधिरेण च ॥
रक्तपुष्पेण साज्येन सरक्तेन विशेषतः । आमिषादिभिरप्येवं श्मशाने जुहुयात् सुधीः ॥
मांसं रक्तं तिलं केशं नखं भक्तञ्च पायसम् । आज्यं चैव विशेषेण जुहुयात् सर्वसिद्धये ॥ १९०
एवं कृतेन सर्वत्र लभते सिद्धिमुत्तमाम् । यत् यत् कामयते कामं तत्तदाप्नोति निश्चितम् ॥
देववन्मानुषो भूत्वा भुनक्ति बहुलं सुखम् । योनिकुण्डे हुनेद्विद्वान् यथावत् साधितेऽनले ॥
हविषा चैव भक्तेन मांसेन रुधिरेण च । रक्तचन्दनपुष्पेण कृष्णेन च विशेषतः ॥
श्मशाने जुहुयान्मन्त्री शुद्धामिक्षाभिरप्यथ । धने धनेश्वरो भूयादाज्ञया च शचीपतिः ॥
बलेन पवनो भूत्वा देववद्विचरेद्भुवि । अथ ध्यात्वा चरेद्धोमं दधिसिद्धान्नतण्डुलैः ॥ १९५
सहस्रैकविधानेन समस्तफलसिद्धये । विद्याकामेन होतव्यं शर्करायुतपायसैः ॥
मलनाश्यं भवत्येव सद्यो विद्याचतुर्दश । रजस्वलाया वस्त्रेण मधुना सह सर्पिषा ॥
अयुतैकं विधानेन सिद्धयोऽष्टौ भवन्ति हि । सद्योमार्जारमांसेन घृतेन मधुना सह ॥
चाण्डालकेशयुक्तेन सर्वसिद्धिर्भवेद्ध्रुवम् । बन्धुककुसुमैर्होमं कृत्वा रक्तान्वितैर्ध्रुवम् ॥
दुर्भगाया भवेद्भाग्यं सर्वसिद्धिर्न संशयः । रम्भापुष्पं शालमत्स्यं जुहुयान्मन्त्रवित्तमः ॥ २००
सर्वसिद्धिमनुप्राप्य अन्ते मोक्षमवाप्नुयात् । साक्षतं बिल्वपत्रञ्च जुहुयाच्च सहस्रकम् ॥
लभते मञ्जुलां वाणीं महाष्टम्यां विशेषतः । एवं ज्ञात्वा प्रकुर्वीत द्रव्यमानमथोच्यते ॥
कर्षमानं घृतं होमे शुक्तिमात्रं पयः स्मृतम् । पञ्चगव्यञ्च तत्संख्यं भवेन्मधु तथा समम् ॥
दुग्धान्नमक्षसदृशं दधि प्रसृतिमानकम् । लाजा मुष्टिमिता ज्ञेया पृथुकं शुक्तिमेव च ॥
गुडं पलार्धमानं स्यात् शर्करापि तथा समा । मत्स्यं मांसं तथा ज्ञेयं रुधिरं शुक्तिमात्रकम् ॥ २०५
ग्रासार्धं चरुमानं स्यादिक्षु पर्वावधि स्मृतम् । एकैकपलपुष्पाणि तथा पूपानि कल्पयेत् ॥
कदलीफलनारङ्गफलान्येकैकशो विदुः । मातुलुङ्गं चतुःखण्डं पनसं दशधा भवेत् ॥
अष्टधा नारिकेलञ्च मालूरञ्च त्रिधा भवेत् । कपित्थञ्च त्रिधा ज्ञेयं ऊर्वारुकं त्रिधा भवेत् ॥

फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः । दुर्वात्रयं समुद्दिष्टं गुडुचो चतुरङ्गुला ॥
व्रीहयो मुष्टिमानाः स्युर्मुद्गमाषयवा अपि । तण्डुलाः स्युस्तदर्धाश्च अथवा मुष्टिसम्मिताः ॥ २१०
गोधूमा रक्ते कलमा मुष्टिमानास्तिलास्तथा । मुष्टिमानाः सर्षपाश्च लवणं शुक्तिमानकम् ॥
मरीचानि च विंशतिः पुरं बदरसंमितम् । रामठं तत्समं ज्ञेयं रोचना तत्समा भवेत् ॥
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च । तिन्तिड़ीबीजमानानि समुद्दिष्टानि देशिकैः ॥
वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः । शयानमाज्यहोमेषु निषण्णः शेषवस्तुषु ॥
अस्यान्तर्जुहुयाद्वह्नेर्विपश्चित् सर्वकर्मसु । ज्वलत् शिखा मुखं वह्नेर्वोद्धव्यं साधकोत्तमैः ॥ २१५
शुभाशुभं तथा ज्ञेयं वह्नेर्वर्णादिभेदतः । स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसन्निभः ॥
सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः । भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥
नागचम्पकपुन्नागपाटलायुथिकानिभः । पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलसन्निभः ॥
पावकस्य शुभो गन्ध इत्युक्तस्तत्त्ववेदिभिः । प्रदक्षिणास्त्यक्तकम्पाः सुप्रभाः शिखिनः शिखाः ॥
शुभदाः साधकानान्तु अन्यथाऽनिष्टदा भवेत् । कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ॥ २२०
कृष्णवर्णो भवेद्व धूमो मन्त्रिणं नाशयेद्ध्रुवम् । श्वेतो राष्ट्रं दहत्याशु वायसस्वरसन्निभः ॥
खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् । पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ॥
छिन्नावर्त्ता शिखा कुर्यान्मृत्युं धनपरिक्षयम् । शुकपक्षिनिभो धूमः पारावतसमप्रभः ॥
हानिन्तुरगजातीनां गवाञ्च कुरुतेऽचिरात् । एवम्विधेषु दोषेषु प्रायश्चित्ताय साधकः ॥
मूलेनाऽऽज्येन जुहुयात् पञ्चविंशतिमाहुतीः । स्वीयसंख्याविधानेन हुत्वा शेषं समाचरेत् ॥ २२५
स्रुचा पूर्णाहुतिं कृत्वा मूलमन्त्रेण देशिकः । उद्वास्य देवतां कुम्भे साङ्गावरणपूर्विकाम् ॥
पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः । एकैका [illegible] हुतिं हुत्वा परिषिच्याद्भिरात्मनि ॥
पावकं योजयित्वा स्वे परिधीन् सपरिस्तरान् । नैमि [illegible] के काम्यहोमे दहेत्तान्न तु नित्यके ॥
होमस्य विधिराख्यातस्तर्पणस्यापि कथ्यते । ततः स [illegible] येन्मन्त्री होमस्यापि दशांशतः ॥
तीर्थतोयेन दुग्धेन सर्पिषा सुरयाऽपिवा । गन्धोदकेन [illegible] कुर्यात् सर्वत्र साधकोत्तमः ॥ २३०
होमान्ते देवतायाश्च पीठं तोये विचिन्तयेत् । अथवा होमपात्रादौ यन्त्रं कृत्वा ततः परम् ॥
पूजयित्वा ततो देवीं परिवारगणान्विताम् । आदौ सन्तर्पयेद्व यन्त्रे गुर्वादींस्तु यथाक्रमात् ॥
एकैकमञ्जलिं कृत्वा सन्तर्प्य रश्मिवृन्दकम् । पूर्वद्रव्यैर्देवमुखे तर्पयेद्विधिना ततः ॥
होमस्यापि दशांशेन तर्पणञ्च समाचरेत् । प्रसङ्गात् कथ्यते काम्यत[illegible]र्पणञ्च विशेषतः ॥
इष्टदेवीं ततः [illegible]श्चात् यथोक्तसंख्यया बुधः । तर्पयित्वा महादेवीं काम्यतर्पणमाचरेत् ॥ २३५
तर्पयेच्च पयोभिश्च रक्तधारायुतैस्तथा । मज्जाभिश्च यथा तत्तत् स्वकोयेन कचेन च ॥
आकर्षितायाः कन्यायाः कुलप्रक्षालनेन च । मेषमाहिषरक्तेन नररक्तेन चैव हि ॥
मूषामार्जाररक्तैः तर्पयेत् परदेवताम् । एवं तर्पणमात्रेण साक्षात् सिद्धीश्वरो भवेत् ॥

कविता जायते तस्य द्राक्षारसपरम्परा । बृहस्पतिसमो भूत्वा देवीवद्भुवि मोदते ॥
न तस्य पापपुण्यानि जीवन्मुक्तो भवेद्ध्रुवम् । कालागुरुद्रवोपेतैर्वशयेज्जगतीमिमाम् ॥ २४०
सचन्दनेन तोयेन सौभाग्यं लभते नरः । तोयैः कुङ्कुममिश्रैश्च स्तम्भयेदखिलं जगत् ॥
सितामिश्रिततोयेन बृहस्पतिसमो भवेत् । कर्पुराक्तजलेनैव कर्षयेदसुरानपि ॥
रोचनायुततोयेन मुच्यते सर्वदूर्ग्रहात् । सर्वशास्त्रेषु कथितं तर्पणं शुभदायकम् ॥
उन्मुख्याः कालिकायाश्च रात्रिकल्पस्य साधकः । तर्पयेन्मदिराभिश्च मत्स्यमांसैः समं बुधः ॥
ततः सम्पूर्णसङ्ख्यायां स्वकल्पोक्तप्रमाणतः । स्थापयेदात्महृत्पद्मे परिवारगणैः सह ॥ २४५
देवताञ्च ततः पश्चात्तर्पणस्य दशांशतः । अभिषेकं प्रकुर्वीत गन्धतोयैः सुसाधकः ॥
गृहीत्वा गन्धतोयञ्च मुद्रया कुम्भसंज्ञया । मूलमन्त्रं समुच्चार्य ततश्चाऽमुकदेवताम् ॥
अभिषिञ्चामि तत्पश्चात् हृन्मनुस्तदनन्तरम् । इत्युच्चार्य स्वमूर्ध्नि तं चिन्तयित्वा समन्त्रकम् ॥
ततः सञ्चिन्तयेद्देवीं साङ्गावरणदेवताम् । क्षिपेत्तोयं यथासंख्यं गणान् सिञ्चेत्ततः परम् ॥
अभिषेकं स्वीयसंख्यं विधाय तदनन्तरम् । तत्तन्मन्त्रयुतान् विप्रान् भोजयेद्देवताधिया ॥ २५०
विधिवत् पूजयित्वा च भोजयित्वा च साधकः । तत्तद्देवप्रियैर्द्रव्यैरभिषेकदशांशतः ॥
छिन्नायाः कालिकायाश्च दिवाकल्पस्य साधकः । तद्दशांशान् हविष्यान्नैः भोजयेद्भक्तिभावतः ॥
तत्तन्मन्त्रविदो विप्रान् रात्रिकल्पं समाचरेत् । हेतुं मांसञ्च मत्स्यञ्च चर्वणञ्च प्रदापयेत् ॥
ब्राह्मणान् देवताबुद्ध्या भोजयित्वा च साधकः । सिद्धमन्त्री भवेत् सोऽपि नात्र कार्या विचारणा ॥
जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम् । पञ्चाङ्गेयञ्च कथिता पुरस्क्रिया सुसिद्धये ॥ २५५
अथवा जपहोमतर्पणञ्चाऽभिषेकोऽप्यघमर्षणम् । सूर्यार्घ्यं जलपानञ्च प्रणामं चैव पूजनम् ॥
ब्राह्मणानां भोजनञ्च दशाङ्गेयं पुरस्क्रिया । तत्तत्कर्मदशांशेन कुर्याद्धोमादिकं बुधः ॥
अघमर्षणं दिनेशार्घ्यं कृत्वा पूर्वविधानतः । रव्यर्घ्यस्य दशांशेन जलपानं समाचरेत् ॥
आत्मानं देवतारूपं विभाव्य यतमानसः । दक्षहस्ते जलं नीत्वा मूलान्तेऽमुकदेवताम् ॥
पाययामि नमः पश्चात् स्ववक्त्रे स्तत् पिबेत्ततः । तत्संख्याञ्च समाप्याऽथ मूलान्ते स्वीयदेवताम् ॥ २६०
नमामीति नमस्कुर्याज्जलपानदशांशतः । पूजनञ्च ततः कुर्यात् यथाविधिविधानतः ॥
विप्राणां भोजनं कुर्यान्नमस्कारदशांशतः । विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद् यतः ॥
अथवा तद्दिने कुर्यात्तत्तज्जपदशांशतः । द्विजादीनाञ्च वर्णानां विधिः प्रोक्तः शुभावहः ॥
होमकर्माद्यशक्तानां द्विगुणो जप ईरितः । इतरेषाञ्च वर्णानां त्रिगुणादिसमीरितः ॥
कुत्रापि यदि हीनं स्यादशकस्याऽङ्गकर्मणि । तत्तद्दशैव कार्य्याणि दशशून्यं न कारयेत् ॥ २६५
ततः सम्पूजयेद्भक्त्या सम्भारैर्विविधैर्गुरुम् । दक्षिणां गुरवे दद्यात् मन्त्राणाञ्च विशुद्धये ॥
गुरवे गुरुपुत्राय तत्पत्न्यै वा प्रदापयेत् । तत्तदभावतो मन्त्री कुलीनाय कुलाय धा ॥
दत्त्वा च साधकश्रेष्ठो महापूजां समापयेत् । तत्तत्कल्पसमाचारान्मन्त्रसिद्धिः प्रजायते ॥

इति ज्ञानानन्दपमहंसविरचिते कौलावलीनिर्णये त्रयोदशोल्लासः ॥ १३ ॥

## चतुर्दश उल्लासः

अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते । श्मशाने तु पुरश्चर्या कथिता भुवि दुर्लभा ॥
वैष्णवे गाणपत्ये च शैवे चैवाऽन्यमन्त्रके । शाक्ते चैव विशेषेण साधयेत् साधकोत्तमः ॥
भौमवारे तमिस्रायां यामे याते च साधकः । अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि ॥
कृष्णपक्षे विशेषेण साधयेदनया हितम् । अक्षालितचितायान्तु साधको निर्भयः सुधीः ॥
सामिषान्नं गुड़ं छागं सुरापिष्टकपायसम् । नानाफलञ्च नैवेद्यं स्वकल्पोक्तेन साधितम् ॥
पुष्पादिकं समानीय सुहृद्भिः शस्त्रपाणिभिः । समानगुणसम्पन्नैः साधको वीतभीः स्वयम् ॥
भीतश्चेत् साधकस्तत्र चतुर्दिक्षु च साधकाः । नो चेत् स्वयं केवलोऽसौ भैरवः परिकीर्त्तितः ॥
वस्त्रालङ्कारभूषाद्यैर्भूषितः पूर्वसम्मुखः । चितायाः पश्चिमे भागे उपविश्य स्थिरः शुचिः ॥
अस्त्रान्तमूलमन्त्रेण प्रोक्षणं यागभूमिषु । गुरुपादरजो ध्यात्वा वामपादपुरःसरः ॥
गणेशं वटुकं चैव योगिनीं मातृकास्तथा । विधिवत् पूजयित्वा तु पुटाञ्जलिः पठेदिमम् ॥
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः । पिशाचयक्षसिद्धाश्च गन्धर्वाप्सरसां गणाः ॥
योगिन्यो मातरो भूता सर्वाश्च खेचराः स्त्रियः । सिद्धिदास्ता भवन्त्वत्र तथा च मम रक्षकाः ॥
प्रणम्येति चितामध्ये पुष्पाञ्जलित्रयं क्षिपेत् । श्मशानाधिपतिं पश्चाद्भैरवं कालभैरवम् ॥
महाकालं यजेद्यत्नात् पूर्वादिदिक्चतुष्टये । पाद्यादिभिश्च मन्त्रज्ञो वलिं पश्चान्निवेदयेत् ॥
प्रणवं कूर्चवीजन्तु श्मशानाधिप तत्परम् । इममन्ते सामिषान्नं वलिं गृह्णद्वयं वदेत् ॥
गृह्णापय द्वयं विघ्ननिवारणं ततः कुरु । सिद्धिं मे च प्रयच्छाऽन्ते स्वाहान्तेऽपि वलिं दिशेत् ॥
दुग्धेनाप्युत्सृजेद्वापि पञ्चगव्येन वा तथा । भैरवभयानकात् पूर्वं मायाबीजं पठेत् सुधीः ॥
पूर्ववद्वलिमुद्धृत्य दक्षिणे वलिमाहरेत् । कूर्चान्ते कालशब्दान्ते भैरवेति ततः परम् ॥
श्मशानाधिपतये पूर्वपश्चिमे वलिमाहरेत् । हूमन्ते च महाकाल पूर्ववदुत्तरे हरेत् ॥
चितामध्ये ततो दत्त्वा वलित्रयमनुत्तमम् । कालरात्रि महाकालि कालिके घोरनिःस्वने ॥
गृहाणेमं वलिं मातर्देहि सिद्धिमनुत्तमाम् । कालिकायै वलिं दत्त्वा भूतनाथाय दापयेत् ॥
हूमन्ते भूतनाथान्ते श्मशानाधिप इत्यपि । प्रणवाद्येन मनुना दापयेद्वलिमुत्तमम् ॥
कूर्चं सर्वगणनाथाधिपतये ततो वदेत् । श्मशानमस्तके चैव वलिं पूर्ववदाहरेत् ॥
ताराद्येन वलिं दत्त्वा पञ्चगव्येन चैव हि । अस्थिसंप्रोक्षणं कृत्वा तत्र पीठे मनुं न्यसेत् ॥
भूर्जे वा वटपत्रे वा लिखित्वा चक्रमुत्तमम् । लिखित्वा स्वीयमन्त्रञ्च स्थापयेदासनोपरि ॥
पीठमास्तीर्य तस्मिन् वै वद्धपद्मासनः सुधीः । कूर्चवीजद्वयं पश्चात् मायायुग्मं समुद्धरेत् ॥
कालिके वज्रदंष्ट्रे च प्रचण्डे चण्डनायिके । दानवान् दारयेत्युक्त्वा हनेति द्वितयं ततः ॥
शवशरीरे महाविघ्नं छेदय द्वितयं ततः । स्वाहान्ते वर्म चाऽस्त्रान्तो वीरार्दनमनुर्मतः ॥

अनेन मन्त्रितं लोष्ट्रं दशदिक्षु विनिःक्षिपेत् । तन्मध्ये भैरवो देवो न विघ्नैः परिभूयते ॥
यदि प्रमादवशेनैव साधको भयविह्वलः । अर्केन्दुसितवाट्यालमूलैर्निर्मितवर्त्तिकाम् ॥ ३०
प्रदीपं गर्त्ते संस्थाप्य अस्त्रमन्त्रेण साधकः । अस्त्रं प्रपूजयेत्तत्र दीपं संरक्षयेत्ततः ॥
हृते तस्मिन् महादोषे विघ्नैश्च परिभूयते । स्वस्वकल्पोक्तविधिना भूतशुद्ध्यादिकञ्चरेत् ॥
षोढां वा तारकं वापि विन्यस्य पूजयेत्ततः । नानाविद्याप्रभेदेन षोढ़ा च बहुधा भवेत् ॥
तारकः सर्वशास्त्रेषु कथ्यते तन्त्रवर्त्मना । विन्यसेन्मातृकास्थाने मातृकां तारसंपुटाम् ॥
मातृकापुटितं तारं तारकः परिकीर्त्तितः । विधिवत् पूजयित्वा च निजदेवीं सुसाधकः ॥ ३५
मन्त्रध्यानपरो भूत्वा जपेन्मन्त्रमनन्यधीः । एकाक्षरं यदि भवेद्दिक्सहस्रं ततो जपेत् ॥
द्व्यक्षरे चाऽष्टसाहस्रं त्र्यक्षरे त्वयुतार्धकम् । अतः परन्तु मन्त्रज्ञो गजान्तक सहस्रकम् ॥
निशायाम्वा समारभ्य उदयान्तं समाचरेत् । जपादौ तु वलिं दद्यात् पश्चादपि वलिं हरेत् ॥
जपान्ते जपमध्ये वा देहि देहीति भाषिते । तदापि च वलिं दद्यात् महिषं छागमेव वा ॥
वलिदानविधानं हि वक्ष्येऽहं सिद्धिहेतवे । तरुणं सुन्दरं कृष्णं क्षतादिदोषवर्जितम् ॥ ४०
स्वयं पूर्वमुखो भूत्वा वलिमुत्तरवक्त्रकम् । समानीय स्ववामे च प्रोक्षयेत्तदनन्तरम् ॥
अर्घोदकेन वीरेन्द्रस्ताराद्यमनुनाऽमुना । नर्मदा यमुना गङ्गा करतोया सरस्वती ॥
कावेरी चन्द्रभागा च सिन्धुभैरवसागराः । अजस्नाने महेशानि सान्निध्यमिह कल्पय ॥
ओँ पशुपाशविनाशाय हेमकूटस्थिताय च । परापराय परमेष्ठिने हुङ्काराय च मूर्त्तये ॥
संप्रोक्षणं विधायाऽथ वलिं सम्पूजयेत्ततः । ब्रह्मरन्ध्रे च ब्रह्माणं मस्तके मेदिनीन्तथा ॥ ४५
कर्णयोश्च तथाऽऽकाशं ग्रीवायां सर्वतोमुखम् । ज्योतींषि नेत्रयोर्विष्णुं वदने परिपूज्य च ॥
ललाटे पूजयेच्चन्द्रं शक्रं दक्षिणगण्डतः । वामगण्डे तथा वह्निं ग्रीवायां समवर्त्तिनम् ॥
केशाग्रे नैर्ऋतिं मध्ये भ्रुवोश्चापि प्रचेतसम् । नासामूले च श्वसनं स्कन्धे चैव धनेश्वरम् ॥
हृदये सर्पराजेन्द्रं पूजयित्वा पठेदिमम् । इतोऽन्यथा पापयुतं मलमूत्रवसायुतम् ॥
तं वलिं नहि गृह्णाति देवता च कदाचन । अन्येषां महिषादीनां वलीनामथ पूजनात् ॥ ५०
कारोमेध्यत्वमायाति रक्तं गृह्णाति वै शिवा । भूषयेद्रक्तमाल्येन सिन्दूरेण विशेषतः ॥
तं निरीक्ष्य पठेद्वीरो निजदेवस्वरूपकम् । छाग त्वं वलरूपेण मम भाग्यादुपस्थितः ॥
प्रणमामि ततः सर्वरूपिणं वलिरूपिणम् । चण्डिकाप्रीतिदानेन दातुरापद्विनाशिने ॥
चामुण्डावलिरूपाय वले तुभ्यं नमोऽस्तु ते । यज्ञार्थे वलयः सृष्टाः स्वयमेव स्वयम्भुवा ॥
अतस्त्वां घातयाम्यद्य तस्माद्यज्ञे वधोऽवधः । ततो वाग्भवो माया च कमला तदनन्तरम् ॥ ५५
इत्युच्चार्य वलेर्मूर्ध्नि पुष्पाञ्जलित्रयं क्षिपेत् । शिवबुद्ध्या सुसंचिन्त्य तं पूज्य च ततः परम् ॥
ततः सम्पूजयेत् खड्गं गृहीत्वा तं पठेद्बुधः । कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम् ॥
उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् । रक्ताम्वरधरं चैव पाशहस्तं कुटुम्बिनम् ॥

पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम्। इति ध्यात्वा सुसंपूज्य नमस्कुर्यात् प्रयत्नतः॥
आशीविषसमः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते॥ ६०
पुटाञ्जलिं विधायाथ पठेदमुं मनुं बुधः। रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः॥
मायायुग्मं ततः प्रोच्य कालि कालि ततो वदेत्। वज्रेश्वरि पदस्यान्ते लौहदण्डश्च ङेयुतः॥
हृदयञ्च पठित्वा च अं खड्गाय नमो यजेत्। त्रिपं मायायुगं कालियुग्मं विकटशब्दतः॥
दंष्ट्रे च स्फेंद्वयं पश्चात् फेत्कारिणि च खादय। द्वयं छेदययुग्मञ्च सर्वदुष्टांश्च मारय॥
द्वयमजञ्च खड्गेन छिन्धिद्वयं किलिद्वयम्। चिकिद्वन्द्वं पिबद्वन्द्वं रुधिरं स्फ्रों (स्फों) युगन्ततः॥ ६५
किलिद्वयं कालियुग्मं हृन्मनुं तदनन्तरम्। अनेन मन्त्रितं खड्गमुत्तोल्य साधकोत्तमः॥
छेत्ता पूर्वमुखो भूत्वा वलिमुत्तरवक्त्रकम्। आं ह्रूं फड़िति मन्त्रेण छेदयित्वा ततः परम्॥
रुधिरं जलसैन्धवशर्करामधुसंयुतम्। गन्धपुष्पान्वितं कृत्वा उत्सृजेन्मन्त्रमुच्चरन्॥
प्रणवं वाग्भवं मायां लक्ष्मीं कौशिकिशब्दतः। रुधिरेण ततः पश्चादाप्यायतां ततः परम्॥
निवेद्य रुधिरं वीरः शिरो दद्यात् सदीपकम्। न दिक्षु वीक्षणं कुर्यात् नच वन्धुसमागमम्॥ ७०
जलादिदुर्गसर्पाणां गजानां दंष्ट्रिणान्तथा। पक्षिकीटपिशाचानां यद्वा मनसि संस्थितम्॥
तत्सर्वं स्वप्नवद्ध्यात्वा भयं सर्वत्र वर्जयेत्। साधनञ्च समाप्याथ दक्षिणां गुरवे ददेत्॥
पूजाद्रव्यं जले चैव गर्त्ते वा निःक्षिपेत्ततः। सम्यक् सिद्धैकमन्त्रस्य नाऽसाध्यं विद्यते क्वचित्॥
बहुमन्त्रवतः पुंसः का कथा शिव एव सः। स्वकुलान्ते पुरश्चर्या रात्रौ कार्या न चान्यथा॥
सर्वसिद्धिप्रदं साक्षात् सर्वदेवनमस्कृतम्। सर्वपापहरं चैव सर्वरोगविनाशनम्॥ ७५
नान्यत् सिद्धिप्रदं चैव वीरसाधनवर्जितम्। महाबलो महाबुद्धिर्महासाहसिकः शुचिः॥
महास्वच्छो दयावांश्च सर्वभूतहिते रतः। तेषां कृते प्रवक्ष्यामि वीरसाधनमुत्तमम्॥
नास्मात् परतरं किञ्चित् सत्वरं सिद्धिदायकम्। सर्वसिद्धिर्भवत्येव अहोरात्रे कलौ युगे॥
द्वापरे तच्च मासेन त्रेतायां हायनेन तु। कृते तु दशभिर्वर्षैः सत्यं सिद्धिर्न संशयः॥
कटीबन्धेन वस्त्रञ्च मूलेन परिधापयेत्। तद्वाह्ये च पुनर्वस्त्रं मूलेन चन्दनादिकम्॥ ८०
कृतोष्णीशश्च मूलेन सिन्दूरेणाऽर्धपुण्ड्रकम्। इष्टदेवं गुरुं नत्वा रात्रौ प्रहरमध्यतः॥
कार्या च साधकैः सार्धं कुलमन्त्रं परामृशन्। अक्षुब्धो भुक्तभोज्यस्तु यदि स्याद्वीरसाधकः॥
दिव्यो वलिः पशुस्तत्र भुक्त्वा साधनमाचरेत्। पूर्वोक्तदिवसे वीरो नानोपचारसंयुतः॥
मत्स्यमांसयुतं भक्तं गुड़ं छागञ्च पिष्टकम्। पायसान्नं सुरां चैव माषभक्तवलिन्तथा॥
तिलं कुशं सर्षपञ्च दीपं चैव सुधूपकम्। एलालवङ्गकर्पूरजातिखदिरमार्द्रकम्॥ ८५
ताम्बूलं पट्टसूत्रञ्च पलाजिनञ्च कम्बलम्। चषकं यज्ञकाष्ठञ्च स्वप्रादेशप्रमाणकम्॥
पञ्चगव्यं स्वकल्पोक्तं पूजाद्रव्यं प्रगृह्य च। यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोमृतम्॥
वज्रविद्धं सर्पदष्टं चाण्डालं वाऽतिभूतकम्। तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम्॥

पलायनविशून्यञ्च सम्मुखे रणवर्त्तिनम् । न स्वयं घातयेद्विद्वान् मन्त्राणि तत्र वर्जयेत् ॥
स्वेच्छामृतं द्विवर्षं च वृद्धं स्त्रियं द्विजन्तथा । अनातुरमृतं कुष्ठि सप्तरात्रोष्ठ्रंगन्तथा ॥
अङ्गहीनञ्च संत्यज्य पूर्वोक्तान्यतमं परम् । गृहीत्वा मूलमन्त्रेण पूजास्थाने समानयेत् ॥
शून्यागारे नदीतीरे पर्वते निर्जने तथा । विल्वमूले श्मशाने वा तत्समीपे वनस्थले ॥
दीपस्थानं समाश्रित्य भूमौ वीरार्दनं लिखेत् । वीरार्दनाङ्किते भूमौ माया मोहो न विद्यते ॥
गुरुपूजादिकं सर्वं पूर्वोक्तमतमाचरेत् । ये चात्रेत्यादिगन्त्रेण भूमौ पुष्पाञ्जलिं क्षिपेत् ॥
अघोरास्त्रेण रक्षां वै सुदर्शनेन वा पुनः । मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं पुनः ॥
घोरघोरतरेऽत्यन्ते तत्त्वरूपेपदन्ततः । चटयुग्मं तदन्ते च प्रचटद्वितयं पुनः ॥
कहद्वयं वमद्वन्द्वं ततो बहयुगन्ततः । घातयद्वितयं वर्मफडन्तोऽघोरको मनुः ॥
हालाहलं समुद्धृत्य सहस्रारस्वरूपकम् । वर्मास्त्रान्तो महामन्त्रः सुदर्शनस्य कीर्त्तितः ॥
प्रणवाद्यास्त्रमन्त्रेण प्रोक्षितं पूजयेत्ततः । प्रणवं कूर्चवीजन्तु मृतकाय नमश्च फट् ॥
पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् स्पर्शपूर्वकम् । अतीव परमानन्द शिवानन्द कुलेश्वर ॥
आनन्दभैरवाकार देवीपर्यङ्क शङ्कर । वीरोऽहं त्वां प्रपद्यामि सन्तिष्ठ देविकार्चने ॥
प्रणम्यानेन मनुना क्षालयेत्तदनन्तरम् । प्रणवं शब्दवीजञ्च मृतकाय नमस्ततः ॥
इत्युच्चार्य गन्यतोयैः प्रक्षाल्य शवमुत्तमम् । रक्तयुक्तो यदि भवेत् भक्षयेत् कुलसाधकम् ॥
सुधूपैर्धूपयेत्तञ्च लेपयेद्गन्धचन्दनैः । उपचारं स्वदक्षे तु स्थापयित्वा सुसाधकः ॥
अधिकारिविशेषेण सुरया तत्र पूजयेत् । गृहीत्वा तत्र दातव्यं सर्वं नैव च संस्पृशेत् ॥
रक्षां दिक्षु प्रकल्प्याथ वीरार्दनमनुं स्मरन् । मृद्वासने ततो वीरो वीरासन परिग्रहः ॥
भूतशुद्ध्यादिकं कृत्वा न्यासजालं प्रविन्यसेत् । आत्मरक्षां विधायाथ अघोरेण समाहितः ॥
ओं दुर्गे दुर्गे रक्षणीति वह्निजाया ततः परम् । अनेन मनुना वीरः सर्षपान् दिक्षु निःक्षिपेत् ॥
ओं तिलोऽसि सोमदैवत्यो सर्वेषां तृप्तिकारकः । पितृणां स्वर्गदाता त्वं मर्त्यानां मम रक्षकः ॥
भूतप्रेतपिशाचानां विघ्नेषु शान्तिकारकः । इति क्षिप्त्वा तिलांस्तत्र चतुर्भागं शवादितः ॥
इति संरक्षणं कृत्वा शवमात्मपुरो नयेत् । कुशशय्यां परिस्तीर्य तत्र संस्थापयेच्छवम् ॥
पलादिसहितं वीरस्ताम्बूलं तस्य वक्त्रके । निःक्षिप्य च ततः कुर्याच्छवं पश्चादधोमुखम् ॥
स्थापयित्वा च तत्पृष्ठं चन्दनेन विलेपयेत् । वाहुमूलादिकट्यन्तं चतुरस्रं विभाव्य च ॥
मध्ये पद्मं चतुर्द्वारं दलाष्टकसमन्वितम् । तत्र चैलेयमजिनं कम्बलान्तरितं न्यसेत् ॥
श्मशानाधिपतीनाञ्च बलिं दद्याच्च पूर्ववत् । निःक्षिपेद्दश काष्ठानि पूर्वादिदशदिक्षु च ॥
क्षिप्त्वा सम्पूजयेत्तत्र इन्द्रादिदशदेवताः । विषमिन्द्रपदं लिख्य सुराधिपतये ततः ॥
इमं बलिं गृह्णयुग्मं गृह्णापययुगं ततः । विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छ ठद्वयम् ॥
अनेन मनुना पूर्वे बलिं दद्याच्च सामिषम् । स्वस्वनामादिकं कृत्वा पूर्ववद्बलिमुद्धरेत् ॥

शवाधिष्ठातृभूतेभ्यो बलिञ्च सुरया सह। चतुःषष्टियोगिनीभ्यो डाकिनीभ्योऽपि सन्दिशेत्॥
द्वारदेशे ततो वीरः कुर्यादुत्तरसाधकम्। समानगुणसम्पन्नं मान्त्रिकं विजितेन्द्रियम्॥ १२०
अभिषेकविधिज्ञं च दैववीरविशारदम्। संस्थाप्यासनमभ्यर्प्य स्वमन्त्रान्ते परान्ततः॥
फड़ित्यनेन मन्त्रेण ततश्चाऽऽवाहनं विशेत्। कुशान् पादतले दत्त्वा शवकेशान् प्रगृह्य च॥
दृढं निबध्य जुटिकां कृतसङ्कल्पसाधकः। तत्र देवीं सुसम्पूज्य उपचारैः सुविस्तरैः॥
उत्थाय सम्मुखे स्थित्वा पठेद्भक्तिपरायणः। ओं वशो मे भव देवेश मम वीरपदन्ततः॥
सिद्धिं देहि महाभाग कृताश्रयपरायण। अनेन मनुना मन्त्री अभिलप्य कृताञ्जलिः॥ १२५
ओं भीम भीरुभयाभाव भव्यलोचन भावुक। त्राहि मां देवदेवेश शवानामधिपाधिप॥
इति पादतले तस्य त्रिकोणं चक्रमुद्धरेत्। तदोत्थातुं न शक्नोति शवस्तु निश्चलो भवेत्॥
अथवा मूलमन्त्रञ्च संस्मरन् साधकोत्तमः। पट्टसूत्रेण बध्नीयात् शवपादद्वयं ततः॥
उपविश्य पुनस्तस्य बाहू निःसार्य पार्श्वयोः। हस्तयोः कुशमास्तीर्य पादौ तत्र निधापयेत्॥
ओष्ठौ तु सम्पुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः। सदा देवीं हृदि ध्यात्वा मौनी जपनमाचरेत्॥ १३०
ततोऽर्धरात्रिपर्यन्तं यदि किञ्चिन्न लभ्यते। जयदुर्गामनुनाऽर्घ्यं तेनैव सर्षपान् क्षिपेत्॥
पूर्ववत्तिलमुत्क्षिप्य गत्वा सप्तपदानथ। देवीं तत्रापि संपूज्य प्रजपेन्मनुमुत्तमम्॥
निर्भयः प्रजपेद्देवि सिद्धिं वा लभते नरः। पूर्वोक्तक्रमयोगेन अक्षमालां विधानतः॥
चलासनाद्भयं नास्ति भये जाते वदेत्ततः। यत्प्रार्थयसि देवेशि दातव्यं कुञ्जरादिकम्॥
दिनान्तरे च दास्यामि स्वनाम कथयस्व मे। इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत्॥ १३५
पुनश्चेन्मधुरं वक्ति वक्तव्यं मधुरन्ततः। ततः सत्यं कारयित्वा वरन्तु प्रार्थयेन्नरः॥
यदि सत्यं न करोति वरं तु न प्रयच्छति। तदा पुनर्जपेद्धीमान् एकाग्रमानसं यथा॥
नररूपं विना तत्र देवोऽपि न हि सर्पति। यत्नतस्तेन योद्धव्यं नरो या देवयोनिजः॥
माता मातृस्वसा वापि मातुलानी तथैव च। आगत्य विघ्नं कुरुते माययाऽऽच्छाद्य विग्रहम्॥
उत्तिष्ठ वत्स ते कार्यं सर्वं जातं न संशयः। प्रभातसमयो जातस्त्वत्पिता क्रोशते गृहे॥ १४०
प्रायो विमत्सरा लोका राजानो दण्डधारिणः। कदाचित्केन वा दृष्टस्तदाऽनिष्टं भविष्यति॥
इत्यादिविविधैर्वाक्यैर्न च जापं परित्यजेत्। मृताः पितृगणास्तत्र दूरदेशनिवासिनः॥
बान्धवास्तत्र चायान्ति देवरूपधरास्ततः। स्त्रीपुत्रसेवकादींश्च गृहीत्वा नीयते परैः॥
रुदन्ति पुत्रकाः सर्वे भ्रातरोऽनुजसेवकाः। निजकान्ताङ्गसंस्पर्शवस्त्राद्याभरणादिकम्॥
गृहीत्वा नीयते पत्तिपालकैस्तद्भयं त्यजेत्। दिवसे यत्र वा शङ्का सैव तत्र प्रजायते॥ १४५
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते। स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान्॥
वरं गृह्णेति लब्धे वै त्रिरात्रन्ते वरं लभेत्। साधुनाऽसाधुना वापि योषिच्चेद्वरदायिनी॥
तदा वीरपतेस्तस्य किं न सिध्यति भूतले। निष्पापपुरुषे चैव सत्कुलीनैश्च संस्कृता

असंस्कृतवरा देवी पापयुक्ते न संशयः । सम्मुखेऽसम्मुखे वापि संस्कृतं वक्ति चापरम् ॥
सैव देवी न सन्देहः स देवो भैरवः स्वयम् । नचेदेवं भवेच्चैव मायारचितविग्रहः ॥ १५०
न वरयेद्वरं तत्र न किञ्चित् प्रवदेत् क्वचित् । सा चेत् संस्कृतमाख्यानं वक्ति वा व्यक्तमीदृशम् ॥
नो चेत् स्वयं कौलिकोक्त्या वरं ग्राह्यं निराकुलम् । अथवा उत्कटं किञ्चित् ज्योतिर्वा नीललोहितम् ॥
शब्दो वा जायते सम्यगमृतं वापि लभ्यते । विचार्य तद्गृहीतव्यमेवं दिक् परिकीर्तितम् ॥
देवकृत्यास्तु बहुधा नरास्त्वकृतबुद्धयः । अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्वचित् ॥
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः । एतच्छास्त्रप्रसङ्गेन कृत्वा कुटिलविग्रहाः ॥ १५५
पुत्रो भूत्वा हरेद्विद्यां नारी भूत्वा विमोहयेत् । तस्मात्तत्तु भवन्नो वा विचारे यत्नमाचरेत् ॥
सत्ये कृते वरं लब्ध्वा सन्त्यजेच्च जपादिकम् । फलं जातमिति ज्ञात्वा जुटिकां मोचयेत्ततः ॥
अथ तैर्याचितानश्वनरकुञ्जरशूकरान् । दत्त्वा पिष्टमयानन्ते कर्त्तव्यं समुपोषणम् ॥
परेऽहि नित्यमाचर्य पञ्चगव्यं पिबेत्ततः । ब्राह्मणान् भोजयेत्तत्र पञ्चविंशति संख्यकान् ॥
पञ्च पञ्च विहीनान् वा क्रमाच्चैव दशावधि । ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमे स्थले ॥ १६०
यदि न स्याद्द्विजभोज्यं तदा निर्धनतां व्रजेत् । तेन चेन्निर्धनत्वं स्यात्तदा देवः प्रकुप्यति ॥
तिरात्रं पड्रात्रमथवा नवरात्रञ्च गोपयेत् । शय्यायां यदि गच्छेद्वै तदा व्याधिं विनिर्दिशेत् ॥
गीतं श्रुत्वा च बधिरो निश्चक्षुर्नृत्यदर्शनात् । यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत् ॥
पञ्चदशदिनान्तं हि देहे देवस्य संस्थितिः । गोब्राह्मणानां निन्दाञ्च न कुर्याच्च कदाचन ॥
देवगोब्राह्मणादींश्च प्रत्यहं संस्पृशेच्छुचिः । प्रातर्नित्यक्रियान्ते तु बिल्वपत्रोदकं पिबेत् ॥ १६५
ततः स्नात्वा च गङ्गायां प्राप्तषोडशवासरे । ततः शतत्रयादूर्ध्वं देवानां तर्पणं जलैः ॥
स्नानतर्पणशून्यस्य न स्याद्देवस्य तर्पणम् । इत्यनेन विधानेन सिद्धिं प्राप्नोति साधकः ॥
इह भुक्त्वा वरान् भोगानन्ते याति हरेः पदम् । असाङ्गं साङ्गमेवा ग निष्फलं सफलञ्च वा ॥
कृत्वा साधनमेवैतत् शक्तेः प्रियतरो भवेत् । शवाभावे श्मशाने वा कार्या वै वीरसाधना ॥
नृणां शीघ्रफलावाप्त्यै प्रकारान्तरमुच्यते । चतुष्पथे चतुर्दिक्षु पुरुषं हृदयं खनेत् ॥ १७०
जोचितं ब्रह्मरन्ध्रे वै दीपं प्रज्वालयेत् सुधीः । मध्ये तथा खनेदेकं तत्र मृद्वासनं भवेत् ॥
पूर्वोक्तक्रममार्गेण तत्र संस्कारमाचरेत् । महाकालादिदेवेभ्यो बलिं पूर्ववदाहरेत् ॥
कल्पोक्तपूजां सम्पूज्य जपेत् प्रयतमानसः । दिग्वासाश्च जपेन्मन्त्रमयुतं सर्वदैवतम् ॥
जपान्ते च बलिं दत्त्वा दक्षिणां विभवावधि । सर्वसिद्धिर्भवेद्विद्वान् सर्वदेवनमस्कृतः ॥
पूर्ववद्वीरवेशेन यात्रां कृत्वा सुसाधकः । साधकैः सह सामग्रीं पूजायां विविधान्तथा ॥ १७५
स्थाने पूर्वोदिते वीरः शवं चैव समानयेत् । वर्मास्त्रमनुना हस्तप्रमाणं चतुरस्रकम् ॥
लिखित्वा मण्डलं तत्र तेनैव स्थापयेच्छवम् । ततो नाथयुगन्ताहि युगलं तदनन्तरम् ॥
मम कार्यं कुरु स्वाहा अस्त्राय फट् ततः परम् । इत्यात्मानं शवं चैव वेष्टयित्वा च साधकः ॥

रेखात्रयं प्रकुर्वीत वलिं पश्चान्निवेदयेत् । डाकिनीहाकिनीभ्यश्च शाकिनीभ्योऽपि सन्दिशेत् ॥
समांसमधुसंयुक्तं पूर्वपश्चिमयोगतः । वामदेवाय दत्त्वा वै रक्तदन्ताय दापयेत् ॥ १८०
तेजसे च वलित्रयं घृतमिश्रं सशर्करम् । दक्षिणे रुद्रकालाय वज्रनाभाय सन्दिशेत् ॥
सपिष्टकं घृतान्नञ्च यवपिष्टञ्च दापयेत् । उत्तरस्याञ्च वह्नये दत्त्वा च वलिरूपिणे ॥
गुड़ौदनं पायसञ्च वलिं निवेद्य साधकः । ततः सम्पूजयेद्देवीं स्वकल्पोक्तविधानतः ॥
अस्त्रमन्त्रेण संस्थाप्य शवं तैलहरिद्रया । उद्वर्त्तनं ततः कृत्वा स्नापयित्वा तु साधकः ॥
सम्मार्ज्य वाससा तत्र महाप्रेतासनं यजेत् । जीवन्यासं विधायाथ पाद्यादिभिः प्रपूजयेत् ॥ १८५
मूलेन जुटिकां वद्ध्वा पद्मं पूर्ववदालिखेत् । आसनं पूर्ववत् क्षिप्त्वा मूलमुच्चार्य साधकः ॥
अश्वारोहणरूपेण स्थित्वा मन्त्रं जपेत् सुधीः । अनन्यमानसो भूत्वा जपात् सिद्धिः प्रजायते ॥
भीतश्चेत् साधकस्तत्र गुरुपादयुगं स्मरेत् । गुरुपादप्रसादेन मा हिंसन्ति च हिंसकाः ॥
इति चित्तं स्थिरीकृत्य जपेन्मन्त्रमनन्यधीः । देवता यदि वामे वै आगच्छति कदाचन ॥
सम्भाषणा च कार्या वै न दातव्यं प्रियं वचः । हुङ्कारेणैव तां कुर्यात् स्वदक्षे साधकोत्तमः ॥ १९०
गत्वा च दक्षिणे सापि देहि देहीति भाषिते । तथापि च वलिं दत्त्वा अशक्तौ मनसाऽथवा ॥
लब्ध्वाभीष्टं निजं वीरो गुरवे दक्षिणां ददेत् । शवादिकं जले क्षिप्त्वा गृहं गच्छेत् यथा सुखम् ॥
वटमूले शवं नीत्वा तत्र देवीं प्रपूज्य च । स्नात्वा तत्र मनुं जप्त्वा अयुतं साधकोत्तमः ॥
सर्वसिद्धीश्वरो वीरो भवेन्नात्र विकल्पनम् । विल्वमूले निजक्रोड़े शवमारोप्य यत्नतः ॥
नृसिंहमुद्रया वीक्ष्य जपेन्मातृकया सुधीः । सहस्रं तत्र जप्त्वा वै सर्वसिद्धीश्वरो भवेत् ॥ १९५
जानुमध्ये करौ कृत्वा चिबूकौष्ठौ समावृतौ । हस्तौ च भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥
मुखं विवृतकं कुर्यात् लेलिहानश्च जिह्वया । नारसिंही भवेन्मुद्रा सर्वसिद्धिप्रदायिका ॥
सहस्रं तत्र जप्त्वा वै सर्वसिद्धीश्वरो भवेत् । कुङ्कुमागुरुकस्तूरीरोचनाघनचन्दनम् ॥
कर्पूरं पद्मकाष्ठञ्च केशरं हरिचन्दनम् । एकत्र साधितं कृत्वा प्रत्येकं साधयेन्नरः ॥
विद्युदग्नियुतं चैव नेत्रान्तं चन्द्रविन्दुयुक् । वीजं प्रत्येकं द्रव्याणां मिलितानाञ्च साधकः ॥ २००
मूलमन्त्रं च मन्त्रज्ञो जपेत् साष्टसहस्रकम् । अस्य तिलकमात्रेण राजानं वशमानयेत् ॥
जिह्वाग्रे रुधिरं वीर आकाशे स्वयमाहरेत् । तेनैव गुटिकां कृत्वा तत्र कालीं प्रपूजयेत् ॥
नीलां नीलपताकाञ्च लोलजिह्वां कपालिनीम् । जिह्वाग्रे रुधिरं गृह्ण चामुण्डे घोरनिःस्वने ॥
वलिं गृह्ण वरं देहि रुधिरं गगनेऽमले । कालि कालि प्रचण्डोग्रे ततोऽस्त्रं कवचन्ततः ॥
कालिकेति समाख्याता वीराणां हितकाम्यया । कूर्चयुग्मन्तु नीलायाः कथितं मन्त्रमुत्तमम् ॥ २०५
वियद्भृगुरमां चैव वलमिन्द्ररवी रतिः । चन्द्रखण्डसमायुक्तं ततो नीलपदन्ततः ॥
पताके हुं फड़न्तः स्यात् पूर्वकूटमनुर्मतः । सन्तत्तेयं महाविद्या कथिता सुरदुर्लभा ॥
जय श्रीधरणी देवी पताके वरणस्थले । तेन नीलपताकेयं संयोज्या नीलसाधने ॥

श्रीशक्तिसरबीजानि तदन्ते हूमिति स्मरेत् । भृगुं सर्गान्वितं पश्चाद्दीर्घं कवचमुद्धरेत् ॥
उग्रचण्डे पदं पश्चान्मामन्ते रक्षयुग्मकम् । मम शत्रुपदस्यान्ते ततो भक्षपदं वदेत् ॥
ह्रीं क्लीं सः इत्यन्ते श्रीशक्तिसरबीजानि तदन्ते । राज्यं मे देहि सम्भाष्य भृगुं सर्गान्वितं वदेत् ॥
क्लीङ्कारञ्च ततो ब्रूयात् कामं मायां रमान्ततः । एकचत्वारिंशदर्णो मनुः प्रोक्तो भृग्वादिकः ॥
उग्रचण्डा महाविद्या लोलजिह्वेति कीर्त्तिता । या सा विद्या महातारा सा करालेति कीर्त्तिता ॥
प्रणवं पूर्वमुद्धृत्य तारे तु तारे च तथा । नमः स्वाहेति मन्त्रोऽयं दशाक्षर उदीरितः ॥
कथिता च महातारा सर्वसिद्धिप्रदायिका । एभिरामन्त्रितं चैव मूलेनैव सहस्रकम् ॥
ललाटे तिलकं कृत्वा साधको वीतभीः स्वयम् । महाष्टमीनवम्योस्तु संयोगे पुरतः स्थितः ॥
छागमहिषमेषाणां चतुर्दिक्षु शवान् क्षिपेत् । कवन्धं मुण्डपुञ्जञ्च दीपादिभिरलङ्कृतम् ॥
मध्ये कवन्धमास्तीर्य तत्र गन्धर्वरूपधृक् । ताम्बूलपूरवक्त्रञ्च अञ्जनाञ्चितलोचनम् ॥
कृत्वा तारं मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् । अथ पूर्वोदिते स्थाने चतुष्पथे विशेषतः ॥
ऊर्ध्वं द्विवर्षाद्यदि वा पञ्च वा तरुणं यदि । सप्तमाष्टममासीयं गर्भजं यदि वा शवम् ॥
चाण्डालञ्चाभिभूतन्तु शीघ्रसिद्धिफलप्रदम् । आनीय स्थापयेदादौ न्यासजालं समाचरेत् ॥
प्रेतमन्त्रं समालिख्य गन्धपुष्पादिभिस्तथा । अभ्यर्च्य चाऽऽसनं दत्त्वा रक्षामात्मनि कारयेत् ॥
ततः शवास्ये विधिवद्देवताप्यायनं ततः । ततो जप्त्वा सर्वमन्त्रं सर्वसिद्धीश्वरो भवेत् ॥
तारं शब्दं मृतकाय नमोऽन्तं मन्त्रमुच्चरन् । शवस्थापनमन्त्रोऽयं शवासनमनुं ततः ॥
मूलान्ते भुवनेशी स्यात् फडन्तो मन्त्र ईरितः । करकाञ्चीं समादाय मुण्डमालाविभूषितः ॥
तेनैव तिलकं कृत्वा तत्तद्भस्मविभूषितः । श्मशाने च सकृज्जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥
मत्स्यमानीय वीरेन्द्रो निःक्षिपेत् पितृकानने । तत्र सकृज्जपित्वा तु देवतामेलनं भवेत् ॥
तत्र नत्वा महादेवं महादेवीञ्च साधकः । तद्भस्मतिलकं कृत्वा स्वयं वीरेश्वरो भवेत् ॥
निशायां मृतहट्टे च उन्मत्तानन्दभैरवः । दिग्वासा विमली भस्मभूषणो मुक्तकेशकः ॥
कपाली खड्गहस्तश्च जपेन्मातृकया सुधीः । तदा तस्य महासिद्धिर्जायते शतजापतः ॥
डाकिनीं योगिनीं वापि अन्यां वा भूतलाङ्गनाम् । तत्राऽप्यानीय संपूज्य गजान्तकसहस्रकम् ॥
जप्त्वा च साधकश्रेष्ठः सर्वसिद्धीश्वरो भवेत् । महाशवाः प्रशस्ताः स्युः प्रधानशवसाधने ॥
क्षुद्राः प्रयोगकर्त्तॄणां प्रशस्ताः सर्वसिद्धिदाः । सर्वेषां जीवहीनानां जन्तूनां नीलसाधने ॥
ब्राह्मणं गोमयं त्यक्त्वा साधयेद्वीरसाधनम् । एवं नीलक्रमं चैव कथितञ्च शुभावहम् ॥
न कस्मैचित् प्रवक्तव्यं मन्त्रसिद्धेश्च कारणम् । कुजे वा शनिवारे वा नरमुण्डं समाहितः ॥
पञ्चगव्येन मिलितं चन्दनाद्यैर्विलेपितम् । निःक्षिप्य भूमौ हस्तार्धमानतः काननान्तरे ॥
तत्र तद्दिवसे रात्रौ सहस्रं यदि मानवः । एकाकी प्रजपेन्मन्त्रं स भवेत् कल्पपादपः ॥
शवमानीय तद्द्वारि तत्रैव परिखन्य च । तद्दिनात्तद्दिनं यावत्तावदष्टोत्तरं शतम् ॥

स भवेत् सर्वसिद्धीशा नात्र कार्या विचारणा। अथवा विजनेऽरण्ये अस्थिशय्यासनो नरः॥
उदयास्तं दिवा जप्त्वा सर्वसिद्धीश्वरो भवेत्। अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि॥
सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम्। तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत्॥
ग्रहणे चन्द्रसूर्यस्य शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रस्थितेऽम्भसि॥
यद्वा शुद्धोदके स्नात्वा शुचौ देशे समाहितः। ग्रासाद्विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः॥
अनन्तरं दशांशेन क्रमाद्धोमादिकञ्चरेत्। तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम्॥
ततश्च मन्त्रसिद्ध्यन्तु गुरुं सम्पूज्य तोषयेत्। सूर्यग्रहणकालाद्धि नान्यः कालः प्रशस्यते॥
तत्र यद्यत् कृतं कर्म अनन्तफलदम्भवेत्। शरत्काले चतुर्थ्यादि नवम्यन्तं विशेषतः॥
भक्तितः पूजयित्वा च रात्रौ तावत् सहस्रकम्। जपेदेकाकी विजने केवलं तिमिरालये॥
अष्टम्यादि नवम्यन्तमुपवासपरो भवेत्। स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा॥
अष्टमीसन्धिवेलायामष्टोत्तरलतागृहम्। प्रविश्य मन्त्री विधिवत्ताः समभ्यर्च्य यत्नतः॥
स्वकल्पोक्तविधानेन पूजयित्वा च साधकः। केवलं कामभावेन जपेदष्टोत्तरं शतम्॥
तासाञ्च पत्रमूलेन उल्कां संगृह्य कर्णके। महासिद्धिर्भवेत् सद्यो लतादर्शनपूजनात्॥
कुलाष्टकं लतागारे लिखित्वा यन्त्रमेव च। प्रपूज्य तत्र संस्कारं कृत्वा तस्यै निवेदयेत्॥
किञ्चिज्जप्त्वा मनुं नीत्वा देवताभावनापरः। तां विसृज्य नमस्कृत्य स्वयं जप्त्वा सुसंयतः॥
प्रातः स्त्रीभ्यो बलिं दत्त्वा मन्त्रसिद्धिर्न संशयः। अथवा गुरुमानीय देवभावेन पूजयेत्॥
वस्त्रालङ्कारहेमाद्यैः सन्तोष्य गुरुमेव च। तत्सुतं तत्सुतां चैव पत्नीं चैव विशेषतः॥
पूजयित्वा मनुं जप्त्वा स्वयं सिद्धीश्वरो भवेत्। सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च॥
केवलं देवताबुद्ध्या जप्त्वा सिद्धीश्वरो भवेत्। गुरवे दक्षिणां दद्याद्यथाविभवविस्तरैः॥
गुरोरनुज्ञामात्रेण दुष्टमन्त्रोऽपि सिध्यति। गुरुं विलङ्घ्य शास्त्रेऽस्मिन्नाऽधिकारो सुरोऽपि च॥
एषाञ्च मन्त्रहीनानां प्रयोगः क्रियते यदि। गुरुवक्त्रं विना चैव सिद्धिहानिः प्रजायते॥
पत्तन्त्रञ्च मन्त्रञ्च पुत्रेभ्योऽपि न दर्शयेत्। अन्यथा प्रेतराजस्य भवनं याति निश्चितम्॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये चतुर्दशोल्लासः॥ १५॥

---

## पञ्चदश उल्लासः

अथ वक्ष्ये कुमारीणां पूजां तन्त्रविधानतः। होमादिकं हि विफलं कुमारीपूजनं विना ॥
परिपूर्णफलं नैव जीवहीनं यथा वपुः। यथा यथा देवताया पूजनं वा यथा गुरोः ॥
तथैव हि कुलीनानां कुमार्याः पूजनम्भवेत्। यथाशक्त्या हि वितरेत् कुमार्यै यद्यदीप्सितम् ॥
अशक्यं शक्यमेवं हि दानाभावे फलात्ययः। पुष्पं कुमार्यै यद्दत्तं तन्मेरुसदृशम्मतम् ॥
दत्तमन्यच्च यत्किञ्चिद्भक्ष्यभोज्यादिकन्तथा। अल्पमप्यथवा मन्त्रहीनं बहुगुणं भवेत् ॥
कुमारीपूजनाच्चैव कुमारीभोजनादपि। कुमारीवन्दनादेव कुमारीसदृशो भवेत् ॥
कुमारिका भवेत् देवी शिवोऽपि च कुमारिका। कुमारी योगिनी साक्षात् कुमारी सर्वदेवता ॥
तस्याः पूजनमात्रेण त्रैलोक्यपूजनं भवेत्। सुकुमारी महादेवी त्रिधा मूर्त्तिर्व्यवस्थिता ॥
परा चैवाऽपरा चैव तृतीया च परापरा। यत्र काले न किञ्चित् स्याद्देवासुरमहोरगाः ॥
त्रैलोक्यं लयमानञ्च तदा जाता कुमारिका। आद्यसृष्टेश्च या शक्तिः प्रत्यक्षा सा तु तत्त्रिधा ॥
तिलतिला तु सा जाता सृष्टिरूपा भवार्णवे। भूर्भुवोमूर्त्तिरूपा सा एका पूज्या कुमारिका ॥
एकीकृत्य त्रिभिश्चैव सप्ताष्टनवधा पुनः। नित्यक्रमेण देवेशि पूजयेद्विधिपूर्वकम् ॥
अष्टोत्तरं शतं वापि एकां कन्यां प्रपूजयेत्। पूजिताः प्रतिगृह्णन्ते निर्गच्छन्त्यवमानिताः ॥
असुराश्च तथा नागा ये च दुष्टग्रहा अपि। भुतवेतालगन्धर्वा डाकिनीयक्षराक्षसाः ॥
क्रूराश्च देवताः सर्वे भूर्भुवश्चैव भैरवाः। पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम् ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। ते तुष्टाः सर्वतुष्टाश्च यस्तु कन्यां प्रपूजयेत् ॥
कुमारी पूजनाच्चैव कोटिपूजाफलं लभेत्। घ्नन्ति विघ्नान् पूजितास्तास्तथा शत्रुं महोत्कटम् ॥
व्याधयः सर्वरिष्टानि पलायन्ते न संशयः। ग्रहा यक्षाः क्षयं यान्ति भूतवेतालपन्नगाः ॥
असुरा गुह्यकाः प्रेता योगिनी गुह्यडाकिनी। महाभयानि दुर्भिक्षमुत्पातानि सहस्रशः ॥
दुःस्वप्नमपमृत्युश्च अन्ये ये य समुद्भवाः। कुमारीपूजनादेव न तस्य प्रभवन्ति च ॥
अणिमादीनि सिद्धानि पातालगुटिकाञ्जनाः। चतुष्कं दिव्यवेतालं भवेत् कुमारिकार्चनात् ॥
लक्षणं यजनं तासां वक्ष्येऽहं तन्त्रवर्त्मना। द्वितीयवत्सरादूर्ध्वं यावत् स्यादष्टमाब्दिकम् ॥
तावत् कुमारी विज्ञेया मन्त्रतन्त्रफलप्रदा। अथवा षोड़शाब्दान्तं यावत् पुष्पं न जायते ॥
ताभ्यः पुष्पफलं वापि गन्धचन्दनपयासम्। बालप्रियञ्च नैवेद्यं बालभावविचेष्टितम् ॥
ताभिः प्रियकरालापैस्तोषयेत् साधकोत्तमः। एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती ॥
त्रिवर्षा च त्रिधामूर्तिश्चतुर्वर्षा च कालिका। सुभगा पञ्चवर्षा च षड्वर्षा च उमा भवेत् ॥
सप्तभिर्मालिनी साक्षादष्टवर्षा च कुब्जिका। नवभिः कालसङ्कर्षा दशभिश्चापराजिता ॥
एकादशे तु रुद्राणी द्वादशाब्दा तु भैरवी। त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठनायिका ॥

क्षलङ्घा पञ्चदशभिः षोड़शे वाचिका मता । एवं क्रमेण पूज्या तु यावत् पुष्पं न विद्यते ॥
प्रतिपदादिदर्शान्तं वृद्धिभेदेन पूजयेत् । महापर्वसु सर्वेषु विशेषाश्च पवित्रके ॥ ३०
महानवम्यां वीरेन्द्रः कुमारीः सम्प्रपूजयेत् । पिङ्गलां पूजयेद्यस्तु षोड़शैश्चैव भक्तिमान् ॥
पूजयित्वा भक्तिभावे सर्वसम्पत्तिमालभेत् । पूजयेत् कुलविद्याञ्च चैकां बालकभैरवीम् ॥
एवं प्रणवयोगेन चैतन्यतनुमर्चयेत् । वाणी माया तथा लक्ष्मीर्माया कूर्चद्वयन्ततः ॥
एते च प्रणवा ज्ञेयाः कुमार्याः परिपूजने । एकादशस्वरेणाऽऽढ्यो भृगुर्विन्द्विन्दुसंयुतः ॥
चैतन्यबीजं कथितं साधकानां समृद्धिदम् । एवं द्वाभ्यां त्रिभिश्चैव सप्तधा नवधा पुनः ॥ ३५
नित्यक्रमेण नियतं पूजयेद्विधिपूर्वकम् । वाग्भवेन जलं देयं मायया पादशौचकम् ॥
लक्ष्म्या चार्घं प्रदद्यात्तु कूर्चबीजेन चन्दनम् । शक्तिबीजेन पुष्पाणि धूपं षष्ठेन दापयेत् ॥
वाग्भवेन पुरक्षोभो मायया च गुणाष्टकम् । श्रींबीजेन श्रियो लाभो ह्लींबीजेनाऽरिसंक्षयः ॥
भैरवेण तु बीजेन खड़्गत्वमनुगच्छति । न्यासादिकं प्रकुर्वीत आदौ स्वीयक्रमेण तु ॥
कुमार्यङ्गे ततः पश्चाद्विशेषन्यासमुत्तमम् ॥ ऐं क्लीं श्रीं क्लौं ह्सौः कुलकुमारिके हृदयाय नमः ॥ ४०
ऐं हैं ह्रीं श्रीं क्लां एं स्वाहा शिरसे स्वाहा ॥ ऐं क्लीं सैं शिखायै वषट् ॥
ऐं कुलवागीश्वरवागीश्वरि कवचाय हुं ॥ क्लीं अस्त्राय फट् ॥ ऐं सिद्धि जयाय पूर्ववक्त्राय नमः ॥
ऐं जयाय उत्तरवक्त्राय नमः ॥ ऐं क्लीं श्रीं कुब्जिके पश्चिमवक्त्राय नमः ॥ क्रं कालिके दक्षिण वक्त्राय नमः ॥
वर्णन्यासं षड़ङ्गञ्च कुमार्यङ्गे प्रविन्यसेत् । अष्टोत्तरशतं वापि एकां कन्यां प्रपूजयेत् ॥
पाद्यमर्घ्यं पुनर्धूपं कुङ्कुमं चन्दनादिकम् । भक्तिभावेन संपूज्य तस्यै सर्वं निवेदयेत् ॥ ४५
तरुणोल्लासवान् भूत्वा स्वयमच्युतमानसः । बालामलङ्कृतां पश्यन् चिन्तयेत् स्वेष्टदेवताम् ॥
यथाशक्ति जपेत् पश्चादष्टोत्तरशतादिकम् । प्रदक्षिणत्रयं कुर्यादादिमध्ये शुभं भवेत् ॥
ततस्तां देवताबुद्ध्या नमस्कृत्य विसर्जयेत् । पश्चाच्च दक्षिणा देया रजतस्वर्णमौक्तिकैः ॥
कुमारी पूजनाच्चैव कोटिपूजाफलं लभेत् । कुमारीपूजने चैव जातिमात्रं न चिन्तयेत् ॥
अशेषकुलसम्पन्ना नानाजातिसमुद्भवाः । नानादोषोद्भवा वापि गुणलावण्यसंयुताः ॥ ५०
सर्वथैव कुलीनानां पूज्यास्ताः शुभदायिकाः । यथायथा तत्प्रियकृत् सर्वसिद्धीश्वरो भवेत् ॥
महाभये समुत्पन्ने कन्यकाञ्च प्रपूजयेत् । तत्क्षणाल्लभते मोक्षं सत्यं सत्यं न संशयः ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । ते तुष्टाः सर्वतुष्टाश्च यस्तु कन्यां प्रपूजयेत् ॥
विवाहयेत् स्वयं कन्यां ब्रह्महत्यादि नश्यति । गोहत्यां स्त्रीवधं चैव सर्वपापं प्रणश्यति ॥
मातरः पितरश्चैव भ्रातरश्चैव सर्वतः । येतु येतु पुनः सर्वे कन्यादानं प्रकल्पयेत् ॥ ५५
भुक्तिमुक्तिफलं तेषां सौभाग्यं सर्वसम्पदः । रुद्रलोके वसेन्नित्यं त्रिनेत्रो भगवान् हरिः ॥
षष्टिकोटिसहस्राणां चाश्वमेधफलं लभेत् । कुमारीकल्पमाख्यातं अथवाऽन्यतमञ्चरेत् ॥
सन्ध्यादिनवकन्याञ्च समानीय प्रपूज्य च । पूर्ववद्विधिवद्वीरो नववालकमानयेत् ॥

१३

बटुकं पञ्चवर्षञ्च नववर्षं गणेश्वरम्। गन्धपुष्पाक्षताकल्पैर्यथाविभवविस्तरैः॥
अभ्यर्च्य देवता बुद्ध्या पदार्थैः परितोषयेत्। स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः॥ ६०
नवरात्रं यजेदेकोत्तरवृद्ध्या क्रमेण तु। नवरात्रकृतां पूजां महादेव्यै समर्पयेत्॥
ताम्बूलं दक्षिणां दत्त्वा कुमारीस्तान् विसर्जयेत्। एवं नवकुमारीणामर्चनं प्रतिवत्सरम्॥
यः करोति हि पुण्यात्मा देवताप्रीतिमाप्नुयात्। मनोऽभिलषितं प्राप्य निवसेत्तव सन्निधौ॥
अथवा यौवनारूढाः प्रमदा नव शोभनाः। पूजयेद्विधिवद्भक्त्या नव रात्रिषु मन्त्रवित्॥
हृल्लेखां गगनां रक्तां महोत्सुकां करालिकाम्। इच्छां ज्ञानां क्रियां दुर्गां वटुकञ्च गणेश्वरम्॥ ६५
पूर्ववत् पूजनाद्यैश्च पदार्थैः परितोषयेत्। प्रौढोल्लासेन संयुक्ताः सन्तुष्टा यदि चेत् कदा॥
साधकस्तोर्थमासाद्य निवसेच्छिवसन्निधौ। एवं यः पूजयेद्देवीं प्रतिवर्षं यतिव्रतः॥
षण्मासे वा त्रिमासे वा मासे मासेऽथवा बुधः। तिस्रो वा पञ्च वा सप्त पूजयेद् देवताधिया॥
सर्वैश्वर्यसमृद्धात्मा स भवेच्छिवयोः प्रियः। अथवाऽन्यप्रकारेण कथ्यते मिथुनार्चनम्॥
तुलायां वापि मेषे वा सर्वसंक्रान्तिषु भृशम्। गौरीशिवौ रमाविष्णू वाणीसरसिजासनौ॥ ७०
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी। भद्रकालीवीरभद्रौ भैरवीभैरवावपि॥
समानीय प्रयत्नेन पूजयेत् पूर्ववर्त्मना। त्रितारादिनमोऽन्तेन तत्तन्नाम्ना विधानतः॥
वाग्बीजं शक्तिबीजञ्च श्रीबीजञ्च त्रितारकम्। गन्धपुष्पादिभिः पूज्य तत्त्वाद्यैः परितोषयेत्॥
प्रौढोल्लासेन युक्तानि कुर्वीत मिथुनानि च। एवं कृते न सन्देहस्तुष्टा मिथुनदेवताः॥
अनुगृह्णन्ति तं देवाः प्रयच्छन्ति मनोरथम्। प्रतिवर्षं तु यः कुर्याद्भक्त्या च मिथुनार्चनम्॥ ७५
शिवलोकेषु निवसेत् सर्वैश्वर्यसमन्वितः। भृगुवारे यजेद्यत्नात् कान्तामारूढयौवनाम्॥
सर्वलक्षणसम्पन्नामनुकूलां मनोरमाम्। कुलाकुलाष्टमीं चैव आमन्त्र्याऽऽहूय पुष्पिणीम्॥
अभ्यङ्गस्नानशुद्धाङ्गीं स्वासने चापवेशयेत्। आत्मानं गन्धपुष्पाद्यैरलङ्कुर्यात् सुसाधकः॥
आवाह्य देवतां तस्यां यजेन्न्यासक्रमेण हि। कृत्वा क्रमार्चनं धूपदीपञ्च कुलदीपकम्॥
प्रदर्श्य देवताबुद्ध्या पदार्थैः षड्रसान्वितैः। मांसादिभक्ष्यभोज्याद्यैस्तोषयेद्भक्तिभावतः॥ ८०
प्रौढोल्लासेन सहितां पश्यंश्च प्रजपेन्मनुम्। यौवनोल्लाससहितः स्वयं तद्ध्यानतत्परः॥
निर्विकारेण चित्तेन अष्टोत्तरसहस्रकम्। जपादिकं समाप्याथ तया सह निशां नयेत्॥
त्रिसप्तपञ्चनवसु भृगुवारेषु यः सदा। पूजयेद्विधिना चैव तस्य पुण्यं न गण्यते॥
चतुःपीठार्चनफलं स प्राप्नोति सुनिश्चितम्। अथान्यं संप्रवक्ष्यामि समयाचारमुत्तमम्॥
येन हीना न सिध्यन्ति मन्त्राः कोटिसहस्रशः। मानवः कुलशास्त्राणां कुलचर्यानुसारिणाम्॥ ८५
उदारचित्तः सर्वत्र वैष्णवाचारतत्परः। परनिन्दासहिष्णुः स्यादुपकाररतः सदा॥
पर्वते विपिने चैव निर्जने शून्यमण्डले। चतुष्पथे कलाशून्ये यदि दैवाद्गतिर्भवेत्॥
क्षणं ध्यात्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम्। गृध्रं वीक्ष्य महाकालीं नमस्कुर्यादलक्षितम्॥

क्षेमङ्करीं तथा वीक्ष्य जम्बूकीं यमदूतिकाम् । कुररं द्रोणकाकन्तु कृष्णमार्जारमेव च ।
कृष्णसारं तथा व्याघ्रं खड्गिनं सिंहमेव च । कृशोदरि महाचण्डे मुक्तकेशि वलिप्रिये ॥
कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये । श्मशाने च शिवां दृष्ट्वा प्रदक्षिणमनुव्रजन् ॥
प्रणम्यानेन मनुना मन्त्री सुखमवाप्नुयात् । घोरदंष्ट्रे कठोराक्षि किटिशब्दनिनादिनि ॥
घोरघोररवास्फाले नमस्ते चितिवासिनि । रक्तवस्त्रां रक्तपुष्पां विलोक्य त्रिपुराम्बिकाम् ॥
प्रणम्य दण्डवद्भूमाविमं मन्त्रमुदीरयेत् । बन्धूकपुष्पसङ्काशे त्रिपुरे भयनाशिनि ॥
भाग्योदये समुत्पन्ने नमस्ते वरवर्णिनि । कृष्णवस्त्रं तथा पुष्पं राजानं राजपुत्रकम् ॥
हस्त्यश्वरथशस्त्राणि फलकान् वीरपुरुषान् । महिषं कुलदेवञ्च दृष्ट्वा महिषमर्दिनीम् ॥
प्रणम्य जयदुर्गाम्बा स च विघ्नैर्न लिप्यते । जय देवि जगद्धात्रि त्रिपुराद्ये त्रिदैवते ॥
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते । मद्यभाण्डं समालोक्य मत्स्यं मांसं वरस्त्रियम् ॥
दृष्ट्वा च भैरवीं देवीं प्रणम्य विमृशेन्मनुम् । घोरविघ्नविनाशाय कुलाचारसमृद्धये ॥
नमामि वरदे देवि मुण्डमालाविभूषिते । रक्तधारासमाकीर्णवदने त्वां नमाम्यहम् ॥
सर्वविघ्नहरे देवि नमस्ते हरवल्लभे । एतेषां दर्शने चैव यदि नैवं प्रकुर्वते ॥
शक्तिमन्त्रं पुरस्कृत्य तेषां सिद्धिर्न जायते । एतेषां मारणोच्चाटहिंसनं वा भयादिभिः ॥
क्रियते यदि पापात्मा देवीभक्तः कथम्भवेत् । प्रधानांशसमुद्भूता एते कुलजनाः प्रिये ॥
डाकिन्यश्च तथा सर्वा देव्यंशा योषितो यतः । लब्धसिद्धिसमायोगात् डाकिनीहिंसनं यदि ॥
अथवा मानवानाञ्च मन्त्रकानां विशेषतः । बटुकानां भैरवाणां तस्य सिद्धिर्न जायते ॥
ग्रामे वा नगरे वापि हट्टे वा चत्वरेऽपि च । यं दृष्ट्वा युवती नारी कलाकुशलसंयुता ॥
भावैकभिन्नहृदया वक्रं दृष्ट्वाऽवलोकते । उत्क्षिप्य भुजमूलस्य ासनं क्षिप्यते यदि ॥
चेलाञ्चलपरीवर्त्तदर्शिता जघनाञ्चला । कण्डूयभावव्याजेन । शिलीकृतवाससा ॥
दर्शितस्तनपर्यन्तभूभागा पुनरावृता । स्खलत् पादयुगात् पा; पतिता पुनरुत्थिता ॥
सखीभिर्व्याजमासाद्य कर्णाकर्णि मनोहरम् । इत्यादिभावभा ितां दृष्ट्वा साधकसत्तमः ॥
तस्या निजमनोहारि हविःशेषं विधाय च । तत्र स्थित्वा पुनः क्षोभं कुर्यात् काम इवापरः ॥
वृद्धां वा युवतीं वापि बालां वा सुन्दरीन्तथा । विदग्धां वा महाभ्रष्टां कुत्सितां वापि हीनजाम् ॥
भावैकभिन्नहृदयां ज्ञात्वा वीरवरोत्तमः । सम्भोगेन विनोपेक्षां न कुर्याच्च कदाचन ॥
आलस्येन भयेनापि अशक्त्या वा यदि त्यजेत् । क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम् ॥
मृते च नरकं गत्वा नानाक्लेशयुतो भवेत् । निष्कृतिर्नास्ति तस्यैव यावदाचन्द्रतारकम् ॥
फलं पुष्पञ्च ताम्बूलं अन्नपानादिकञ्च यत् । महादेव्यै विना दत्त्वा न भोक्तव्यं कदाचन ॥
पतिव्रतायां भार्यायां तथैव ऋतुसङ्गमे । नमस्कुर्यात् प्रयत्नेन चण्डिकां साधकोत्तमः ॥
शान्तिकं पौष्टिकं वा ि यथेच्छापूर्त्तकर्मणि । यदा कुर्यात्तदा नत्वा देवीं यात्रां समाचरेत् ॥

तीर्थलिङ्गं यदा पश्येद्देवानां गोतमेव वा । तत्र देव्यै निवेद्यैव कर्त्तव्यञ्च प्रपूजनम् ॥
व्यायामे यदि वा देवसभायां वापि पर्वते । वने वा दुर्गमे वापि यदि गच्छति साधकः ॥ १२०
तत्र स्थित्वा महादेवीं प्रणमेद्भक्तिभावतः । तर्पणादौ प्रकुर्वीत तृप्यतां ब्रह्मभैरव ॥
आवाहने स्वपितॄन् वै भैरवानिति कीर्त्तयेत् । तृप्यतां भैरवी माता पिता भैरव तृप्यताम् ॥
आदौ च त्रिपुरापूर्वां तर्पणे भैरवीं यजेत् । ज्योतिष्टोमाश्वमेधादौ यत्र यं यं प्रपूजयेत् ॥
प्रणम्य शिरसा धीरो भैरवीं चिन्तयेद्धिया । स्त्रियो दृष्ट्वा तथैकत्र युवत्यतिमनोहराः ॥
ताम्यस्त्रिपुरभैरव्याः प्रीतये चन्दनादिकम् । दद्यात्तत्तत्प्रियं द्रव्यं मनसा चिन्त्य चण्डिकाम् ॥ १२५
भैरवी प्रतिगृह्णाति भैरवोऽहंप्रतिग्रहे । कन्याया भाषणे श्रीमत्त्रिपुरायाः प्रपूजनम् ॥
भैरवाय वदाम्यर्घ्यं देवीं त्रिपुरभैरवीम् । एवं वदेत् प्रदाने तु कन्यकायाः प्रपूजने ॥
कथितः समयाचारः साधकस्य सुसिद्धये । अत्राऽशक्तो भवेद्यस्तु तस्यार्थं लिख्यते स्तवः ॥
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी । श्रीर्मालिनी च सिद्धाऽम्बा महात्रिपुरसुन्दरी ॥
प्रकटाश्च तथा गुप्तास्तथा गुप्ततराः पराः । सम्प्रदायाः कुलकौला रहस्यातिरहस्यगाः ॥ १३०
परापररहस्या च तथा कामेश्वरी शुभा । भगमाला नित्यक्लिन्ना भेरुण्डा वह्निवासिनी ॥
महावज्रेश्वरी दूती त्वरिता कुलसुन्दरी । नित्या नीलपताका च विजया सर्वमङ्गला ॥
ज्वालांशुमालिनी चित्रा वशिनी शुभगा तथा । पूर्णाख्या च तथा ज्ञेया कामेशी मोदिनी तथा ॥
विमला चाऽरुणा देवी जयिनी कुलभैरवी । सर्वेश्वरी तथा कौली वागीशी सर्वकामिनी ॥
सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्दिनी । स्वप्नावती शूलिनी च मातङ्गी सुरसुन्दरी ॥ १३५
महाकाली महोग्रा च चित्ररूपा महोदरी । प्राणविद्या तथैकाक्षी चैकपादा महाङ्कुशा ॥
वामा शिवा तथा ज्येष्ठा सुरूपा चारुभाषिणी । त्रिखण्डा त्रिशिरा शौरी गौरी विन्ध्यनिवासिनी ॥
विभुर्जाया मधुमती तथा नीलसरस्वती । काली कुण्डमयी कुण्डरूपिणी वन्धुरूपिणी ॥
वाला पूर्णा महादेवी नीललक्ष्मीति कथ्यते । क्षोभिणी नादिनी भद्रा ललिता बहुरूपिका ॥
सर्वसम्पत्करी तारा भवानी विश्ववासिनी । तोटेश्वरी महाविद्याः कथितास्तव भैरव ॥ १४०
उपासकान् महादेव शृणुष्वैकमनाः स्वयम् । मनुश्चन्द्रः कुवेरश्च मन्मथस्तदनन्तरम् ॥
लोपामुद्रा मुनिर्नन्दी शक्रः सुन्दः शिवस्तथा । क्रोधभट्टारकश्चैव पञ्चमी च प्रकीर्त्तिता ॥
दुर्वासा व्याससूर्यौ च वशिष्ठश्च पराशरः । और्वो वह्निर्यमश्चैव नैर्ऋतो वरुणस्तथा ॥
वायुर्विष्णुः स्वयम्भूश्च भैरवो गणकस्तथा । अनिरुद्धो भरद्वाजो दक्षिणामूर्त्तिरेव च ॥
गणपः कुलपश्चैव वाणी गङ्गा सरस्वती । धात्री शेषः प्रमत्तश्च उन्मत्तः कुलभैरवः ॥ १४५
क्षेत्रपालो हनूमांश्च दक्षो गरुड एव च । प्रह्लादः शुकदेवश्च रामो रावण एव च ॥
काश्यपः कुम्भकर्णश्च यमदग्निर्भृगुस्तथा । वृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः ॥
अर्जुनो भीमसेनश्च द्रोणाचार्यो वृषाकपिः । दुर्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा ॥

सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा । पुष्पदन्तो महाबुद्धो वाणः कालश्च मन्दरः ॥
कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा । नारदो भीष्मकर्णौ च मेरुश्चारुण एव च ॥
जनकश्च तथा कौत्सः कथिता ब्रह्मसाधकाः । महाविद्याप्रसादेन स्वस्वकर्म समन्विताः ॥
एतेषां शुभनामानि नित्याविद्योपसेविनाम् । प्रातः काले शुचिर्भूत्वा यः पठेत् प्रयतात्मना ॥
पूजयेद् वा शुचिर्भूत्वा प्रसीदामि कुलप्रिये । अशुचिर्वा निरालम्बा सालम्बा वा कुलान्तिके ॥
नित्यपूजाफलं तस्य ददामि वरमीप्सितम् । चक्रसंकेतकं चैव गुरुसंकेतकन्तथा ॥
मन्त्रसंकेतकं चैव नामसंकेतकन्तथा । समयाचारसंकेतमकृत्वा योऽत्र वर्त्तते ॥
जपपूजार्चनं होमोऽभिचाराय प्रकल्पते । एवं स्तोत्रं पठित्वा तु सङ्केतमानयेद् ध्रुवम् ॥
अथ वक्ष्यामि शाक्तानां नैमित्तार्चनमुत्तमम् । अथ वैशाखमासस्य शुक्लप्रतिपदीश्वरि ॥
ब्राह्मे मुहूर्त्ते उत्थाय स्नानं सन्ध्यामुपास्य च । मनोज्ञे रहसि स्थाने पूर्वाभिमुखमास्थितः ॥
आत्मानं गन्धपुष्पाद्यैरलङ्कृत्य विधानतः । कृत्वा पुरोदितान् न्यासान् देवताभावमास्थितः ॥
मत्स्यमांसादिविविधवद्भक्ष्यभोज्यसमन्वितम् । अर्घ्यं निवेद्य तच्छेषं शक्त्या सह पिबेत्ततः ॥
यौवनोल्लाससहितो निर्विकल्पेन चेतसा । ध्यायंस्तन्मण्डले देवीमष्टोत्तरसहस्रकम् ॥
जप्त्वा समर्प्य तत्पूजां देवताञ्च समुद्धरेत् । एवं शुक्लप्रतिपदं समारभ्य दिने दिने ॥
कुर्याञ्जपार्चनं कृष्णचतुर्दश्यन्तमम्बिके । अमावस्यादिने धीरः पूजयेद्भक्तकौलिकान् ॥
त्रि सप्त नव पञ्च वा वित्तशाठ्यविवर्जितः । एवं यो मासमात्रन्तु कुर्यात् सूर्योदयार्चनम् ॥
देवता तस्य सन्तुष्टा ददाति फलमीप्सितम् । यत्किञ्चिदुदिते सूर्ये मण्डले स्वेष्टदेवताम् ॥
ध्यात्वा सावरणां सम्यक् प्रजपेत्तु विधानतः । षोड़शैरुपचारैस्तु चक्रपूजापुरःसरम् ॥
कुलदीपान् प्रदर्श्याऽथ साधको भावतत्परः । मध्याह्ने पूजयेद्वापि सायाह्ने वापि पूजयेत् ॥
स तत्फलमवाप्नोति योगिनीनां प्रियो भवेत् । काङ्क्षितां लभते सिद्धिं देववद्विचरेद्भुवि ॥
माघशुक्लप्रतिपदि दिवावसानके बुधः । स्नात्वा शुक्लाम्बरधरः सायं सन्ध्यामुपास्य च ॥
सूर्यार्चनोक्तमार्गेण सर्वद्रव्यसमन्वितः । यौवनोल्लाससहितश्चन्द्रस्थां देवतां स्मरन् ॥
देवीं संपूज्य दिधिवच्चन्द्रमण्डलवासिनीम् । चन्द्रास्तोदयपर्यन्तं जपेन्मन्त्रमनन्यधीः ॥
एवं प्रतिदिनं शुक्लचतुर्दश्यन्तमर्चयेत् । पौर्णमास्यां यथाशक्त्या पूजयेच्छक्तिकौलिकान् ॥
एवं यः कुरुते भक्त्या शुक्लपक्षार्चनं सदा । सर्वपापविशुद्धात्मा सर्वैश्वर्यसमन्वितः ॥
सर्वलोकैकसंपूज्यः शिववद्विचरेद्भुवि । शुक्लपक्षार्चनं यद्वत्तद्वत् पक्षे सितेतरे ॥
यः करोति विधानेन सर्वान् कामान् समश्नुते । इह भुक्त्वाऽखिलान् भोगान् देववत् प्रियदर्शनः ॥
योगिनीवीरमिलनं लभते नात्र संशयः । अथ कार्त्तिकमासस्य शुक्लप्रतिपदि ध्रुवम् ॥
स्नात्वाऽऽचम्य च शुद्धात्मा न्यासान् कृत्वा पुरोदितान् । प्रसुप्ते जीवलोके तु मुदितात्मा महानिशि ॥
सूर्यार्चनोक्तविधिना सर्वद्रव्यसमन्वितः । आज्येनानामिकाङ्गुष्ठे वर्त्तिं प्रज्वाल्य साधकः ॥

पञ्चवर्णरजश्चित्रे वसुपत्रसरोरुहे। मधुसम्पूर्णकलसे कांश्यपात्रे मनोहरे ॥
दीपं संस्थाप्य पुरत उत्तराभिमुखस्थितः। दीपे सावरणां देवीं ध्यात्वा विधिवदर्चयेत् ॥ १८०
यौवनोल्लाससहितो दीपस्थां देवतां स्मरन्। अष्टोत्तरसहस्रन्तु जपेन्मन्त्रमनन्यधीः ॥
एवं समर्चयेत् कृष्णाचतुर्दश्यन्तमम्बिके। अमावस्यादिने शक्त्या पूजयत् शक्तिकौलिकान् ॥
एवं कृते महादेवी प्रीता भवति सर्वदा। सर्वकामसमृद्धात्मा सर्वैश्वर्यसमन्वितः ॥
सर्वलोकैकसम्मान्यः सञ्चरेच्च यथासुखम्। अष्टाष्टकार्चनं कुर्याच्छक्तश्चेदेकवासरे ॥
अथवाऽष्टदिनेष्वेवाथवा द्वाष्टदिनेषु वा। द्वात्रिंशद्दिवसेष्वेव चतुःषष्टिदिनेषु वा ॥ १८५
गुरुणा कारयेदेतत् क्रमज्ञेनाऽपरेण वा। क्रमज्ञश्चेत् स्वयं कुर्याद्वित्तशाठ्यविवर्जितः ॥
मूलाष्टकन्तु ब्राह्म्याद्यश्चासिताङ्गादिभैरवाः। मङ्गलाद्यैश्च निपुणैरष्टभिः शक्तिभिस्तथा ॥
मूलाष्टकोद्भवानीति प्रसिद्धानि कुलागमे। अक्षोभ्यादिचतुःषष्टि मिथुनानि समर्चयेत् ॥
पूर्वोक्तेन विधानेन यथा विभवमर्चयेत्। क्रमलोपं न कुर्वीत स्वेष्टकार्यार्थसिद्धये ॥
गन्धपुष्पाक्षताद्यैश्च मत्स्यमांसासवादिभिः। भक्ष्यभोज्यादिभिर्नानापदार्थैः षड्रसान्वितैः ॥ १९०
सम्यक् सन्तोषयेत्तानि मिथुनान्यतिभक्तितः। प्रौढान्तोल्लासपर्यन्तं कुर्यात् श्रीचक्रपूजनम् ॥
एवं यः कुरुते भक्त्या सकृदष्टाष्टकार्चनम्। ब्रह्मविष्णुमहेशादि देवताभिः स पूज्यते ॥
किं पुनर्मानवाद्यैश्च साक्षाच्छिव इवापरः। यदर्चनाचतुःषष्टि योगिनीगणसंस्तुतः ॥
अव्याहताज्ञः सर्वत्र पूज्यते देववद्भुवि। पुनरावृत्तिरहितो निवसेच्छिवसन्निधौ ॥
अस्मात् परतरा पूजा नास्ति सत्यं न संशयः। कुलपूजां विना चक्रे नाधिकारः कथञ्चन ॥ १९५
विना यन्त्रेण पूजा चेत् देवता न प्रसीदति। कुलपूजां सुनियतं यः करोति स कौलिकः ॥
सर्वदा समवाप्नोति योगिनीवीरमेलनम्। नीचोऽपि वा सकृद्भक्त्या कारयेद्यः कुलार्चनम् ॥
स सद्गतिमवाप्नोति किमुताऽन्ये द्विजातयः। तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ॥
कुलपूजारतो भूयादभीष्टफलसिद्धये। वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः ॥
तत्समीपस्थिता नित्यं शिवेन सह शङ्करी। इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः ॥ २००

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये पञ्चदशोल्लासः ॥ १५ ॥

---

## षोड़श उल्लासः

अथातः सम्प्रवक्ष्यामि कुलदीक्षां सुसिद्धये । अदीक्षितकुले यो हि साधनं समुपाचरेत् ॥
स महापातकी भूत्वा रौरवं नरकं व्रजेत् । अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ॥
तत्कथाश्रवणं चेत् स्यात्तत्तल्पागमनं यदि । स कुलीनः कथं चैव पूजयेत् परमेश्वरीम् ॥
दीक्षिता न च योषा चेत् कथं स्यात् कुलपूजनम् । यत्कुले कुलदीक्षा तु न स्यात् पापी स एव हि ॥
कुलपूजा न चेच्चैव कुलमन्त्राः पराङ्मुखाः । परयोषा यदि स्याच्च स्वयं तस्या गुरुर्भवेत् ॥
निजकान्तां समानीय सुशीलां सुयशस्विनीम् । कुलभक्तं गुरुं प्रार्थ्य दीक्षयेत् कुलदीक्षया ॥
शिवश्च कौल एव स्याच्छिवाः स्युः सर्वदेशिकाः । गणेशो गाणपत्यश्च गणदीक्षाप्रभुर्यतः ॥
सुरः सौरास्तथा चैव विष्णुर्विष्णुपरायणाः । कुलीनः सर्वमन्त्राणामधिकारी भवेत् सदा ॥
ततः सुदीक्षितं कुर्यात् कुलं गुरुः प्रयत्नतः । दीक्षायां कुलपूजायां शिष्यत्वे यदि वा गुरौ ॥
लज्जापरं कुलं यत्र विद्यापि तत्र निद्रिता । अधस्तात् दृष्टिपातेन तस्य विद्याऽप्यधोमुखी ॥
निमीलनात्ततो विद्या साधकं मारयेद्ध्रुवम् । पार्श्वावलोकनेनैव व्याधिदारिद्र्यपीड़िता ॥
चतुर्दिगालोकनेन उच्चाटनगतो भवेत् । एतादृशं कुलं चैव यदि कुर्यात् कथञ्चन ॥
तदा कुलगुरुं प्रार्थ्यं कारयेद्दीक्षितं ततः । एतादृशकुलस्याग्रे प्रयोगः फलदो न हि ॥
इत्यादि शिक्षया चैव शिक्षिता कुलजा सती । परानन्दरसाघूर्णहृदया लोललोचना ॥
मालालङ्कारशोभाढ्या रक्तवस्त्रविभूषणा । ताम्बूलपूरितमुखी सिन्दूराञ्जनसंयुता ॥
गुरुवक्त्रात् प्रयोगार्थं सोत्सुका साधकप्रिया । देवीवाहं देवदेव उपदेशं समाचर ॥
एवमुक्ते कुले चैव देवोऽहं शृणु पार्वति । इत्युक्त्वा सर्वशृङ्गारवेशाढ्यः स्थिरमानसः ॥
जप्त्वा ब्राह्म्यादिकाः शक्तीः पूर्वमन्त्रेण सेवयेत् । तद्गोत्रे देयमन्त्रस्य न्यासजालं प्रविन्यसेत् ॥
निजपुत्रीवदाचार्यस्तद्भालपट्टले लिखेत् । शक्तिचक्रं त्रिधाऽऽवेष्ट्य तत्र कामकलां लिखेत् ॥
तन्मध्ये देयमन्त्रेण दर्भितं नाम रञ्जितम् । तत्र देवीं समावाह्य ध्यात्वा तान्तु प्रपूजयेत् ॥
ततस्तत्पुत्रिकाकर्णे ऋषिछन्दः समन्विताम् । मूलविद्यां त्रिधाऽऽवृत्त्या कथयेत् वामकर्णके ॥
नाम कुर्यात्ततस्तस्याः कान्तं साधकसत्तमः । मातृपितृकृतं नाम वर्जयित्वा वदेत्ततः ॥
अद्यप्रभृति पुत्रि त्वं कुलपूजार्चने रता । सकुलाज्ञां समादाय लज्जालस्यविवर्जिता ॥
यथोपदिष्ट विधिना सामरस्यं समाचर । इत्यनुज्ञां गुरोर्लब्ध्वा प्रणमेद्दण्डवद्भुवि ॥
त्राहि नाथ कुलाचारपक्षिणीपद्मनायक । त्वत्पादाम्भोरुहच्छायां देहि मूर्ध्नि यशोधन ॥
विधिना स्तवनं कृत्वा गुरवे दक्षिणां ददेत् । सर्वस्वं गुरवे दद्यात्तदर्धं वा दयायुजे ॥
दक्षिणाञ्च यथाशक्त्या प्रदत्त्वा गुरवे सुधीः । स्तुत्वा नत्वा यथाशक्त्या स्वकल्पोक्तं समाचरेत् ॥
उपदिष्टा यदा देवी तदा देवी तु पुत्रिका । पूजार्हा च यदा देवी तदा माता न संशयः ॥

सर्वथा पितृपुत्रीभ्यां मूलयोगो न दृश्यते। तत्कृत्वा तेन पापेन उभौ नरकगामिनौ ॥
दुःखुके चान्यशास्त्रज्ञे पशुग्रामे तथैव च । न कर्त्तव्यं न कर्त्तव्यं न च वाच्यं कदाचन ॥
एवं कृते गुरौ शिष्ये मम शापो भविष्यति । साङ्गावरणपूजादौ यश्च न क्षयते कुलम् ॥
तदा मूर्ध्नि गुरुं ध्यात्वा कुलामृतरसेन तु । तर्पयित्वा कुलं ध्यात्वा जपेन्मन्त्रं निराकुलः ॥
नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन । न न्यासो योषिताञ्चापि न ध्यानं न च पूजनम् ॥
रात्रौ षडङ्गमाचर्य जपं कुर्यात् समाहितः । सर्वविद्याप्रयोगन्तु ततः कुर्याद् सुसाधकः ॥
अथातः कुलपुष्पस्य विधानं कथ्यतेऽधुना । यत्प्राप्य कुलदेवेन लभ्यते वाञ्छितं महत् ॥
ऋतुकाले महादेवी सुषुम्णामध्यवर्त्तिनी । अमृतं वर्षते सा तु त्रिदिनं पृथिवीतले ॥
तद्दिने तत्र वीरेन्द्रो यदि विद्यां समुद्धरेत् । पूर्णमेव भवेत्तस्य सफलं च मनोरथम् ॥
तस्मात् सर्वप्रयत्नेन कुलं वीक्ष्य जपं कुरु । आनीय प्रमदां दिव्यां प्रमत्तां यौवनान्विताम् ॥
सुस्नापितां सुदीक्षितां सुनासां चारुहासिनीं । सर्वदानन्दहृदयां घृणालज्जाविवर्जिताम् ॥
गुरुभक्तां सुवेशाञ्च देवतापूजने रताम् । स्वकान्तां परकान्तां वा संस्थाप्य तूलिकोपरि ॥
न्यासजालं प्रविन्यस्य साधकोऽक्षुब्धमानसः । तस्यास्तु मदनागारे पूजयेत् परमेश्वरीम् ॥
स्वयमक्षोभितो भूत्वा स्वयम्भु कुसुमं लभेत् । शिवहीना यदा शक्तिः सर्वादौ वर्षते हि यत् ॥
तदेव परमं पुष्पं स्वयम्भुकुसुमाख्यकम् । तद्द्रव्यप्राप्तिमात्रेण किं न सिध्यति भूतले ॥
स्वयम्भुकुसुमं द्रव्यं त्रैलोक्ये चाति दुर्लभम् । स्वेच्छाऋतुमती शक्तिः साक्षाद्देवी महेश्वरी ॥
तस्याः पुष्पं साधकेन रक्षणीयं प्रयत्नतः । वस्त्रालङ्कारपुष्पैश्च शक्तिश्च परिपूजयेत् ॥
दीक्षिताया यथाकाले पुष्पं भवति नित्यशः । कुलपुष्पं तदेव स्यात् सर्वसिद्धिप्रदायकम् ॥
कुण्डोद्भवञ्च गोलोत्थं पूर्वेव कथितं मया । कुण्डोद्भवं सिद्धिप्रदं प्रकारान्तरमुच्यते ॥
यथायोग्यं समानीय शक्तिं पूर्वोदितां शुभाम् । स्वकल्पोक्तं समाचर्य साधको जितमानसः ॥
चर्व्यं चोष्यं निवेद्याथ वस्त्रालङ्करणादिकम् । पूजयेदक्षतैः शुद्धैः तस्या मदनमन्दिरम् ॥
भावयेत् कामभावेन स्वयमच्युतमानसः । शुद्धमन्त्रौषधेनैव मथयेन्मदनालयम् ॥
मथ्यमानेऽपि तस्यां हि जायते तत्त्वमुत्तमम् । गृह्णीयात्तत् प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ॥
एतच्चतुष्टयं द्रव्यं मन्त्रसिद्धेश्च कारणम् । एतेषां द्रव्यमध्ये तु स्वयम्भुकुसुमं महत् ॥
कश्चिद्गन्धर्वराजेन लभ्यते वा नवा पुनः । लब्ध्वा तत्परमं द्रव्यं लाक्षारससमन्वितम् ॥
कस्तूरीं कुङ्कुमं चैव चन्दनेन सुमिश्रितम् । रक्तेन चन्दनेनापि वटीं कृत्वा सुगोपयेत् ॥
पूर्वोक्तक्रमतो वीरो विशोध्य मन्त्रराजकम् । लिखित्वा पूजयेद्भक्त्या यां तिथिं प्राप्य साधकः ॥
सुप्तादिदोषदुष्टा ये मन्त्रा विद्याश्च कीर्त्तिताः । प्रबुद्धास्तत्प्रयोगेन यावत् सा पुनरागता ॥
द्वितीयायां गते चैव दृश्या ज्ञाता कलावती । तिथिक्रमेण सा देवी पौर्णमास्यां फलप्रदा ॥
तत्र प्रयोगमात्रेण कृष्णपक्षे विशेषतः । क्षीणातिपूर्णतां याति यावत् सा तिथिरागता ॥

ततः प्रयोगं विद्यानां मन्त्रादीनाञ्च कारयेत् । एवं यथा प्रबुद्धा सा नैव तादृक् कदाचन ॥
स्वयम्भुकुसुमैः पूजां प्रत्यहं यः समाचरेत् । योगिन्यश्च महानागा राक्षसा दानवाश्च ये ॥ ६०
राजानश्च स्त्रियः सर्वा नित्यं वश्या भवन्ति हि । एतेनाक्षतयोगान् मधुमतीसिद्धिमालभेत् ॥
प्रत्येकेन लभेत् सिद्धिं कुसुमाद्यैर्यथाविधि ॥ अथ वक्ष्ये च शाक्तानां काम्यपूजनमुत्तमम् ॥
रक्तपद्मैर्यजेद्देवीं समस्तरश्मिसंयुताम् । विधिवल्लिखिते यन्त्रे कुलाचारेण रात्रिके ॥
मासमात्रेण वीराणां महापातककोटयः । जन्मान्तरकृताः सर्वे नाशमायान्ति निश्चितम् ॥
लक्ष्मीस्तस्य गृहे वश्या सुस्थिरा भवति ध्रुवम् । जवापुष्पैश्चक्रराजं पूजयेन्मासमात्रकम् ॥ ६५
कुलाचारेण रात्रौ च मन्त्रिणां भक्तिभावतः । ब्रह्महत्यादि पापांश्च पूर्वजन्मकृतानपि ॥
नाशयेन्नात्र सन्देहो धनवान् जायते नरः । केतकीतरुणैः पत्रैः पूर्ववत् पूजयेच्छिवाम् ॥
उपपातकसङ्घांश्च मासमात्रेण नाशयेत् । सौभाग्यमतुलं तस्य जायते नात्र संशयः ॥
शतपत्रैर्मनोरम्यैः पूजयेन्मासमात्रकम् । पूर्ववत् परमेशानि सर्वपापं विनाशयेत् ॥
चम्पकैः सुमनोरम्यैः पूजयेत् पूर्ववच्छिवाम् । मासमात्रेण हन्त्येव पातकान् पूर्वजन्मजान् ॥ ७०
सौभाग्यं वा लभेन्मन्त्री भगवत्याः प्रसादतः । श्वेतपद्मैर्महादेवीं पूजयेद्भक्तिभावतः ॥
पूर्ववन्नाशयेत् पापान् त्रिंशज्जन्मकृतानपि । मासमात्रेण सकलान् मोक्षस्तस्य करे स्थितः ॥
बन्धूककुसुमैर्देवीं मासमात्रेण पूजनात् । त्रैलोक्यं वशगं तस्य सर्वपापं प्रणाशयेत् ॥
बिल्वपत्रैश्च जलजैः सहैव परिपूजयेत् । पूर्ववत् परमेशानीं मासमात्रं न संशयः ॥
समृद्धिमान् भवेत् सोऽपि सर्वपापहरः सदा । मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः ॥ ७५
श्वेतोत्पलैः प्रसूनैश्च पूजयेन्मासमात्रकम् । कुलाचारक्रमेणैव पातकान् शतजन्मजान् ॥
ब्रह्महत्यादिजनितान् नाशयेन्नात्र संशयः । मुक्तिस्तस्य करे सत्यं वाचांपतिसमो भुवि ॥
अगस्त्यबालबन्धूकजवारक्तोत्पलैः समम् । पूर्वक्रमेण संपूज्य मासमात्रं प्रयत्नधीः ॥
पातकान् नाशयेन् मन्त्री साक्षात् कामसमो भवेत् । चम्पकैः पाटलैर्देवीं बकुलैर्नागकेशरैः ॥
कह्लारैः सिन्धुवारैश्च पूजयेत् पूर्ववत् क्रमात् । सौभाग्यमण्डलं तस्य मासमात्रेण निश्चितम् ॥ ८०
महापातकयुक्तो वा यदि देवीं प्रपूजयेत् । शमीदूर्वाङ्कुराश्वत्थपल्लवैरथवाऽर्कजैः ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं ध्रुवम् ॥ अथातः सर्वविद्यानां लिख्यते सिद्धिकारणम् ॥
ब्राह्मणाद्यष्टकुलैः सार्धं साधकः स्थिरधीः शुचिः । चतुष्पथे वा नद्यां वा वटमूले त्रिशूलके ॥
प्रेतभूमौ बिल्वमूले हट्टे वा राजवेश्मनि । सिन्दूरेण लिखेन्मन्त्रं विपुलं साध्यदर्भितम् ॥
ततः सम्पूज्य विधिवत् कुलं कुलरसेन च । तर्पयित्वा तदन्तःस्थः प्रजपेन्निशिचारतः ॥ ८५
ततो लक्षप्रमाणेन सिद्धिस्तावद्भवन्ति हि । अथ रात्रौ पुण्यगेहे उद्याने वा सुरालये ॥
आनीय कुलजां देवीं मूलमन्त्रेण दीक्षयेत् । ततः पूर्वोक्तरूपेण कुलक्षोभं समाचरेत् ॥
रत्नपूजाविधानं हि कथयामि विशेषतः । पुष्पाणि रचयेद्वीरो माणिक्यघटितानि च ॥

तैस्तु पूजा प्रकर्त्तव्या चक्रराजस्य पूर्ववत् । नानापुष्पैः सुगन्धैश्च कर्पूरक्षोदचर्चितैः ॥
एकविंशतिरात्रेण विंशति धंरणीभुजाम् । दासभूताः भवन्त्येव महारोगांश्च नाशयेत् ॥
सूर्यवत् कान्तिमान्मन्त्री जायते नात्र संशयः । मुक्तारत्नरञ्जितानि स्वर्णपुष्पाणि साधकैः ॥
तैस्तु पूजा प्रकर्त्तव्या नानारत्नैश्च पूर्ववत् । एकविंशतिरात्रेण राजपुत्री वशीभवेत् ॥
कलाकान्तियुतो वीरो जायते सुभगः क्षितौ । प्रवालघटितैःस्वर्णपुष्पैस्तु बहुभिर्यजेत् ॥
पूर्ववत् परमेशानीं कुलाचारक्रमेण तु । पुष्पैश्च विविधैश्चैव सप्ताहाच्च सुनिश्चितम् ॥
क्रूरास्तस्य वशाः सर्वे वैरिवर्गांश्च नाशयेत् । तथा मरकतक्षिप्तस्वर्णपुष्पैश्च पूजयेत् ॥
एकविंशतिरात्रेण नानापुष्पैः क्रमाद्यजेत् । विधिवत् तस्य वरदा भैरवी भवति स्थिरम् ॥
पद्मरागमहारत्ननिर्मितैः स्वर्णसंयुतैः । कुसुमैरर्चयेच्चक्रं त्रिसप्ताहात् सुनिश्चितम् ॥
सुरास्तस्य वशाः सर्वे बृहस्पतिसमो भवेत् । सुवर्णरचितैः पुष्पैर्वज्रकेशरवर्जितैः ॥
एकविंशतिरात्रेण मोहयेज्जगतीमिमाम् । देवा दैत्या वशास्तस्य जायन्ते नात्र संशयः ॥
इन्द्रनीलमयैः स्वर्णपुष्पैश्चक्रं समर्चयेत् । एकविंशतिरात्रेण तथा नीलैश्च नीरजैः ॥
वैरिणो नाशमायान्ति शेषा वश्या भवन्ति हि । गोमेदघटितैः पुष्पैः स्वर्णपुष्पैर्यजेद्बुधः ॥
किंशुकैः कुन्दपुष्पैश्च पूर्ववत् परमेश्वरीम् । सप्ताहाद्वैरिणो वश्या घातस्तेषु प्रजायते ॥
त्रिसप्ताहान्महापापसञ्चयं नाशयेत्ततः । स्वर्णरत्नमयैः पुष्पैर्नवैरेव प्रपूज्यते ॥
तदाऽश्वमेधदशकं फलं भवति निश्चितम् । क्रव्यादयस्तद्वशगा हि भवन्त्येव न संशयः ॥
वैदूर्यघटितैः पुष्पैः पूजयेच्चक्रमुत्तमम् । सचम्पकादिभिर्धीरस्त्रैलोक्यं स्तम्भयेत् क्षणात् ॥
एकविंशतिभिर्वारैर्महापापहरो भवेत् । निर्माल्यभूतैः कुसुमैरर्चितैः परमेश्वरीम् ॥
नानारत्नमयैः स्वर्णपुष्पैर्यदि शिवां यजेत् । तदा देवाश्च मुनयः पन्नगा राक्षसादयः ॥
सर्वे वश्या भवन्त्येव त्रिसप्ताहान्न संशयः । जन्मकोटिभवं पापं नाशयेन्नात्र संशयः ॥
स्वर्णवर्णमयैः पुष्पैर्मासमेकं प्रपूजयेत् । तदाश्वमेधदशकफलं भवति सर्वदा ॥
स्वर्णरत्नानि पुष्पाणि यदि न स्युस्तदा शृणु । पूर्वोदितस्वपुष्पैश्च पूजा कार्या सुसाधकैः ॥
यद्यत् पुष्पं यत्र यत्र देयं तत्र महात्मना । तत्र तत्रैव दातव्यं यद्दातव्यं सुखेच्छया ॥
अलङ्कारस्वरूपेण पूजयेच्चक्रनायिकाम् । केवलं योनिपुष्पैस्तु त्रैलोक्यं स्तम्भयेद्ध्रुवम् ॥
मासमात्रेण पापानि सप्तजन्मभवान्यपि । नाशयेन्मोहयेत् सर्वान् समुद्रवलयां धराम् ॥
अथेदानीं प्रवक्ष्यामि त्रिपुराबीजसाधनम् । शुक्लाम्बरधरो धीरः शुक्लगन्धादिभूषितः ॥
शुक्लालङ्काररचितः शुक्लमाल्यान्वितः शुचिः । शुक्लगो ब्रह्मचारी तु शुक्लासनपरिग्रहः ॥
पूजयेत् शुक्लपुष्पैस्तु नैवेद्यैर्धवलैस्तथा । पिष्टकं पायसं दुग्धं अन्नं बहुविधन्तथा ॥
शर्करा मोदकं चैव नानाफलसमन्वितम् । कृतसङ्कल्पवीरेन्द्रः साधयेद्वाग्भवाक्षरम् ॥
वाग्भवाख्यां जपेद्विद्यां वागीशीं संस्मरन् बुधः । कर्पूरधवलां शुभ्रपुष्पाभरणभूषिताम् ॥

अत्यन्तशुभ्रवसनां वज्रमौक्तिकभूषणाम् । मुक्ताफलसमुद्भूतजपमालालसत्कराम् ॥
पुस्तकं वरदानञ्च दधतीमभयप्रदाम् । एवं ध्यात्वा प्रपूज्यैव वागीशीं साधकोत्तमः ॥
मूलादिब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् । तस्माज्ज्योतिर्मयीं ध्यायेत् जिह्वाग्रेऽमृतरूपिणीम् ॥
विभाव्य प्रजपेन्मन्त्रं पुरश्चरणसंख्यकम् । ततश्च नष्टहृदयो ग्राम्यो मूर्खोऽतिपातकी ॥
शठोऽपि यः पदं स्पष्टमक्षरं वक्तुमक्षमः । जड़ो मूर्खोऽतिदुर्मेधा गतप्रज्ञो विनष्टधीः ॥
सोऽपि सञ्जायते वाग्मी वाचस्पतिरिवापरः । सत्पण्डितघटाटोपजेताऽप्रतिहतप्रभः ॥
सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् । सुकुमारतरस्फार वृत्तालङ्कारपूर्वकैः ॥
पदगुम्फैर्महाकाव्यकर्त्ता सोऽपि प्रजायते । वेदवेदाङ्गवेदान्तसिद्धान्तज्ञानपारगः ॥
ज्योतिःशास्त्रेतिहासादिमीमांसास्मृतिसारवित् । पुराणरसवादादिगारुड़ानेकमन्त्रवित् ॥
पातालशास्त्रविज्ञानभूततन्त्रार्थतत्त्ववित् । विचित्रचित्रकर्मादिशिल्पानेकविचक्षणः ॥
सर्वभाषारुतज्ञानी समस्तलिपिकर्मवित् । नानाशास्त्रादिशिक्षादिवेत्ता भुवनविश्रुतः ॥
सर्ववाङ्मयवेत्ता च सर्वज्ञो भुवि जायते ॥ अथ कामकलासक्तः साधको रक्तमन्दिरे ॥
रक्तालङ्कारसंयुक्तो रक्तगन्धानुलेपनः । रक्तवस्त्रावृतः सम्यङ्मध्ये कामकलात्मना ॥
रक्तपुष्पैश्च विविधैः नैवेद्यै रक्तसन्निभैः । नानोपहारबलिभिः कुङ्कुमादिभिरर्चयेत् ॥
मूलाद्ब्रिह्मरन्ध्रान्तं स्फुरद्दीप्तिस्वरूपिणीम् । बन्धूककुसुमाकारकान्तिभूषणभूषिताम् ॥
इक्षुकोदण्डपुष्पेषुवराभयलसत्कराम् । उद्दीप्तकान्तिसिन्दूरभालत्रिनयनान्विताम् ॥
एवं सञ्चिन्त्य वीरेन्द्रः पूजयेत् परमेश्वरीम् । यथोक्तसंख्यं संजप्य कामराजं सुसाधकः ॥
चिन्तयेत् परमेशानीं त्रैलोक्यं मोहयेत् क्षणात् । राजानो वशमायान्ति पन्नगा राक्षसाः सुराः ॥
कन्दर्प इव वीरेन्द्रो योषितां मानहारकः । मनश्चिन्तितयोषित्तु दासीवद्वशगा भवेत् ॥
तद्दृष्टिपथगा नारी सुरी वाप्यथवाऽसुरी । विद्याधरी किन्नरी वा यक्षी नागाङ्गनाऽथवा ॥
प्रचण्डतरभूपालकन्यका सिद्धकन्यका । ज्वलन्मदनदुष्प्रेक्ष्यदहनोत्तप्तमानसा ॥
खिन्ना प्रचलितापाङ्गा विमूढ़ा मदविह्वला । निवेदितात्मसर्वस्वा वशगा तस्य जायते ॥
चलज्ज्वलेन्दुसङ्काशा बालार्ककिरणारुणा । चिन्तिता योषितां योनौ क्षोभयति च तत्क्षणात् ॥
सैव सिन्दूरवर्णाभा हृदये चिन्तिता सती । सम्मोहोन्मादनारोपचित्ताकर्षकरी तथा ॥
नियोजिताऽथवा मूर्ध्नि वर्षन्ती रक्तबिन्दुभिः । धारणासम्प्रयोगेण करोति वशगं जगत् ॥
आकर्षयेत्तदा शीघ्रं रम्भाञ्चापि तिलोत्तमाम् । रक्तवर्णां स्त्रियं ध्यात्वा तदीयमहसा ततः ॥
तस्या मूर्ध्नि स्मरेद्विद्यां स्रवत्पीयूषवर्षिणीम् । ध्यायन् सम्मोहयेन्नारीं मदनोत्तप्तमानसाम् ॥
क्षणमात्रेण बीरेन्द्रस्त्रैलोक्यं वशमानयेत् । एतत्कामकलाध्यानात् पञ्चकाम इवापरः ॥
श्रीं ह्रीं क्लीं हूं ततः संस्तु क्रमेण परियोजिताः । यन्त्रं विदध्यात् कामस्तु मन्मथान्तर्गतो भवेत् ॥
कन्दर्पसम्पूटं कृत्वा कोणगर्भगतं ततः । मकरध्वजसंज्ञन्तु सर्वमेतत् सुसाधकः ॥

मीनकेतुगतं कुर्यात् मोहयेज्जगतीमिमाम् । त्रैलोक्यमोहनो नाम प्रयोगोऽयं प्रदर्शितः ॥
अथातः सम्प्रवक्ष्यामि शक्तिबीजस्य साधनम् । सृष्टिसंहारपर्यन्तां शरीरे चिन्तयेत् पराम् ॥ १५०
स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणीम् । हेमप्रभाभासमानां विद्युल्लतासमप्रभाम् ॥
स्फुरच्चन्द्रकलापूर्णकपालं वरदाभये । ज्ञानमुद्राञ्च दधतीं साक्षादमृतरूपिणीम् ॥
एवं ध्यात्वा जपेन्मन्त्री हैमाभैरुपचारकैः । पूर्वसंख्यं जपेद्बीजं नानाविघ्नं विनाशयेत् ॥
एतस्याः स्मरणाद्वीरो नीलकण्ठत्वमागतः । वैनतेयसमो मन्त्री विषभारं विनाशयेत् ॥
नागा दर्शनमात्रेण जड़ीभवन्ति तत्क्षणात् । भूतप्रेतपिशाचांश्च नाशयेन्नात्र संशयः ॥ १५५
चातुर्थिकज्वरान् सर्वानपस्मारांश्च नाशयेत् । दुष्टव्याधिग्रहांश्चैव डाकिनीरूपिका गणाः ॥
यक्षराक्षसवेतालैस्त्रिनेत्र इव दृश्यते । अथवा येन विद्येयं परिपूर्णा विचिन्त्यते ॥
नाभिमण्डलहृत्पद्ममुखमण्डलमध्यगा । पद्मरागमणिस्वच्छा चिन्तनात् साधकस्य च ॥
तस्याष्टगुणमैश्वर्यमचिरात् सम्प्रवर्त्तते । तन्नामस्मरणान्मन्त्री योगिनीनां भवेत् प्रियः ॥
मातृचक्रं तस्य काये तेन सार्धं सुखी भवेत् । पुत्रवान् धनवान् धीरो मन्त्रं ध्यात्वा न संशयः ॥ १६०
विलिख्य चक्रराजन्तु परिपूर्णां प्रपूजयेत् । प्रयच्छति महादेवी खेचरीसिद्धिमुत्तमाम् ॥
चतुःषष्टियुताः कोट्यो योगिणीनां महोजसाम् । चक्रमेतत् समासाद्य स्थितास्ता नात्र संशयः ॥
पूर्णविद्याजपात् सर्वे वश्या भवन्ति निश्चितम् । क्षोभयेत् स्वर्गमूर्लोक पातालतलवासिनः ॥
क्षोभयन्त्येव वीरेन्द्राः महाविद्याप्रसादतः । वाग्भवात् वाक्पतित्वञ्च कामात् कामसमो भवेत् ॥
शिवत्वं शक्तिबीजेन त्रिकूटे सर्वमालभेत् । सर्वसिद्धिर्भवत्येव कूटत्रयस्य जापतः ॥ १६५

इति [illegible]हंसविरचिते कौलावली निर्णये षोड़शोल्लासः ॥

---

## सप्तदश उल्लासः

अथ वक्ष्ये च मन्त्राणां शिखां सिद्धिप्रदायिकाम्। यस्य विज्ञानमात्रेण क्षिप्रं विद्या प्रसीदति ॥
मूलरन्ध्रे तु या शक्तिर्भुजगाकाररूपिणी। तत्र यश्च भ्रमावर्त्तोऽपान इत्युच्यते बुधैः ॥
नीवारयुक्तविधिना कूजन्ती सततोत्थिता। गच्छन्ती ब्रह्मरन्ध्रेऽपि प्रविशन्ती स्वकेतने ॥
यातायातक्रमेणैव कुर्यात्तत्र मनोलयम्। तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदीपिका ॥
तमःपूर्णगृहे यद्वत् न किञ्चित् प्रतिभासते। शिखाहीनास्तथा मन्त्रा न सिध्यन्ति कदाचन ॥
शिखोपदेशः सर्वत्र गोप्तव्यः साधकेन च। विनाऽनेन न सिध्यन्ति कल्पकोटिशतैरपि ॥
चतुर्विधा तु या सृष्टिर्यस्या योनौ प्रजायते। पुनः प्रलीयते तस्यां कालाग्न्यादिशिवान्तिका ॥
योनिमुद्रा परा ह्येषा बन्धस्तस्याः प्रकीर्त्तितः। तस्यास्तु बन्धमात्रेण तन्नास्ति यन्न साधयेत् ॥
अन्यथा जप्यते यस्तु अन्यथा कुरुते तु यः। नासौ सिध्यति मन्त्रश्च सत्यं सत्यं पुनः पुनः ॥
छिन्ना रुद्धाश्च ये मन्त्राः कीलिताः स्तम्भिताश्च ये। दग्धाः सन्त्रासिता हीना मलिनास्तु तिरस्कृताः ॥
भेदिता भ्रमसंयुक्ताः शप्ताः सम्मूर्छिताश्च ये। वृद्धा बालास्तथा त्रस्ताः प्रौढ़ा यौवनगर्विताः ॥
अरिपक्षस्थिता ये च निर्वीर्याः सत्त्ववर्जिताः। अंशकेन विहीनाश्च खण्डशः शतधा कृताः ॥
विधिनाऽनेन संयुक्ताः प्रभवन्त्यचिरेण तु। सिद्धिमोक्षप्रदाः सर्वे साधकेन नियोजिताः ॥
यद्यदुच्चार्यते मन्त्री वर्णरूपं शुभावहम्। तत्तत् सिध्यत्यनायासाद्य योनिमुद्रानिबन्धनात् ॥
दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा। ततोऽधिकारी तन्त्रेऽस्मिन् भवेत् साधकसत्तमः ॥
ब्रह्महत्यासहस्राणि त्रैलोक्यमपि घातयेत्। नाऽसौ लिप्यति पापेन योनिमुद्रानिबन्धनात् ॥
न तस्य पापपुण्यैस्तु क्रीदोषैर्न लिप्यते। कृत्वा पापसहस्राणि असंख्यातानि सर्वदा ॥
दहत्युच्चारमात्रेण योनिमुद्रानिबन्धनात्। दुष्टमन्त्राश्च सिध्यन्ति मन्त्राश्चान्ये तु किं पुनः ॥
स्थानस्था वरदा मन्त्रा ध्यानस्थाश्च फलप्रदाः। स्थानध्यानविनिर्युक्ताः सुसिद्धा अपि वैरिणः ॥
सिध्यन्ति येन तत्स्थानं कथयामि विशेषतः। सकलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम् ॥
कलाभिन्नं कलातीतं षोढ़ास्थानं शिवोऽब्रवीत्। सकलं ब्रह्मबन्धस्थं तदूर्ध्वं विद्धि निष्कलम् ॥
मानसं सूक्ष्मनामानं हृत्स्थं सकलनिष्कलम्। बिन्दुस्थितं कलाभिन्नं कलातीतं तदूर्ध्वतः ॥
कलाङ्कशूलिनी सैव नादशक्तिः शिवोदिता। एषु स्थानङ्गता मन्त्राः स्थानस्थाः परिकीर्त्तिताः ॥
देवतां हृदि सञ्चिन्त्य मन्त्रजापश्च जायते। ध्यानस्थाश्चैव ते मन्त्रा विज्ञेयाः साधकेन वा ॥
तारसम्पुटितो वापि दुष्टमन्त्रोऽपि सिध्यति। यस्य यत्र दृढ़ा भक्तिर्जायते सततं यदि ॥
तस्य सिद्धो भवेन्मन्त्रो यथोक्तजपमात्रतः। अथातः सर्वविधानां लिख्यते सिद्धि कारणम् ॥
ब्राह्मणाद्यष्टकुलैः सार्धं साधकः स्थिरधीः शुचिः। चतुष्पथे वा नद्यां वा वटमूले त्रिशूलके ॥
प्रेतभूमौ बिल्वमूले हट्टे वा राजवेश्मनि। सिन्दूरेण लिखेद् यन्त्रं विपुलं साध्यगर्भितम् ॥

तत्र सम्पूज्य विधिवत् कुलं कुलरसेन च । तर्पयित्वा तदन्तःस्थं प्रजपेन्निशिचारतः ॥
ततो लक्षप्रमाणेन सिद्धिप्रदा भवन्ति हि । रात्रौ पुण्यगृहे चैव उद्याने वा सुरालये ॥
आनीय कुलजां देवीं मूलमन्त्रेण दीक्षयेत् । ततः पूर्वोक्तरूपेण कुलक्षोभं समाचरेत् ॥
एवं कृते न सिद्धिश्चेन्मूलमन्त्रं समभ्यसेत् । पीठानां परमं पीठं कामरूपं महाफलम् ॥
अत्र या क्रियते पूजा सकृद्वा साधकेन च । विहाय सर्वपीठानि तस्य देहे वसेच्छिवा ॥
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डलम् । यत्र कोटिगणैः सार्धमाद्या वसति मर्दिनी ॥
यत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम् । यतो देव्यश्च देवाश्च मुनयश्चैव भावजाः ॥
सर्वेऽप्याविर्भवन्त्यत्र तेन गुप्तं महाकुलम् । द्विविधं चैव तत्पीठं गुप्तं व्यक्तं सदा पशौ ॥
व्यक्तं गुप्तं महापुण्यं दुरापं साधकेन वै । व्यक्तं सर्वत्र देवेश लभ्यते कुलसुन्दरैः ॥
तत्रापि लक्षमानेन सिद्धिर्भवति निश्चितम् । अथवाऽन्यप्रकारेण कथ्यते साधनं महत् ॥
आनीय देवीं तद्गात्रे व्यापकान्तं प्रविन्यसेत् । उपचारैः षोड़शभिस्तां सम्पूज्य विधानतः ॥
प्रथमं साधकश्रेष्ठो देवीकूटस्य मस्तके । मन्त्रं विलिख्य यथोक्तं पूजयेत् कुलवर्त्मना ॥
प्रथमे पीठदेवीश्च पूजयेद् गन्धपुष्पकैः । महाभागां ततो मूलदेवीमावरणैः सह ॥
लक्षैकं तत्र संजप्य उड्डीयानं ततो विशेत् । तत्र पीठे योगनिद्रां पूजयित्वा ततो यजेत् ॥
निजेष्टदेवतां तत्र जपेल्लक्षं समाहितः । कामरूपं ततो गत्वा तत्र कात्यायनीं यजेत् ॥
पूजयित्वा ततो देवीं जपेल्लक्षं समाहितः । ततो जालन्धरे गत्वा पूर्णेशीं प्रथमं यजेत् ॥
तत्रापि लक्षमानन्तु जप्त्वा मन्त्रं समाहितः । ततः पूर्णगिरिं गत्वा यजेच्चण्डीं समाहितः ॥
पूजयित्वा महादेवीं जपेल्लक्षमनन्यधीः । सिन्दूरविन्दुपीठे च कामाख्यां प्रथमं यजेत् ॥
ततः प्रान्ते महादेवीं यजेद्दिक्करवासिनीम् । एवं पीठेश्वरीं जप्त्वा पूजयेदिष्टदेवताम् ॥
सप्तपीठे सप्तलक्षं जप्त्वा रात्रौ समाहितः । संख्यापूर्वं ततः पृच्छेन्महादेवी कुलोत्तमम् ॥
तवेष्टदेवतैवाऽहं वृणुष्व वरमुत्तमम् । ततः प्रणम्य देवेशीं वृणुयाद्वरमुत्तमम् ॥
यद्येवं नैव सा देवी पुनः पूर्वोक्तमाचरेत् । अक्षोभितः कुलाचारपरिचर्यापरो भवेत् ॥
अथवा सर्वपीठेषु यजेन्महिषमर्दिनीम् । ततः प्रसन्ना भवति सैव कुलवरप्रिया ॥
ततो जप्त्वा मूलमन्त्रं सर्वसिद्धीश्वरो भवेत् । ततो ध्यात्वा न्यसेदादौ मातृकान्तरसंज्ञकम् ॥
पूर्ववद्विविधान्न्यस्य तेनैव न्यस्य मातृकाम् । अकारादिक्षकारान्तमेकैकक्रमयोगतः ॥
पञ्चाङ्गञ्च पुनः कृत्वा पञ्चधा व्यापकं चरेत् । मूर्द्धादिचरणान्तञ्च तस्मान्मूर्द्धावसानकम् ॥
मूलेन मनुना मन्त्री कृत्वा सञ्चिन्तयेत्ततः । ध्यायेत् कालीं महादैत्ययुद्धरागमहोन्मुखीम् ॥
दक्षिणे चक्रखड्गौ च वाणं शूलं तथैव च । वामे शङ्खं तथा चर्म धनुस्तर्जनमेव च ॥
विभ्रतीं तीव्रवाणञ्च महिषे तु निषेदुषीम् । पीताम्बरधरां देवीं पीनोन्नतकुचद्वयाम् ॥
जटामुकुटशोभाढ्यां पितृभूमिसुखावहाम् । एवं ध्यात्वा महादेवीं मानसैरुपचारकैः ॥

पूजयेद्विधिवद्भक्त्या स्वकीय हृदि पङ्कजे । तत: साऽहं विभाव्याथ पुष्पं नि:क्षिप्य मस्तके ॥
घटस्थापनमारभ्य पीठपूजावसानकम् । कृत्वा च पूर्ववद्वीर: सदाशिवं यजेत्ततः ॥ ६०
पूर्वोक्तविधिना चैव ध्यात्वा च परदेवताम् । यन्त्रमध्ये समावाह्य मूलेन परिकल्पिताम् ॥
आह्वानादिकं चैव पूर्ववच्च समाचरेत् । सम्पूज्य च महादेवीं पूजयेत्तदनन्तरम् ॥
देव्या वामे यजेत् पश्चात् पूर्वोक्तञ्च गुरोः कुलम् । शाक्तं जप्त्वा च गुर्वादीन् नारदञ्च ततो यजेत् ॥
अष्टपत्रे यजेद्देवीं दुर्गाद्यां दीर्घपूर्विकाम् । दुर्गा च प्रथमा ज्ञेया द्वितीया वरवर्णिनी ॥
आर्या चैव तृतीया च चतुर्थी कनकप्रभा । कृत्तिका पञ्चमी प्रोक्ता षष्ठी चैवाभयप्रदा ॥ ६५
काली सुरागिणी चैव जप्त्वा पूर्वोदितक्रमात् । आयुधानि दलाग्रेषु यादिभिः क्रमतो यजेत् ॥
ब्राह्म्याद्याश्च ततः पश्चात् लोकपालांस्ततो वहिः । तदस्त्राणि वहिर्जप्त्वा तर्पयित्वा विधानतः ॥
ततः सम्पूजयेद्देवीं पूर्ववत् साधकोत्तमः । तर्पयित्वा महादेवीं मन्त्रजापं समाचरेत् ॥
मातुर्महिषमर्दिन्याः सङ्केतं कथयाम्यतः । कुलाचारस्य संसिद्ध्यै भुक्तिमुक्तिसुसिद्धये ॥
भान्तं वियत् सनयनं श्वेतो मर्दिनी ठ द्वयं । अष्टाक्षरी समाख्याता विद्या महिषमर्दिनी ॥ ७०
सृष्टिस्थितिविनाशानामादिभूता सनातनी । न कस्मैचित् प्रवक्तव्या कथिता सिद्धिकारिणी ॥
अत्यन्तगुरुभक्ताय शुद्धाय सा हि प्रार्थ्यते । तदाद्यवर्गा दातव्या सफलं तस्य साधनम् ॥
प्रणवाद्यां जपेद्विद्यां मायाद्यां वा जपेत् सुधीः । वधूबीजादिकां वापि कवचाद्यां जपेत्तदा ॥
सर्वकालेषु सर्वत्र कामाद्यां प्रजपेत् सुधीः । वाग्भवाद्यां जपेत् तां तु देवीं वाक्यविशुद्धये ॥
साधारणी प्राणविद्या हृल्लेखा सिद्धिखेचरा । एतत्पूर्वस्थिता देवी सुरसिद्धिविधायिनी ॥ ७५
विशेषतः कलियुगे महासिद्धेश्च दायिनी । गुरूणां कुलनाथानां मायापाशविमोचिनी ॥
तस्माद्यत्नेन सततं गोप्तव्येयं नवाक्षरी । अष्टलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्ततः ॥
पुरश्चरणमष्टलक्षं बोद्धव्यं साधकेन च । यथाशक्ति जपं कृत्वा समाप्याथ स्तुतिं पठेत् ॥
जयदेवि जगद्धात्रि त्रिपुराद्ये त्रिदैवते । भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ॥
रोगविघ्नविनाशाय कुलाचारसमृद्धये । करालवदने श्यामे नमस्ते सुरसुन्दरि ॥ ८०
कुलभक्तप्रसन्नास्ये शङ्करप्राणवल्लभे । रक्तमांससमाकीर्णवदने त्वां नमाम्यहम् ॥
इति स्तवेन संस्तुत्य शेषं पूर्ववदाचरेत् । विसर्जनं विधायाथ प्रयोगञ्च ततश्चरेत् ॥
एतद्विद्या महाविद्या न देया यस्य कस्यचित् । यदि भाग्यवशात् लभ्या कुलदेवी कुलोत्तमैः ॥
दीक्षिता कुलजाभिस्तु सिद्धिदा सैव नान्यथा । अथातः सम्प्रवक्ष्यामि दूतीयजनमुत्तमम् ॥
शाक्तो वा वैष्णवो वापि शैवो वाऽप्यन्यपूजकः । यस्मात् क्षिप्रं भवेत् सिद्धिर्नान्यथा जन्मकोटिभिः ॥ ८५
मन्त्रस्य सिद्धिकामस्तु दूतीयजनमाचरेत् । किं जपन्यासविधिना ध्यानपूजादिविस्तरैः ॥
यावद्दूतीं न पूज्येत तावत् सिद्धिर्भवेत् कुतः । गन्धर्वरूपवान् भूत्वा योनौ संपूज्य साधकः ॥
इहामुत्र सुखी भूत्वा देवीपुत्रो भवेत् क्षितौ । त्रिकोणेषु त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥

योनिमध्ये यजेन्नित्यं चण्डिकां कुलदेवताम् । तत्र विद्यां जगद्धात्रीं कुलामृतैः कुलक्रमात् ॥
स भवेत् साधकश्रेष्ठः शिवतुल्यो भवेन्नरः । तत्र या क्रियते पूजा जपस्वा तर्पणं पुनः ॥
तदनन्तफलं कर्त्तुर्भवत्येव न संशयः । युवतीयोनिमाश्रित्य सर्वसिद्धिर्भवेद्‌यतः ॥
तस्मादस्यै योषितां योनौ पूजयेत् साधकोत्तमः । सर्वालङ्कारसंयुक्तो रक्तवस्त्रविभूषितः ॥
परमानन्दतो रात्रौ पञ्चतत्त्वेन संयजेत् । स्वकल्पोक्तं प्रकुर्वीत न्यासादिकं सुसाधकः ॥
मस्तकं गजदन्तस्य हेमरूप्यादिनिर्मितम् । अर्घ्यपात्रे प्रतिष्ठानं कार्यं हेतुजलेन च ॥
विशुद्धक्षौमरचितां तूलिकां तत्र योजयेत् । पुष्पान्यकार्यमध्ये च उपर्युपरि पूजयेत् ॥
मण्डूकं पूजयेदादौ रुद्रं कालाग्निसंयुतम् । आधारशक्तिं कूर्मञ्च तथानन्तवराहकम् ॥
पृथिवीञ्च तथा कन्दं नालं वसुदलं तथा । केशराणि च संपूज्य कर्णिकायां यजेत्ततः ॥
धर्मं ज्ञानञ्च वैराग्यं ऐश्वर्यञ्च क्रमाद्यजेत् । अपूर्वान् पूजयेदेतान् साधकः सिद्धिहेतवे ॥
आत्मान्तरात्मपरमज्ञानात्मानं क्रमेण च । पूजयित्वा ततश्चैव गुरुरूपान् समर्चयेत् ॥
अद्वैताचारसम्पन्नां गुरुभक्तां दृढव्रताम् । सदनुष्ठाननिरतां सात्त्विकीभक्तिसंयुताम् ॥
कुर्यात् पैशुन्यरहितां अमायां भक्तवत्सलाम् । चातुर्यौदार्यदाक्षिण्यकरुणादिगुणान्विताम् ॥
रूपयौवनसम्पन्नां शीलसौभाग्यशालिनीम् । मनोगृहीतविश्वासां यद्वा सङ्केतमागताम् ॥
अथवा तत्क्षणायातां मदनानलतापिताम् । विलिप्तां रक्तवस्त्रेण रक्तगन्धविभूषिताम् ॥
सुगन्धिरक्तकुसुमां सर्वाभरणराजिताम् । सुधूपैर्धूपितां तन्वीं दूतीकर्मणि योजयेत् ॥
एवम्भूतां यजेद्यस्तु प्रसूनतूलिकोपरि । तस्य गात्रे स्वकल्पोक्तं न्यासजालं विधाय च ॥
षोड़शैरुपचारैस्तु पूजयेत् स्थिरमानसः । जप्त्वा च तूलिकामध्ये प्रसूनैश्च सुगन्धिभिः ॥
चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमादिभिः । समाकीर्णे सुपर्य्यङ्के पूजयेत् कुलनायिकाम् ॥
पूजयित्वा सदा भक्त्या स्थिरचित्तः स्थिरेन्द्रियः । वटुकं गणपं दुर्गां क्षेत्रपालन्तथैव च ॥
पूर्वादिक्रमतो मन्त्री पूजयेत् सिद्धिहेतवे । त्रिकोणे पूजयेन्मूर्ध्नि कामेशीं तस्य मध्यगे ॥
गणेशञ्च कुलाध्यक्षं दुर्गां लक्ष्मीं सरस्वतीम् । त्रिकोणे पूजयित्वा तु वसन्तं मदनं तथा ॥
स्तनयोः पूजयेत् पश्चात् मुखे तस्याः कलाधरम् । दक्षपादादिमूर्धान्तं वाममूर्धादिकन्तथा ॥
पूजयेत् साधकश्रेष्ठः कला वै कामसोमयोः । श्रद्धा प्रीतीरतिश्चैव दूतिः कान्तिर्मनोरमा
विमला मोदिनी घोरा मदनोन्मादिनी तथा । मोहिनी दीपनी चैव शोषणी चैव शङ्करी ॥
रञ्जनी च क्रमेणैव षोड़शी प्रियदर्शना । षोड़शस्वरसंयुक्ता एताः कामकला यजेत् ॥
पूषा रमा च सुमना रतिः प्रीतिस्तथा धृतिः । ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी ॥
अङ्गिरा पावनी चैव छाया सम्पूर्णमण्डला । तथा तुष्टामृते चैव कलाः सोमस्य षोड़श ॥
स्वरैरेव प्रपूज्या हि सर्वकामार्थसिद्धये । तस्यास्तु मदनागारे पूजयेद्भगमालिनीम् ॥

वाग्भवं भगशब्दान्ते भुगे भगिनि चालिखेत् । अथोदेरि भगान्ते च भगमाले भगावहे ॥
भगगुह्ये भगयोनि ततो भगनिपातनि । सर्वभगवशङ्करि गगरूपे ततः परम् ॥
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्वाण्यालिखेत् । भगानि मे ह्यानयान्ते वरदेऽथ समालिखेत् ॥ १२०
रेते सुरेतेऽथ भग क्लिन्ने क्लिन्नद्रवे ततः । क्लेदय द्रावयाऽमोघे भगविच्चे ततः परम् ॥
क्षुभः क्षोभयशब्दान्ते सर्वपदं वदेत्ततः । सत्त्वान् भगेश्वरि ब्रूयात् वाग्भवं ब्लूं जमादिकम् ॥
भें ब्लूं मों ब्लूं प्रदान्ते हें हें क्लिन्ने ततो वदेत् । सर्वाणि भगानि मे वशमानय चोद्धरेत् ॥
वधू ह्र्ब्लें भुवनेशीं ततश्च भगमालिनि । भगमालाश्च नित्याश्च ङेयुतां मनुमुद्धरेत् ॥
भगमालां महाविद्यां पूजयित्वा च साधकः । सर्वानन्दमये मध्ये चक्रराजं समर्चयेत् ॥ १२५
पूर्वपश्चिमयोगेन निजविद्यां प्रपूजयेत् । तत्राप्यावाहनं नास्ति जीवन्यासं तथैव च ॥
विधिवत् पूजनं कृत्वा स्वलिङ्गे तदनन्तरम् । तारञ्च भुवनेशानीं त्रिपुरायास्त्रयं ततः ॥
नमः शिवाय विद्येयं दशार्णा परिकीर्त्तिता । अनेन मनुना मन्त्री स्वलिङ्गे पूजयेच्छिवम् ॥
यजेत्तत्पुरुषाघोरसद्योवामेशसंज्ञया । निवृत्तिश्च प्रतिष्ठां च विद्यां शान्तिन्ततः परम् ॥
शान्त्यतीतां च संपूज्य षडङ्गावरणं यजेत् । समग्रविद्यामुच्चार्य तत्त्रिकोणे प्रपूजयेत् ॥ १३०
पुष्पं धूपादिकं दत्त्वा निर्विकल्पमनाः स्वयम् । सर्वसंक्षोभणीं मुद्रां बद्ध्वा योनिं विचालयेत् ॥
मध्यमे मध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते । तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ॥
एषा तु परमा मुद्रा सर्वसंक्षोभणी मता । क्षोभयेदथवा मन्त्री गजहस्ताख्यमुद्रया ॥
अधोमुखं दक्षपाणिं निधायाऽङ्गुष्ठके समे । निःक्षिपेदङ्गुलीः सर्वा गजतुण्डाकृतिर्यथा ॥
गजहस्ता महामुद्रा कथिता सिद्धिदायिका । उच्चरेद्भगमालाञ्च द्राविणीबीजमुच्चरन् ॥ १३५
अक्षुब्धमनयोर्योगे महाबिन्दुः प्रजायते । रजोमयं रजः साक्षात् सम्भिदेव न संशयः ॥
प्रकृतिः परमेशानी बीजं पुरुष उच्यते । शिवशक्तिसमायोगो योग एव न संशयः ॥
शीत्कारो मन्त्ररूपस्तु वचनं स्तवनं भवेत् । आलिङ्गनञ्च कस्तूरी कर्पूरं चुम्बनम्भवेत् ॥
नखदन्तक्षतादीनि पुष्पमालादिपूजनम् । लीलादिकं धूपदीपं कुचमर्दं शिवार्चनम् ॥
मैथुनं तर्पणं विद्धि वीर्यपातो विसर्जनम् ।कुलद्रव्येण संशोध्य शिवशक्तिमयो भवेत् ॥ १४०
वीर्यामृतं परंब्रह्म हुनेद्राहु मुखाम्बुजे । कुण्डे त्रिगुणसम्पन्ने श्रीबिन्दुनिलये परे ॥
परापरविभागेन कुलीनो विश्वपूजितः । विविक्तुः कुतुसनपरो जायते गुरुतल्पगः ॥
प्रकृतञ्च समाप्याथ गृहीत्वा द्रव्यमुत्तमम् । तर्पयित्वा महादेवीं शक्तये दक्षिणां ददेत् ॥
सुवस्त्राभरणाद्यैश्च शक्तिश्च परितोषयेत् । त्रिविधं त्रिपुरायाश्च कथितं पूजनं महत् ॥
अतएव महाप्राज्ञो निर्विकल्पः सदा भवेत् । तदा सुविस्तरैः स्तवैः सर्वाणि परिशोधयेत् ॥ १४५
निर्विकल्पतया गोत्रयज्ञे दोषो न विद्यते । अश्वमेधादियज्ञादौ वाजिहत्या कथम्भवेत् ॥
फलं क्षीरं घृतं चैव मधु मौरेयमैक्षवम् । पैष्टीभवं धान्यभवं तथा चक्रविनिर्मितम् ॥

सहकारभवं चैव विविधं वस्तुभेदतः । मादकं धर्मसंछेदात् वर्ज्यमाहुर्मनीषिणिः ॥
ज्ञानेन संस्कृते तत्तु महापातकनाशनम् । ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकान् ॥
नाशयेत् पूजनाच्चैव निर्विकल्पः स मन्त्रवित् । विचारयेत् सदा सर्वं सत्तर्केण सुसाधकः ॥ १५०
पयः पिवन्तीह देवा गवां नाश्नन्ति शोणितम् । मीनं न भुञ्जते हन्त विधवा तत् कथं पयः ॥
पिवन्ति संसर्गदुष्टं यथान्यदपि वस्तुषु । जलं जलचरं विद्धि घटपूर्णं समानयेत् ॥
स्थापितं तद्धि सप्ताहं जलं जीवसमन्वितम् । अनामिषं नास्ति किञ्चित् सर्वं क्षीरादिकन्तथा ॥
शमीवृक्षे यथा वह्निः सदा तिष्ठति नित्यशः । सर्वभूतेषु विज्ञानं तथा ज्ञेयं सुसाधकैः ॥
काष्ठादिघर्षणाच्चैव प्रकटो वह्निरुच्यते । तत्काष्ठं दह्यते तेन तथा ब्रह्ममयं जगत् ॥ १५५
पापपुण्यविनिर्मुक्तं ज्ञानमेतदुदाहृतम् । यज्ञयुक्तस्य नान्यस्य अन्यथा पातकम्भवेत् ॥
मादकं वस्तु सकलं वर्जयेल्लवणादिकम् । धर्माधर्मपरिज्ञानात् संस्काराच्च पवित्रता ॥
विन्मूलस्त्रीरजो वापि नरास्थि सकलन्तथा । विचारयेन्मन्त्रवित्तु भ्रान्तिरेव न संशयः ॥
स्त्रीरजः परमं द्रव्यं देहस्तेन प्रजायते । कथं तद्दूषणं येन प्राप्यते परमम्पदम् ॥
पुरुषस्य यद्व वीजं विन्दुरित्यभिधीयते । विन्दुस्तु परमं द्रव्यं कायोऽयं शिवरुपकः ॥ १६०
शिवतत्त्वेन चास्थ्यादिदूषणं नास्ति वैन्दवे । पृथिव्यापस्ततो वायुराकाशं चन्द्रसूर्यकौ ॥
एतैः स्थूलशरीरन्तु शुक्रशोणितसम्भवम् । पितृतस्त्रीणि जायन्ते मज्जास्थिस्नायुरेव च ॥
मातृतस्त्रीणि जायन्ते त्वङ्मांसशोणितानि च । षाट्कौषिकमिदं प्रोक्तं शरीरं परमर्षिभिः ॥
मूलशुद्धिः सर्वशुद्धिरिति न्यायः प्रवर्त्तते । शरीरं यदि शुद्धं स्यात्तदा तत्र न दूषणम् ॥
सर्वथा नैव दोषोऽस्ति तथा शुक्रेषु निश्चितम् । ततः पवित्रं देहस्य कारणं केन दूष्यते ॥ १६५
ज्ञानमार्गेण सकलं निर्विकल्पं न दूषणम् । सविकल्पो यदि भवेत् पापभाग्जायते नरः ॥
अन्नं ब्रह्ममयं विद्धि तेन यस्य तु सम्भवः । नानाजीवमयं तत्तु पुरीषं केन दूष्यते ॥
नानाविधा हि सततं देवताः सलिले स्थिताः । तेनोदकेन यज्जातं मूत्रं केन च दूषितम् ॥
गोमूत्रप्राशनं विप्रै र्गोमयस्य च भक्षणम् । मले मूत्रे च यो दोषो भ्रान्तिरेव न संशयः ॥
पवित्रं सकलं चैव वासना कुत्सिता भवेत् । ततो विचार्य मतिमान् साधकस्तर्कशोधितः ॥ १७०
मायामूलमिदं सर्वं ततो जातमिदं जगत् । पुज्यपूजकभेदश्च मिथ्यैव परमार्थतः ॥
तस्मात् सर्वप्रयत्नेन ज्ञानमार्गेण शोधयेत् । सर्वं ब्रह्ममयं विद्धि सत्तर्केण सुसाधकः ॥
प्रकृतञ्च समाप्याथ गृह्णीयाद्द्रव्यमुत्तमम् । तर्पयित्वा महादेवीं शक्त्या यद्दक्षिणां ददेत् ॥
त्रिविधं त्रिपुरायास्तु कथितं पूजनं महत् । वक्ष्येऽहं सर्वशाक्तानां दूतीयजनमुत्तमम् ॥
पीठपूजाविधिं कृत्वा पूर्ववत् साधकोत्तमः । संस्थाप्य तत्र शक्तिञ्च पूर्ववदपि पूजयेत् ॥ १७५
भक्तिभावेन संपूज्य नायिकाञ्च यथोदिताम् । पूजयेच्च ततस्तस्यां पञ्च कामान् समाहितः ॥
मायां कामं तथा पूर्वं ब्लूं स्त्रीञ्च यथाक्रमात् । कामवीजञ्च कन्दर्पं मन्मथञ्च ततः परम् ॥

मकरकेतनं चैव मनोभवञ्च ङेयुतम् । प्रणवादिनमोऽन्तञ्च क्रमेण गन्धपुष्पकैः ॥
अर्चयित्वा चतुर्दिक्षु पूजयेत्तदनन्तरम् । वटुकं भैरवं चैव दुर्गाञ्च क्षेत्रपालकम् ॥
तस्या मूर्ध्नि त्रिकोणञ्च यन्त्रमालिख्य साधकः । महाप्रेतासनं मध्ये बालामेव प्रपूजयेत् ॥ १८०
मौलौ गणेशं केशाग्रे कुलाध्यक्षं ललाटके । दुर्गां भ्रुवोस्तथा लक्ष्मीं रसनायां सरस्वतीम् ॥
स्तनद्वये वसन्तञ्च मदनं चैव पूजयेत् । मुखे सुधानिधिं पृष्ठे ग्लुं वीजानन्तरोदितम् ॥
दक्षिणांशं समाश्रित्य आशिरश्चरणावधि । पूज्याः कामकलास्तस्याः साधकोऽङ्गेषु सर्वशः ॥
श्रद्धा प्रीतिस्तथा तुष्टिर्धृतिश्च तदनन्तरम् । भूतिः कान्तिर्मनोज्ञा च विमला मोदिनी तथा ॥
मोघा मनोभवकरी प्रमदा मोहिनी तथा । दीपनी शोषणी चैव वशङ्करी तथा पुनः ॥ १८५
रञ्जनी चैव कामस्य कलाः स्वरविराजिताः । ततश्चन्द्रकलाः पूज्या आशिरश्चणावधि ॥
पूषा वशा सुमना च रतिः प्रीतिर्धृतिस्तथा । ऋद्धिश्च सौम्या मरीचिर्वहुमाया ततः परम् ॥
मदिरा शशिनी छाया तथा सम्पूर्णमण्डला । तुष्टिस्तथाऽमृता चैव पूज्याश्चन्द्रकला इमाः ॥
पूजयेन्मदनागारे रक्तचन्दनभूषिते । भगमालामनुं प्रोच्य पूजयेत्तदनन्तरम् ॥
वाग्भवं भुवनेशीञ्च कमला वाग्भवं ततः । जं ब्लुञ्चैव ततः क्लिन्ने सर्वाणीति ततो वदेत् ॥ १९०
भगानीति ततः पश्चाद्वशमानय तत्परम् । स्त्रीं स्फ्रीं क्लेदिनीवीजं क्लीं क्लीं च ततः परम् ॥
भगमालिन्यै नमः स्वाहा पूजयेच्चक्रमध्यगे । पूजयित्वा ततश्चक्रं निजदेवीं ततो यजेत् ॥
विधिवत् पूजयित्वा च गन्धैः पुष्पैस्तथाऽक्षतैः । धूपैर्दीपैश्च नैवेद्यैर्विविधैः कुलसाधकः ॥
विधाय वन्दनं चैव तदुच्छिष्टं स्वयं हरेत् । अर्चयेद्गन्धपुष्पाद्यैः स्वशिवं तदनन्तरम् ॥
मूलमन्त्रं समुच्चार्य प्रणवं भुवनेश्वरीम् । नमः शब्दं ततः पश्चात् शिवायेति ततो वदेत् ॥ १९५
यजेत्तत्पुरुषाघोरसद्योवामेश्वरानपि । निवृत्तिञ्च प्रतिष्ठां च विद्यां च तदनन्तरम् ॥
शान्तिञ्च शान्त्यतीतां च षड्ङ्गावरणं ततः । समग्रविद्यामुच्चार्य त्रिकोणं चैव पूजयेत् ॥
अवधूतेश्वरी कुब्जा-कामाख्या समया अपि । वज्रेश्वरीकालिके च तथा दिक्करवासिनीम् ॥
महाचण्डेश्वरीतारे पूजयेत्तत्र साधकः । तदनुज्ञां ततो लब्ध्वा भुक्त्वा ताम्बूलमुत्तमम् ॥
स्वशिवं तत्र निःक्षिप्य गजहस्ताख्यमुद्रया । प्रजपेत् क्षोभरहितश्चाष्टोत्तरसहस्रकम् ॥ २००
शतमष्टोत्तरञ्चापि अक्षोभस्थिरमानसः । जपान्ते तज्जपं देव्यै समर्प्य तदनन्तरम् ॥
क्षण्धां मनोभवसुखैः पूजयेत् सुचिरं वसेत् । गलच्चन्द्रद्रवं तस्माद्गृहीत्वा तर्पयेच्छिवाम् ॥
स्तुत्वा प्रदक्षिणीकृत्य विसर्जयेदनन्तरम् । विसर्जनं विधायाथ शक्तिञ्च परितोषयेत् ॥
विधिवद्दक्षिणां दत्त्वा अन्नपानादिभिस्तथा । एवं यजनमात्रेण मन्त्रसिद्धिर्न संशयः ॥
अथान्यत् सम्प्रवक्ष्यामि द्वुतीयागमनुत्तमम् । सम्प्राप्य दिवसं पूर्वंदेवीञ्च विधिवद्भगे ॥ २०५
पूजयित्वा जपेन्मन्त्रमयुतद्वितयन्तथा । तस्य लक्ष्मीर्महाविद्या भवेच्च भुवि दुर्लभा ॥
अष्टमीतिथिमासाद्य पक्षयोरुभयोरपि । आमन्त्र्य विधिवद्योनिं तत्रैव योगिनीं यजेत् ॥

दृश्चात् सम्पूज्य देवेशीं मूलमन्त्रञ्च साधकः । षट्सहस्रं दिवारात्रौ जप्त्वा मन्त्रमनन्यधीः ॥
सम्प्राप्य महतीं विद्यां देवीपुत्रो भवेद्भुवि । अथातः सम्प्रवक्ष्यामि प्रकारान्तरमुत्तमम् ॥
योनौ सम्पूजयेद्देवीं सर्वदुःखनिवारिणीम् । भगाद्यैर्भगमामन्त्र्य भगे भगवतीं ततः ॥ २१०
ततो वै लभते सिद्धिं मन्त्रस्य लक्षमानतः । द्विलक्षेण महावाग्मी त्रिलक्षेण महाकविः ॥
वेदलक्षेण वेदस्य साधकः पारगो भवेत् । वाक्सिद्धिश्च भवेत्तस्य पञ्चलक्षप्रमाणतः ॥
रसलक्षैर्भवेत्तस्य अणिमादिगुणाष्टकम् । सप्तलक्षेण वीरेन्द्रो जीवन्मुक्तो भवेन्नरः ॥
अत ऊर्ध्वं न जानामि शिव एव न संशयः ॥ विधिवच्छक्तिमासाद्य साधकः स्थिरमानसः ॥
सम्पूज्य विधिवद्भक्त्या योनौ मूलं न्यसेत्ततः । रात्रौ जागरणं कृत्वा हविष्याशी जितेन्द्रियः ॥ २१५
योनिं स्पृष्ट्वा जपेन्मन्त्रमेकाकी लक्षमानतः । जायते मन्त्रसिद्धिस्तु नात्र कार्या विचारणा ॥
सर्वसिद्धिः करे तस्य सत्यं सत्यं सुनिश्चितम् । अथवा विषुवे चैव मासान्तपक्षयोरपि ॥
अष्टम्याञ्च चतुर्दश्यां चन्द्रसूर्यग्रहे तथा । श्मशाने वा यथाशक्त्या गुरोर्वा शिवसन्निधौ ॥
लतामानीय यत्नेन योनौ चक्रं यथाविधि । लिखनञ्च प्रकुर्वीत कुङ्कुमागुरुचन्दनैः ॥
मन्त्रञ्च प्रलिखेत्तस्यामावाह्य परमेश्वरीम् । सम्पूज्य विधिवद्भक्त्या साधकः स्थिरमानसः ॥ २२०
जपेन्मन्त्रं दिवारात्रौ योषितां योनिदेशतः । लक्षमेकं तदूर्ध्वं वा दशभिर्होममाचरेत् ॥
पूजाञ्च विधिवत् कृत्वा यथाविभवविस्तरैः । परितोष्य गुरुं पश्चान्मन्त्रसिद्धिश्च जायते ॥
महावाग्मी भवेत् सोऽपि धनवान् राजवल्लभः । लक्ष्मीस्तस्य सदा गेहे वाणी वक्त्रे सुनिश्चितम् ॥
भुवि शक्रसमो वीरो जीवन्मुक्तः प्रजायते । अथवान्यप्रकारेण दूतीयजनमुत्तमम् ॥
तत्र तां स्थापयेद्दूतीं पूजयेच्च यथाविधि । वस्त्रालङ्करणं चैव दत्त्वा तस्यै यथोचितम् ॥ २२५
धूपयित्वा रक्तवस्त्रं दूतीं कुर्यात् सुलक्षणाम् । पद्मं भूमौ समालिख्य षट्कोणान्तर्गतं लिखेत् ॥
तस्योपरि गतां नारीं निर्जने भूषणान्विताम् । ततस्तां गन्धपुष्पाद्यैर्नानोपहारविस्तरैः ॥
देवीरूपेण सम्भाव्य पूजयेत्तां यथाविधि । तस्या गात्रे न्यसेन्मन्त्रं पञ्चबाणान् क्रमेण तु ॥
स्वकल्पोक्तक्रमेणैव न्यासजालं प्रविन्यसेत् । दीक्षयित्वा तन्मूलेन देवीबुद्ध्या यजेत्ततः ॥
योनौ वा पूजयेद्देवीं यस्माद्योनिमयी शिवा । योनौ कामेश्वरीं चैव नाभौ वज्रेश्वरीं ततः ॥ २३०
हृद्वक्त्रस्तनमध्येषु पूजयेत् परदेवताम् । योनिं सदाऽक्षतां कृत्वा जपेद्विद्यां ततः पराम् ॥
अयुतञ्च जपं कृत्वा सर्वसिद्धीश्वरो भवेत् । शक्तिमानीय विधिवत् पूजयेद्योनिमण्डले ॥
संपूज्य निजदेवीञ्च सायुधां सपरिकराम् । भगिनीं भगजिह्वाञ्च भगास्यां भगमालिनीम् ॥
भगदन्तां भगाक्षीञ्च भगवर्णां भगत्वचाम् । भगस्तनीं भगाङ्गीञ्च भगस्थां भगसर्पिणीम् ॥
भगे भगवतीं तस्याः सम्पूज्य भगमालया । वाग्भवं कामबीजञ्च कमलाबीजमेव च ॥ २३५
इति बीजत्रयं दत्त्वा ङेयुताश्च नमोऽन्तिकाः । पूजयित्वा ततः पश्चान्मूलमन्त्रं जपेत्ततः ॥
एकायुतजपं कृत्वा सर्वसिद्धिपरायणः । सर्वशास्त्रार्थवेत्ता च सर्वगः सर्ववित् प्रभुः ॥

इदानीं कथ्यते दूतीयागस्य महिमा भृशम्। योषितां योनिमास्थाय सर्वसिद्धिर्न संशयः॥
एतत् पूजनमम्बायाः सर्वतन्त्रेषु गोपितम्। इत्थं पूजाविधिं कृत्वा सर्वसिद्धियुतो भवेत्॥
लभते विमलां वाणीं कवीनामग्रणीर्भवेत्। ऐश्वर्यमतुलं प्राप्य वशीकुर्याज्जगत्त्रयम्॥
सिद्धगन्धर्वदेवैश्च किन्नरैर्दानवैस्तथा। राक्षसैर्मनुजैर्नित्यं पूज्यो भवति साधकः॥
सर्वेषां वल्लभः सोऽपि योगिनीनां सुदुर्लभः। अन्ते च रमते देव्या साक्षात् स्मरहरोपमः॥
चन्दनागुरुगन्धाद्यैर्लताः सम्पूज्य यत्नतः। सर्वपापविनिर्मुक्तो रमेत् कल्पायुतं भुवि॥
वस्त्रालङ्कारमाल्यैश्च तोषयेद् यदि कामिनीम्। अतुलां श्रियमाप्नोति स गच्छेत् पार्वतीपदम्॥
मत्स्यमांसदधिक्षौद्रपिष्टकैः पायसादिभिः। भोजयेद्युवतीं यस्तु स भवेत् पृथिवीपतिः॥
कायेन मनसा वाचा सुन्दरीं यश्च तोषयेत्। स भवेत् साधकश्रेष्ठो मातॄणाञ्च भवेत् प्रियः॥
बालिकां यदि पश्येच्च निर्जने च दिगम्बरीम्। तदा तदा प्रपूज्येत देवीं ध्यात्वा यथाविधि॥
स च सर्वप्रियो भूत्वा वाग्मी एककविर्भवेत्। एतत्तु सर्वभूतानां तन्त्राणां गोपितं भुवि॥
ज्ञात्वा गुरुमुखात् सर्वं शिवतुल्यो भवेन्नरः। निर्विकल्पस्तु मन्त्रज्ञो भवेद् वै साधकः सदा॥
काम्यं नैमित्तिकं ज्ञात्वा चण्डिकां परिपूजयेत्। दीक्षितस्याऽधिकारोऽत्र नान्यस्यैव कदाचन॥
अथ सर्वत्र जप्तव्यं अष्टोत्तरसहस्रकम्। अमृतत्रयसंयोगात् दुष्टमन्त्रोऽपि सिध्यति॥
एवं भूतलिपिश्चैव हृल्लेखा मोदिनीत्रयम्। त्र्यमृतेन पुटीकृत्य यो मन्त्रं भजतेऽचिरात्॥
क्रमोत्क्रमाच्छतावृत्त्या तस्य सिद्धो भवेन्मनुः॥ पञ्चह्रस्वा सन्धिवर्णा व्योमेराग्निजलन्धरा॥
अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात्। पञ्च वर्गाक्षराणि स्युर्वान्तं श्वेतेन्दुभिः सह॥
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः। पुरश्चर्यादिभिर्मन्त्रो यदि सिद्धो भवेन्न हि॥
उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः। द्रावणं बोधनं वश्यं पीड़नं पोषशोषणम्॥
दहनान्तं क्रमात् कुर्यात्ततः सिद्धो भवेद् ध्रुवम्। वारुणेनैव बीजेन ग्रथनं कारयेन्मनुम्॥
तन्मन्त्रयन्त्रमालिख्य शिङ्कपूरकुङ्कुमैः। उशीररोचनाख्यां ंत्रं संग्रथितं लिखेत्॥
क्षाराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत्। पूजनाज्जपनाद ाद् द्रावितः सिद्धिदो मनुः॥
द्रावितोऽपि न सिद्धश्चेद्बोधनं तस्य कारयेत्। सारस्वतेन व ेन सम्पुटीकृत्य तं जपेत्॥
एवं कृते न सिद्धिश्चेद्वशीकुर्यात्ततः परम्। आरक्तचन्दनं कुष्ठं हरिद्रा मदनं शिला॥
एतैस्तु मन्त्रमालिख्य भुर्जपत्रे सुशोभने। धार्यं कण्ठे न चेत् सिद्धिः पीड़नं तस्य कारयेत्॥
अधरोत्तरयोगेन पादानि परिजप्यते। ध्यायेत्तु देवतां तद्वत्तदधोत्तररूपिणीम्॥
विद्यामादौ च दुग्धेन लिखित्वाऽऽक्रम्य चाङ्घ्रिणा। तथाभूतेन मन्त्रेण होमं कार्यं दिने दिने॥
पीड़ितो लज्जयाऽऽविष्टः सिद्धः स्यादथ पोषयेत्। बालायास्त्रितयं बीजमाद्यन्ते तस्य योजयेत्॥
गोक्षीरमधुना लिख्य विद्यां पाणौ विधारयेत्। पोषितोऽयं भवेत् सिद्धो न चेत् कुर्वीत शोषणम्॥
द्वाभ्याञ्च वायुबीजाभ्यां मन्त्रं कुर्याद्विदर्भितम्। एषा विद्या गले धार्या लिखिता शवभस्मना॥
शोषितोऽपि न सिद्धश्चेद्दहनीयोऽग्निबीजतः। आग्नेयेन तु बीजेन मन्त्रस्यैकैकमक्षरम्॥
आद्यन्तमध उर्ध्वञ्च योजयेद्दाहकर्मणि। ब्रह्मवृक्षस्य तैलेन मन्त्रमालिख्य धारयेत्॥
धारणात् कण्ठदेशे तु त तः सिद्धो भवेन्मनुः। एवं क्रमेण कुर्वीत पुरश्चरणमुत्तमम्॥
अथान्यत् सम्प्रवक्ष्यामि मन्त्रसिद्धेस्तु कारणम्। मन्त्रसिद्धिर्भवेद्येन पुरश्चर्यादिभिर्विना॥
शिवशिखिसितभानुं पञ्चमान्त्यस्वराढ्यं द्वितयमिदमपूर्वं बीजमुग्रप्रभायाः।
क्षणमपि रमणीनां मण्डलान्तर्विभाव्य क्षपयति दुरदृष्टं वादिराड् जायते सः॥

स जयति रिपुवर्गान् वादिराजान् विवादे नमयति रमणीनां चित्तचौरश्चिरायुः
कथयति कविराजैरप्यदृष्टं सुकाव्यम् मधुमतिरपि हेया किंपुनः सिद्धिसङ्घाः ॥
कुलयुवति सुयोनौ मन्त्रवर्णान् विलिख्य निखिल निगमवर्णान् सुप्तदोषादिदुष्टान् ।
विदित गुरुकुलान्तर्वाह्यवर्त्मा विधिज्ञो मनुपुटितपटीयान् साधयेत् शान्तचेताः ॥
कुलपथमनुसन्धायामितायां सुभूमौ तव जननि जनो यस्तर्पयेत्तीर्थतोयैः ।
रुधिरतरसुपुष्पैर्गन्धमाल्यानुलेपै रचित युवतिवेशस्तद्धिया ध्यायते सः ॥
परिचरति समस्तैर्न्यासपूर्वैः प्रसिद्धै स्तव परिकरजालैर्योनिचक्रे प्रपूज्य ।
सुविमलकुलजां त्वां ह्रीघृणावर्जितो यः स्वयमपि रचिताङ्गः क्षोभकृद्योगिनीनाम् ॥
पशुरिपुकुलचक्रं संस्पृशन् मध्यशाखं सुरतरु सुरनाथः शापभ्रष्टः सुरेशः ।
कुलपतिकुलनाथस्तद्द्वयं योजयित्वा मनुपुटितविमृग्यं योजयेत्तद्बहिर्यः ॥
जननि तव कलानां कोविदः कामरूपः कुमतिरहितचित्तः संलिखेत्तां त्रिधारैः ।
विगतभय विवादध्वान्तजालः सुधांशु स्तव चरणतलान्तर्धूलिजालैर्विशालैः ॥
परिजनितवपु स्तद्धमभिर्देव पूज्यैः परिचरति सुविज्ञो मोक्षचर्याधिपः सः ।
मदनमदवधूनां वीजमुद्धृत्य शक्तिं तदनु कठिनवीजं लोकधात्रीं तदन्तः ॥
यदि जपति मदन्तर्भावमासाद्य सद्यः सुरनगरगतिस्तैः सिद्धवर्गैः स पूज्यः ।
शिवभृगुमदपृथ्वीशक्तियुक्तं सुसिद्धं हरिहरचतुरास्यस्वस्वभूतिप्रसूतम् ॥
परमपुरुषसंज्ञः क्षोभकृत् कामिनीनामधिपतिरपि वाचां श्रीपतिः सार्वभौमः ।
भृगुमदकठिनाधः कामवीजं तदग्रे भुवनभयविनाशः क्षोभिणीं योजयित्वा ॥
जपति यदि सकृद्वा चिन्त्यते वीरसिंहः कुलयुवतिकुलान्तः क्षोभकृत् कामभावात् ।
मदनमदतलाधः शक्तिवीजं नियोज्य स्मरहर हरिरूपो कामरुपः कुवेरः ॥
रिपुकुलहरिणाक्षीलोचनाम्भोजविप्रुट् प्रसभजलनिषेकात् खण्डितान्ताघतापः ।
शिवभृगुमदमूलं लोभमूलं समूलं भजति यदि गुरूणां वर्णमूलं विमृग्यम् ॥
निधिपतिरपि नाथो गोष्पतिः क्षुद्रचेता यदि भवति तदेतन्मुख्यमुर्वीपतित्वम् ।
वरणरणविवर्जं घ्राणमेवं विवर्ज्यं तदुपरि मृगचिह्नं द्वन्द्वमेतत् भवान्याः ॥
निखिल मनु वराणां मुख्यदानैकदक्षः स कुशुमशरधर्मंक्षोभकृन्मन्त्रराजः ।
अमलशिरसि धर्मं वादिराजं स्वतन्त्रं तव समनय युक्तं वीजमन्यद्भवान्याः ॥
द्वितयमपि विमानं वक्तुमीशो महेशः किमिह कमलजन्मा जन्मधारासहस्रैः ।
इह जपति य एनं मन्त्रराजं स्वभाग्यैः भजति जननि युष्मत्पादपद्मोत्थभक्त्या ॥
त्यजति परपुमांसं मादृशं चापि काले न खलु वपुरनर्घ्यं तस्य काचित् कदाचित् ।
विहित गुरुमुखाद्वा वालकाद्वा पशोर्वा लिखितमपि स्ववुद्ध्या प्राप्य कस्मादकस्मात् ॥
स्मररिपु पुरपारे मोक्षपूर्याधिपारे परमपदविलीनः सर्वसौभाग्य भोगैः ।
अनलपुर विभागे कालिकावर्णवीजं तदपि यदि विदध्याद्दिग्युतं दन्तवर्णम् ॥
नयन युतलकारं मस्तके नामयुक्तं तदनु विकटदंष्ट्रासोत्कटं वीजयुक्तम् ।
यदि जपति समस्तं गुह्यगुह्यातिगुह्यं त्रिजगति किमिहास्ते कुशलम्यं कथञ्चित् ॥
क्रम पठितमपूर्वं सर्वमेवानुमध्यं मनुरपरमवाच्यं तस्य मध्यस्वरूपम् ।
भजति यदि चिदानन्दधृक्केवलोऽसौ विपिन भुवि च मध्ये कौतुकान् मां मनुष्यः ॥

इति ज्ञानानन्द परमहंसविरचिते कौलावलीनिर्णये सप्तदशोल्लासः ॥

## षष्टादश उल्लासः

अथ वक्ष्ये सिद्धिचिह्नं साधकस्य यथा भवेत् । अकस्मात् संलभेद्गन्धं धूपस्य कुसुमस्य वा ॥
सदा वा प्रियसम्भाष्यं लभ्यते योषितामपि । स्वप्ने वृषं गजाश्वं वा यद्वाऽऽरोहति साधकः ॥
सिद्धमन्त्रो भवेत् सोऽपि नात्र कार्या विचारणा । स्वप्ने वा जायते योषिद्वृन्दैः सम्मिलनं निशि ॥
गजादिशैलशृङ्गेषु विहारो राजदर्शनम् । राज्ञान्तथाऽङ्गनानाञ्च दर्शनं नृत्यगीतयोः ॥
सौधगेहं तथा मञ्चं प्रासादञ्च मनोहरम् । रथं वा तरणिं वापि स्वप्नेष्वावाहयेत्तु यः ॥
सम्यक्सिद्धिर्भवेत्तस्य शिवः सोऽपि न संशयः । ध्वजञ्च प्रतिमां चैव राजानं रुधिरन्तथा ॥
रुधिरालेपनं स्वाङ्गे मदिरालेपनन्तथा । मदिरालोकनं मांसं स्त्रियं वा चारुहासिनीम् ॥
स्त्रीभिर्वा वेष्टितो यस्तु स्वप्ने भवति साधकः । मन्त्रसिद्धिर्भवेत्तस्य सत्यमेव न संशयः ॥
गोमांसं वापि चान्यस्य भक्षयेद्योऽपि मांसकम् । लभेद्वा भक्षयेद्वाऽपि स्पर्शयेद्वा कदाचन ॥
देवतानरगन्धर्वनारीणां दर्शनं भवेत् । चरगोरुणितम्बाया वक्षोजमुखपङ्कजम् ॥
एतेषां तु फलं चैव परंगुर्वादिकं गुरुम् । तेषां प्रसादः स्नेहश्च वात्सल्यं प्रियदर्शनम् ॥
सिद्धिचिह्नं भुवि ज्ञेयं यदि न व्यपते मनः । यदि भाग्यवशाच्चैव कुलदृष्टिस्तु जायते ॥
अवार्धक्यं भवेत्तस्य सर्वसिद्धिः करे स्थिता । अफालपनसं चैव भक्षणं दर्शनन्तथा ॥
अगस्त्यागमनं चैव गुरोः सन्दर्शनन्तथा । परमान्नभक्षणञ्च शोणितञ्च विशेषतः ॥
दिव्यान्नं वापि भुक्त्वा च सिद्धो भवति साधकः । साधकं द्रव्यरूपञ्च देवतां वा प्रणश्यति ॥
खड्गं वा फलकं वापि अमृतं वापि पुस्तिकाम् । सिद्धिद्रव्यं शवं चैव वसनाभरणादिकम् ॥
रक्तमाल्यं रक्तपुष्पं स्वप्ने प्राप्नोति साधकः । सिद्धः सोऽपि भवेत् सत्यं संशयो नास्ति निश्चितम् ॥
गजं वा तुरगं वापि शिवलिङ्गञ्च पश्यति । पीठादिगमनं तत्र देवतादर्शनन्तथा ॥
उद्यानं काननं वापि भूदेवयतिदर्शनम् । बालकं भिक्षुकं चैव फलादीनान्तु लोलुपम् ॥
पशुपक्षिफलादीनां विश्वासः प्रियदर्शनः । मनसा भाविते कार्ये शङ्खादिध्वनिरुत्सवः ॥
वेणुवीणारवं गीतं विचित्रदर्शनन्तथा । अज्ञातजनसम्वादो नष्टद्रव्योदयन्तथा ॥
अकस्माद्भावसिद्धिस्तु अऽक्षितजनस्तुतिः । क्षत्रस्य महती पूजा सुकृती च कृतस्तुतिः ॥
अदृष्टशास्त्रविज्ञानं तेजस्वी जनवल्लभः । मन्त्रलाभस्तथा स्वप्ने गुरूणां दुहितुस्तथा ॥
पत्नीनां साधकानाञ्च उत्कटोत्कटदर्शनम् । असुगन्धिः सुगन्धिश्च श्रद्धा पुष्पोद्भवस्तथा ॥
स्वप्ने चैव पुरश्चारी पुरश्चरणकर्मणि । इति विज्ञाय वीरेन्द्रः प्रयोगञ्च समाचरेत् ॥
अथ निन्द्यानि वक्ष्यामि विघ्नानर्थकराणि च । कृष्णवर्णभटं स्वप्ने प्रहारस्तेन मेलनम् ॥
मैथुनं परनारीभिर्विनाशो मरणन्तथा । राज्यक्षोभवह्निवायुजन्तुभिर्वधदर्शनम् ॥
गुरोराक्षेपसम्पत्तिर्जन्तूनां व्याधिसाधनम् । अन्यमन्त्रार्चने श्रद्धा स्वदेवार्चननिन्दनम् ॥

असिद्धार्थंकुले तत्र सिद्धार्थजपमाचरेत् । गणेशं वटुकं पश्चात् क्षेत्रेशं योगिनीस्तथा ॥
पूजयेद्रातिसमये वलिं चैव सदाऽर्पयेत् । कुमारं वटुकं भद्रं लक्ष्मीं सुचारुनायकम् ॥
स्वशक्तिं पञ्चक्षेत्रेशं योगिनीं योगिभिः सह । पूजयित्वा विधानेन वलिं पश्चान्निवेदयेत् ॥
ततः सिद्धो भवेन्मन्त्रो निर्विघ्नेन सुनिश्चितम् ॥ अथातः सम्प्रवक्ष्यामि काम्यप्रयोगमुत्तमम् ॥
रजोऽवस्थां समालोक्य तन्मूले स्वेष्टदेवताम् । पूजयित्वा महारात्रौ त्रिदिनं प्रजपेन्मनुम् ॥
लक्षपीठफलं चैव लभते साधकोत्तमः । वेतालपादुकासिद्धिं खड्गसिद्धिन्तथैव च ॥
अञ्जनं तिलकं चैव प्राप्नोति क्षोभवर्जितः । कुलागारं पुष्पिताया दृष्ट्वा यो जपते नरः ॥
अयुतैकप्रमाणेन साधकः स्थिरमानसः । केवलं गुप्तभावेन स तु विद्यानिधिर्भवेत् ॥
संस्कृताः प्राकृताश्चैव लौकिका वैदिकास्तथा । वशमायान्ति ते सर्वे साधकस्य न चान्यथा ॥
अथवा मुक्तकेशश्च भुवि भुक्त्वा सुसंयतः । प्रजप्य चाऽयुतं प्राज्ञः एतदेव फलं लभेत् ॥
नग्नां परलतां पश्यन् अयुतं यस्तु साधकः । प्रजपेद् यो भवेत् सद्यो विद्याया वल्लभः स्वयम् ॥
तस्य दर्शनमात्रेण वादिनः कुण्ठतां गताः । गद्यपद्यमयी वाणी सभायां तस्य जायते ॥
तस्य वाक्यपरिचयाज्जड़ीभवन्ति वाग्मिनः । तन्नाम्ना सुधियः सर्वे प्रणमन्ति मुदान्विताः ॥
हविर्भुक्त्वाऽथवा पूर्वक्रमेणैव फलं लभेत् । अथवा धनकामस्तु महदैश्वर्यकामुकः ॥
बृहस्पतिसमो यस्तु भवितुं कामयेन्नरः । अष्टोत्तरशतं जप्त्वा कुलमामन्त्र्य तत्त्ववित् ॥
मैथुनं यः करोत्येव स तु सर्वफलं लभेत् । अथवा हस्तमारोप्य स्थिरधीः पूतमानसः ॥
कवित्वं लभते सोऽपि अमृतत्वञ्च गच्छति । पृथ्वीमृतुमतीं वीक्ष्य सहस्रं यदि नित्यशः ॥
तदा वादी सुसिद्धान्ते ततः क्षितितलं विशेत् ॥ महाचीनक्रमे देवीं ध्यात्वा देवीं प्रपूजयेत् ॥
तद्द्रुमोद्भवपुष्पेण पूजयेद्भक्तिभावतः । स भवेत् कुलदेवश्च कुलद्रुमगतः शुचिः ॥
ब्रह्मतरोर्मूलपद्मे देवीं ध्यात्वा यथाविधि । तत्सुधाधारसारेण तर्पयेन्मातृकानने ॥
पद्मं दृष्ट्वा तथा विल्वं खञ्जनं शिखरन्तथा । चामरं रविविम्बञ्च तिलपुष्पं सरोवरम् ॥
त्रितयं वीक्ष्य जप्त्वा च शतशः शुद्धभावतः । मुखप्रसादं सुवचः सुलोचन सुहास्यकम् ॥
सुवेशं सुभगं गन्धं सुजनं सुखमेव च । लभते च यथासंख्यं साधकः स्थिरमानसः ॥
महाचीनद्रुमलता वेष्टितेन च यत् फलम् । तस्यापि षोड़शांशेन फलं नार्हन्ति ते शवाः ॥
शवासनाधिकफलं लतागृहप्रवेशनम् । लतारतेषु जप्तव्यं महापातकमुक्तये ॥
धनार्थी प्रजपेद्विद्यां परयोषित् समागमे । लताभावे समुत्सार्य स्वशुक्रं साधकोत्तमः ॥
अक्षय्यं प्रजपेन्मन्त्रं धर्मकामार्थसिद्धये । इति चीनक्रमेणैव तारा शीघ्रफलप्रदा ॥
गुरुवाक्यक्रमेणैव त्रिपुरा भुक्तिमुक्तिदा । महाचीनक्रमेणैव कालिका फलदायिणी ॥
सप्तसप्ततिभेदा या श्रीविद्या कथिता भुवि । तासान्तु समता ज्ञेया गुप्तसाधनसाधने ॥
चत्वारिंशत् प्रकारा या भैरवी विदिता भूवि । तासां तु समता ज्ञेया गुप्तसाधनसाधने ॥

या या विद्या महाचण्डास्तासामेवं विधिर्मतः । महाचीनक्रमेणैव छिन्नमस्ता तु सिद्धिदा ॥
सर्वा याश्चण्डिका विद्यास्तासां चैवं विधिः स्मृतः । यथा काली तथा तारा यथा बाला तथोन्मुखी ॥६०
यथा काली तथा दुर्गा यथा दुर्गा तथा जटा । यथाऽसौ त्रिपुरा बाला तथा त्रिपुरभैरवी ॥
सुन्दरी च तथा ज्ञेया मर्द्दिनी च तथा परा । अन्या या या महाविद्या तथा भवति निश्चितम् ॥
मन्त्रं यन्त्रं पृथग्भावात् साधनेनैकतां भजेत् । एतत्तन्त्रञ्च मन्त्रञ्च पुत्रेभ्योऽपि न दर्शयेत् ॥
अन्यथा प्रेतराजस्य भवनं याति निश्चितम् । अथातः सम्प्रवक्ष्यामि काम्यसाधनमुत्तमम् ॥
संयोज्य मूलमन्त्रान्ते क्रमोत्क्रमेण मातृकाम् । आमन्त्रयेत्ततः पश्चात् पञ्चविंशतिसंख्यया ॥ ६५
प्रातरेव जलं धीरो भावयेन्मातृकाल[म]यम् । तदम्बुपानतो मन्त्री वाग्मी द्रुतं कविर्भवेत् ॥
त्रिमासान्नाऽत्र सन्देहः षण्मासात् वाक्पतिर्भवेत् । काम्यकर्त्ता महावाग्मी भवेत् श्रुतिधरो नरः ॥
अष्टमात् सर्वमन्त्राणां पारगो विश्वपूजितः । सर्वज्ञतां लभेद्धीरो नात्र कार्या विचारणा ॥
द्विवर्षादष्टसिद्धिश्च त्रिवर्षात्तु शिवो भवेत् । प्रदीपकलिकाकारं जिह्वायां मूलमन्त्रकम् ॥
देवतां शुक्लवर्णाञ्च विभाव्य यो जपेन्मनुम् । त्रिमासादूर्ध्वतो मन्त्री पूर्ववत् फलमाप्नुयात् ॥ ७०
तत्तत्प्रकारभेदेन तत्तत्फलमवाप्नुयात् । प्रातरेव हि जप्तव्यमष्टोत्तरसहस्रकम् ॥
अथवाऽन्यप्रकारन्तु वक्ष्यामि तन्त्रवर्त्मना । बलिदानादिकं सर्वं विधाय पूर्ववद् बुधः ॥
श्मशानालयमागत्य मुक्तकेशो दिगम्बरः । जपेदयुतसङ्ख्यन्तु सर्वकामार्थसिद्धये ॥
महाचीनक्रमलतामज्जाभिर्विप्रपुत्रकम् । सहस्रं देवीमभ्यर्च्य श्मशाने साधकोत्तमः ॥
तदा राज्यमवाप्नोति यदि स न पलायितः । स्वगात्ररुधिराक्तैश्च बिल्वपत्रैः सहस्रशः ॥ ७५
श्मशानेऽभ्यर्च्य देवीन्तु वागीशसमतां व्रजेत् । श्मशानशयनो वीरः शवासनगतः शुचिः ॥
असकृत् प्रजपेन्मन्त्रं सर्वसिद्धिर्भवेत्ततः । कविर्वाग्मी धनी दक्षः सर्वयोषित्प्रियः सुखी ॥
जायते नात्र सन्देहश्चण्डिकासाधकः स्वयम् । क्षत्रविट्चौरभूतानि देवीं ध्यात्वा विनाशयेत् ॥
नाभिमात्रजले स्थित्वा देवीमर्कगतां स्मरन् । अष्टोत्तरशतं जप्त्वा साधको लभते श्रियम् ॥
रेतोयुक्तेन पुष्पेण अर्कस्येह सहस्रशः । श्मशानेऽभ्यर्च्य देवीन्तु सर्वसिद्धिन्तु विन्दति ॥ ८०
धनवान् बलवान् वाग्मी सर्वयोषित्प्रियो भवेत् । सुखी स्यान्नात्र सन्देहो महाकालवचो यथा ॥
च्छन् यो तं शा ग ने षि श्म येत् न्तं क गे त्य म प्र भ । रक्तचन्दनदिग्धाङ्गीं रक्तपुष्पैरलङ्कृताम् ॥
त जां कु गे वीं पू प्र भ जवापुष्पैर्विशेषतः । मन्त्रं प्रोच्चारयेत्तत्र ने ग वे गे श लिं प्र भ ॥
कुण्डगोलोद्भवैः पुष्पैः स्वयम्भूकुसुमेन च । पूजयित्वा तत्र देवीं यो वै ध्यायेच्च देवताम् ॥
तत्र गत्वा लभेत् सिद्धिं यदि वा न भयं व्रजेत् । अष्टम्याञ्च चतुर्दश्यां पूजयित्वा यथाविधि ॥ ८५
अर्घ्यं दत्वा ततः पश्चात् जवापुष्पञ्च बर्बराम् । चन्दनञ्चाऽर्ककुसुमं तथा श्वेतापराजिताम् ॥
अर्घ्यं दत्त्वा विशेषेण देवीमर्कगतां स्मरन् । अष्टोत्तरशतं जाप्यं यावज्जीवनसंख्यया ॥
मायासिद्धिमवाप्नोति सत्यं सत्यं न संशयः । प्रातः स्नानरतो मन्त्री नित्यमष्टोत्तरं शतम् ॥

अपेक्षस्याऽऽशु सिध्यन्ति धनधान्यादिसम्पदः । अनेन विधिना मन्त्री ग्रहक्षुद्ररिपून् जयेत् ॥
अथोच्यते पदाघातं देव्यास्तन्त्रविधानतः । स्वकल्पोक्तं विधायाऽथ साधको विजितेन्द्रियः ॥
सर्वद्रव्यसमायुक्तो देवताध्यानतत्परः । विवादे जपकाले वा यत्किञ्चित् कुलसाधने ॥
तत्रादौ चक्रमालिख्य सिन्दूररजसाऽऽप्लुतम् । रात्रौ प्रपूजयेद् गेहे स्थित्वा पदात्मिकां पराम् ॥
जप्त्वाऽयुतप्रमाणेन तथा चामन्त्रयेत्ततः । एहि मातर्जगद्धात्रि सञ्चारे चरणाकुले ॥
शुभाशुभमये रात्रे कथयस्व जगत्पते । एवं निमन्त्रयित्वा तु सप्तवारान् सुसंयतः ॥
भक्तिभावेन सम्पूज्य दत्त्वा च बलिमुत्तमम् । ततो वीक्षेच्चक्रराजं साधकः स्थिरमानसः ॥
पदाघातं समालोक्य ज्ञातव्यं तच्छुभाशुभम् । साधकाभिमुखं चिह्नं उभयोर्यदि चैकतः ॥
सव्यस्य दक्षिणस्यापि शुभं भवति निश्चितम् । विपरीतफलं दद्याद्विपरीते सुनिश्चितम् ॥
पद्ममध्ये शुभा रेखा शुभदा शुभयोगतः । विपरीतफलं तत्तु विपरीतश्च निश्चितम् ॥
क्षुद्रं क्षुद्रफलं प्रोक्तं दीर्घं दीर्घफलप्रदम् । अथातः पादुकामन्त्रं कथयामि समासतः ॥
पादुकां पूजयास्याद्य आद्यन्तमण्डितां वदेत् । सर्वभूते महाशक्तिः पादाग्रे या स्थिता यतः ॥
आस्तौ चरणौ पूज्यौ सर्वत्र भूतिमिच्छता । आद्यन्तरहिता देवी पादुकादिस्वरूपिणी ॥
योन्रितां योनिमास्थाय सर्वसिद्धिप्रदायिनी । स्वतन्त्रेयं महाविद्या न प्रकाश्या कदाचन ॥
संहारक्रमयोगेन देवी संहाररूपिणी । सृष्टिक्रमेण देवेशी महासृष्टिप्रवर्त्तिनी ॥
स्थितिक्रमेण सा देवी स्थितितत्त्वप्रवर्त्तिनी । ब्रह्मविष्णुस्वरूपा सा महादेवस्वरूपिणी ॥
आद्ये मधुमतीसिद्धिः संहारक्रमयोगतः । अन्ते क्षेत्रेण सिद्धिः स्याच्छेषे गन्धर्वयोनयः ॥
समुदाये महामोक्षं ददाति परमा कला । पादुका परमा विद्या सप्ताक्षरसमन्विता ॥
एतां विना महाविद्या नैव सर्वफलप्रदा । कथितेयं महाविद्या यत्नाद् गोप्या सदैव हि ॥
लोकस्नेहादिदानीं तु कथितश्च सुदुर्लभम् । एतत्तन्त्रश्च मन्त्रश्च प्रयोगश्च तथा परम् ॥
अतिभक्ताय पुत्राय प्राणदाय न दर्शयेत् । अन्यथा प्रेतराजस्य भवनं याति निश्चितम् ॥

इति ज्ञानानन्द परमहंसविरचिते कौलावली निर्णये अष्टादशोल्लासः ॥

---

## एकोनविंश उल्लासः

अथातः सम्प्रवक्ष्यामि षट्कर्मविधिमुत्तमम् । शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने ततः ॥
मारणं कर्मषट्कञ्च तेषां लक्षणमुच्यते । रोगकृत्या ग्रहादीनां निरासः शान्तिरीरिता ॥
वश्यं जनानां सर्वेषां विधेयत्वमुदाहृतम् । प्रवृत्तिरोधः सर्वेषां स्तम्भनं तदुदाहृतम् ॥
स्निग्धानां द्वेषजननं मिथो विद्वेषणं मतम् । सद्विद्यासिद्धिकालादीन् ज्ञात्वा कर्माणि साधयेत् ॥
पूर्वोक्तबलिमन्त्रेण बलिं दद्याच्चतुष्पथे । रात्रावेव प्रयोगादौ शिवायै च सुसिद्धये ॥
दिक्कालदेवतादींश्च ज्ञात्वा कर्माणि साधयेत् । जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ॥
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम् । उच्चाटने स्मृतो वायुर्भूयोऽग्निर्मारणे मतः ॥
स्वच्छं वियन् मरुत् कृष्णो रक्तोऽग्निर्विशदं पयः । पीता भूमिः पञ्चभूत रूपमेतदुदीरितम् ॥
वृत्तं दिवस्तत् षड्विन्दुलाञ्छितं मातरिश्वनः । त्रिकोणं स्वस्तिकोपेतं वह्नेरर्धेन्दुसंयुतम् ॥
अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम् । तत्तद्भूतसमाभानि मण्डलानि विदुर्बुधाः ॥
वर्णैः स्वैरञ्जितान्याहुः स्वस्वनामावृतान्यपि । शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः ॥

भूतानामुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयो
स्तत्राधो वसुधोदयं निशितधीर्घ्राणस्य दण्डस्पृशि ।
देवेऽधःस्पृशि वारिणो हुतवहस्योर्ध्वं गते तूदयं
तिर्यक् संस्पृशि मारुतस्य परितः स्पृष्टे मरुद्वर्त्मनः ॥
वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः
शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्नाय वह्नेः पुनः ।
शत्रोर्मारणदारणादिकरणेषूच्चाटनोच्छ्वासया
र्वायोः शान्तिकनिर्विषीकरणयोर्व्योम्नोहितश्चोदयः ॥

तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुते । यन्त्रं कुर्यात् रोचनया गुण्डिकया हरिद्रया ॥
गृहधूमचिताङ्गारविषैरथ क्रमेण तु । शीतांशुसलिलक्षौणीव्योमवायुहविर्भुजाम् ॥
वर्णाः स्युर्मन्त्रबीजानि षट्कर्मसु यथाक्रमम् । वश्यादौ लेखनी दूर्वा आकर्षे शिखिपुच्छिका ॥
विद्वेषोच्चाटने काकपक्षेणापि च मारणम् । रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात् ॥
षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत् । अथातः सम्प्रवक्ष्यामि षट्कर्मकाल निर्णयम् ॥
पञ्चमी च द्वितीया च चतुर्थी सप्तमी तथा । बुधेज्यरविसंयुक्ता शान्तिकर्मणि पूजिता ॥
गुरुचन्द्रयुता षष्ठी चतुर्थी च त्रयोदशी । नवमी पौष्टिके शस्ता अष्टमी नवमी तथा ॥
दशम्येकादशी चैव भानुशुक्रदिने तथा । आकर्षणे त्वमावस्या नवमी प्रतिपत्तथा ॥
पौर्णमासी मन्दभानुयुक्ता विद्वेषकर्मणि । कृष्णा चतुर्दशी तद्वदष्टमी मन्दवारकाः ॥

उच्चाटने तिथिः शस्ता प्रदोषे च विशेषतः । चतुर्दश्यष्टमी कृष्णा त्वमावास्या तथैव च ॥
मन्दारार्कदिनोपेता शस्ता मारणकर्मणि । बुधचन्द्रदिनोपेता पञ्चमी दशमी तथा ॥ ३०
पौर्णमासी च विज्ञेया तिथिः स्तम्भनकर्मणि । शुभग्रहोदये कुर्यात् शुभानि च शुभोदये ॥
रौद्रकर्माणि रिक्तार्के मृत्युयोगे च मारणम् । ईशश्चन्द्रेन्द्रनिऋतिवाय्वग्नीनां दिशो मताः ॥
सूर्योदयं समारभ्य घटिकादशकं क्रमात् । ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ॥
वसन्तग्रीष्मवर्षाख्याशरद्धेमन्तशैशिराः । हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ॥
शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः । प्रावृडुच्चाटने ज्ञेयः शरन्मारण कर्मणि ॥ ३५
गोमेषयोः शान्तिके च व्याघ्रस्य खड्गिनोऽपि वा । वश्ये च स्तम्भने शस्ता गजचर्मणि द्वेषके ॥
उच्चाटने भल्लूकस्य मेषस्य मारणे तथा । महिषाश्वयोर्वा चर्मणि साधयेत् साधकोत्तमः ॥
पद्माख्यं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः । वज्रं भद्रकमित्याहुरासनानि मनीषिणः ॥
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु । ऊर्वोरुपरि धीरेन्द्रः कृत्वा पादतले उभे ॥
पद्मासनं भवेदेतत् सर्वेषामेव पूजितम् । पूजाजपविधानेन अङ्गुष्ठ धारणञ्चरेत् ॥ ४०
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकायः सुखासीनः स्वस्तिकं तत् प्रचक्षते ॥
सीवन्यामात्मनः पार्श्वे गुल्फौ निःक्षिप्य पादयोः । एतद्वा स्वस्तिकं प्रोक्तं सव्ये न्यस्येतरं करम् ॥
पद्मासनं समास्थाय जानूर्वोरन्तरे करौ । निवेश्य भूमौ संस्थाप्य रोमस्थः कुक्कुटासनः ॥
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् । पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ॥
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम् । ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली ॥ ४५
करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् । स्वस्वकल्पविधानेन पूजादींश्च समाचरेत् ॥
षण्मुद्राः क्रमशो ज्ञेयाः पद्मपाशगदाह्वयाः । मुषलाशनिखड्गाद्याः शान्तिकादिषु कर्मसु ॥
हस्तौ तु सम्मुखौ कृत्वा सन्नतावुन्नताङ्गुलौ । तलान्तमिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका ॥
वाममुष्टिस्तु तर्जन्यां दक्षमुष्टिस्तु तर्जनीम् । संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे क्षिपेत्ततः ॥
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता । अन्योन्याभिमुखौ हस्तौ कृत्वा च ग्रथिताङ्गुलौ ॥ ५०
अङ्गुल्यौ मध्यमे भूयः संलग्ने च प्रसारिते । गदामुद्रेयमाख्याता विद्वद्भिः परिकीर्त्तिता ॥
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् । कुर्यान्मुषलमुद्रेयं सर्वविघ्नविनाशिनी ॥
अनामिकाद्वयं वेष्ट्य चाकुञ्च्य तर्जनीद्वयम् । कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन च क्रमात् ॥
वज्रमुद्रेयमाख्याता विद्वद्भिः परिकीर्त्तिता । कनिष्ठानामिकां बद्ध्वा साङ्गुष्ठेनैव संयुता ॥
शेषाङ्गुलीस्तु प्रसृते संस्पृष्टे खड्गमुद्रिका ॥ सितरक्त पीतमिश्रा कृष्णधूम्रा प्रकीर्त्तिताः ॥ ५५
षट्कर्मदेवतावर्णाः कथितास्तु यथाक्रमात् । यद्वर्णदेवता यत्र तद्वर्णञ्चोपहारणम् ॥
पुष्पं चैव तथा ज्ञेयं साधकानां सुसिद्धये । मन्त्रेणान्तरितान् कुर्यान्मारणानि यथाविधि ॥
ग्रथनश्च विदर्भश्च संपुटं रोधनन्तथा । योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु ॥

योगाक्षान्तरितान् कृत्वा साध्यवर्णान् यथाविधि । प्रथनन्तद्विजानीयात् प्रशस्तं शान्तिकर्मणि ॥
मन्त्रार्णद्वयमध्यस्थं साध्यनामाक्षरं लिखेत् । विदर्भ एव विज्ञेयो मन्त्रिभिर्वश्यकर्मणि ॥
आदावन्ते च मन्त्रस्य स्यान्न्यासः सम्पुटः स्मृतः । एष स्यात् स्तम्भने शस्त इत्युक्तो मन्त्रवेदिभिः ॥
नाम्न आद्यन्त मध्येषु मन्त्रः स्याद्रोधनं मतम् । विद्व एस्य विधाने तु प्रशस्तो न्यास उत्तमः ॥
मन्त्रस्यान्ते भवेन्नाम योग उच्चाटने मतः । अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे स्मृतः ॥
मुक्ताभिः स्फाटिकैर्वापि समायोज्याऽक्षसूत्रकैः । शान्तिकर्मणि मिश्रं वा जपेन्मन्त्रस्य सिद्धये ॥
प्रवालरक्तमणिभिर्वश्यपौष्टिकयोर्जपेत् । मन्त्रतुल्याङ्गमणिभिर्जपेदाकृष्टकर्मणि ॥
साध्यकेशसूत्रप्रोतैस्तुरङ्गदशनोद्भवैः । अक्षमालां समालोक्य विद्वेषोच्चाटने जपेत् ॥
मृतस्य युद्धशून्यस्य दशनैर्गर्दभस्य च । कृत्वाऽक्षमालां जप्तव्यं शत्रुमारणमिच्छता ॥
सामान्या कथिता माला विशेषाः पूर्वसूचिताः । अनामिकामध्यभागे मालां संस्थाप्य साधकः ॥
शान्तिकस्तम्भवश्येषु वृद्धाग्रेण प्रचालयेत् । तर्जन्याङ्गुष्ठयोगेन विद्वेषोच्चाटयोर्जपेत् ॥
कनिष्ठाङ्गुष्ठयोगेन मारणे जप ईरितः । मातृकयाऽथवा कुर्याद् यथातन्त्रविधानतः ॥
सर्वेषु च प्रयोगेषु द्विसहस्रं जपञ्चरेत् । अथवान्यप्रकारेण कथ्यते साधनं महत् ॥
महाचीनद्रुमे वीजं लिखित्वा कुङ्कुमेन च । तत्पार्श्वे साध्यमालिख्य ताडयेद् दिव्यदृष्टिभिः ॥
तत्र गच्छति कामार्त्ता यत्र देशे स पूजकः । गोरोचनादिभिर्द्रव्यैः स्वोयचन्द्रं समालिखेत् ॥
अतीव सुन्दरीं रम्यां तन्मध्ये प्रतिमां शुभाम् । ज्वलन्तीं नामसहितां कामवीजविदर्भिताम् ॥
चिन्तयेत्तु ततो देवीं योजनानां सहस्रतः । अदृष्टपूर्वा सा शक्तिः द्रुतमायाति दुर्लभा ॥
राजकन्याऽथ चार्वङ्गी भयलज्जाविवर्जिता । आयाति साधकं सम्यक् मन्त्रमूढ़ा सती शुभा ॥
चक्रमध्यगतो भूत्वा साधकश्चिन्तयेद् यदा । उद्यत्सूर्यसहस्राभमात्मानमरुणन्तथा ॥
साध्यमप्यरुणीभूतं चिन्तयेत् साधकोत्तमः । अनेन क्रमयोगेन युवा कन्दर्परूपवान् ॥
सर्वसौभाग्यसुभगः सर्वलोकवशङ्करः । सर्वरक्तोपचारस्तु मुद्रानिहितविग्रहः ॥
चक्रं प्रपूजयेद् यस्तु यस्य नामविदर्भितम् । स भवेद्दासवत् सत्यं धनेशो वापि वाक्पतिः ॥
चक्रमध्यगतं कृत्वा नाम यस्यास्तु योषितः । अदृष्टा वा सती वापि योगमुद्राधराऽपि वा ॥
हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् । नागिनीमप्सरां वापि गन्धर्वीं वा सुराङ्गनाम् ॥
विद्याधरीं दिव्यरुपामृषिकन्यां रिपुस्त्रियः । मदनोद्भवसन्तापां स्फुरज्जघनसुस्तनीम् ॥
कामवाणप्रभिन्नान्तःकरणां लोलचक्षुषीम् । महाकामकलाध्यानात् साधकः स्थिरमानसः ॥
क्षोभयेत् स्वर्गभूलोक पातालतलयोषितः । रोचनाभागमेकन्तु भागमेकन्तु कुङ्कुमम् ॥
अथ भागद्वयं चैव चन्दनैर्मर्दयेत् समम् । एकत्र तिलकं कुर्यात्त्रिलोकवशकारकम् ॥
अष्टोत्तरशतावृत्त्या मन्त्रयित्वा वशं नयेत् । राजानं नगरं ग्रामं यत्किञ्चिदन्यदुच्यते ॥
साधकेनैव नियतं तत् सर्वं तस्य वश्यगम् । योनिपुष्पैर्लिङ्गपुष्पैर्मिश्रीकृत्य च साधकः ॥

अञ्जलित्रयदानेन राजानं वशमानयेत् । रहस्यस्थानके मन्त्री लिखेद्रोचनया भुवि ॥
चारुशृङ्गारवेशाढ्यां सर्वाभरणभूषिताम् । प्रतिमां सुन्दरीं रम्यां विलिख्य सुमनोहराम् ॥
तद्भालगलहृन्नाभियोनिमण्डले योषिताम् । यस्या नाम महाविद्यामङ्कुशान्तविदर्भितम् ॥
कामं वह्निसमारूढं अधरोत्तरसंयुतम् । बिन्दुनादकलाक्रान्तमङ्कुशं परिकीर्त्तितम् ॥
सर्वसन्धिषु देहस्य कामबीजं समालिखेत् । स्वरान्तं पृथिवीसंस्थं रतिबिन्दुसमन्वितम् ॥
कथितं कामबीजञ्च सर्वसिद्धिप्रदायकम् । नीलदाड़िम्बपुष्पाभं चिन्तयेद्देहसन्धिषु ॥
तदाशाभिमुखो भूत्वा स्वयं देवीस्वरूपकः । मुद्रान्तु क्षोभिणीं बद्ध्वा मन्त्रमष्टशतं जपेत् ॥
नियोज्य मदनागारे चलसूर्ये नवात्मके । ततोऽप्यधिकसर्वाङ्गीं कामबाणैः सुपीड़िताम् ॥
अनन्यमानसां प्रेमभ्रममाणां मदालसाम् । एवमाकर्षयेन्नारीं योजनानां शतैरपि ॥
ईशानेऽङ्कुशमासाद्य तत्र यन्त्रं विलिख्य च । अष्टमीरात्रिमारभ्य चतुर्दश्यां समापयेत् ॥
अष्टोत्तरशतं मर्त्यो मन्त्रयित्वा स्वयं यतः । ताम्बूलपूरितमुखो मुक्तकेशो जितेन्द्रियः ॥
मदिराघूर्णनयनः परयोषित्समायुतः । गन्धचन्दनपुष्पैस्तु दिग्वासाः कुलभूषणः ॥
यन्नाम्ना दर्भितं यन्त्रं पूजयेद्वीरसाधकः । सा समायाति कामार्त्ता यत्र देवः स पूजकः ॥
अथ चेद्रात्रिसमये स्वकुलं तूलिकोपरि । वामभागे समासीनं रक्तवस्त्रविभूषितम् ॥
गन्धपुष्पैर्धूपदीपैर्वेष्टितं सुमनोहरम् । सर्वशृङ्गारवेशाढ्यं स्फुरच्चकितलोचनम् ॥
कुचद्वन्द्व जितामित्रविशालकरिकुम्भकम् । ललाटे मन्त्रमालिख्य साध्यनामविदर्भितम् ॥
तत्स्कन्धे भुजमारोप्य भङ्ग्याधृतकुचाचलः । ताम्बूलपूरितमुखः कुलं तदभिसंहितम् ॥
कुलाकुलजपं कृत्वा समानयति तत्क्षणात् । यन्नाम्ना लिखितं यन्त्रं ताञ्च नयति तत्क्षणात् ॥
शतयोजनबाह्यस्थां नदीपर्वतमध्यगाम् । द्वीपान्तरसहस्रेषु रक्षितां निगड़ादिभिः ॥
पयोधरक्षुब्धमध्यां चञ्चलोत्पललोचनाम् । नितम्बबिम्बविद्धस्तस्फुरज्जघनमण्डलाम् ॥
साधकाकृष्टहृदयां विवरान्तःप्रसर्पिणीम् । कवाटलोहसन्नद्धपूरिकाविवरान्तरे ॥
साधकान्तःसमासीनां देवतामिव चारिणीम् । एवमाकृष्टिसिद्धिश्चेत् साधकः कौलिको भवेत् ॥
केनापि व्यपदेशेन समासाद्य वलिं कुलात् । रात्रौ वीरवरो वापि दिव्यो वा साधकोत्तमः ॥
निजं कुलं समादाय तत्कुलस्थान एव च । विलिख्य मालिनीं देवीमारक्तवसनोज्ज्वलाम् ॥
निजवामोरुमध्ये तु निजमन्त्रविदर्भितम् । मणिना साध्यनामानं विलिख्य तस्य मध्यतः ॥
स्वयं कामकलारूपस्तत्राऽऽवाह्य महेश्वरीम् । कामराजेन संयुक्तां देवीं ध्यात्वा सुसाधकः ॥
पूजयित्वा ततो जप्यमष्टोत्तरसहस्रकम् । यन्नाम्ना दीयते चैव सा वश्यं प्रतिपद्यते ॥
एतद्विधानयोगे तु प्रभवन्ति हि देवताः । योगिन्योऽप्सरसश्चापि के परे नरकिङ्कराः ॥
स्वयं दिव्यधरो वापि किम्वाऽयं वीरसाधकः । इति चेत् ज्ञायते लोकैस्तदा भ्रष्टो भविष्यति ॥
तस्माद् यत्नाद् गोपितव्यं न प्रकाश्यं कदाचन । अनयाकृष्टिकर्मञ्च इति चेत् प्रतिपद्यते ॥

निश्चितं निमिषे ह्यानिस्तदा तस्य प्रजायते । यदि स्वप्नावतीं विद्यां साधकः स्थिरमानसः ॥
रात्रौ च दिवसे वापि जपेदष्टोत्तरं शतम् । जप्त्वा विघ्नं कदाचिद्धि पथि तस्य न विद्यते ॥
अतिगुप्तेन कर्त्तव्यं वीरेण कुलसाधनम् । निःसङ्गेन सदा कुर्यात् कुलाकृष्टिं विशेषतः ॥
कुलगेहप्रवेशार्थं रात्रौ यामगते बुधः । जलमध्ये च दुर्मार्गे आरामे वा श्मशानके ॥
शून्यागारे तथा बिल्वमूले वा जनवर्जिते । अष्टोत्तरसहस्रन्तु यो जप्त्वा गच्छति ध्रुवम् ॥
तस्य विघ्नं न जायेत साधने सर्वथा पुनः । अथवा सर्वकार्येषु जप्त्वा चाष्टसहस्रकम् ॥
गच्छेद्यदि सदा धीरस्तदा विघ्नं न जायते । न च विघ्नं ततस्तत्र तत्र तत्र जपान्तरम् ॥
गमनं तस्य जायेत तस्य विघ्नं न वर्त्तते । अथवा मातृकां सर्वां लिखित्वा चक्रवाह्यतः ॥
भूर्जपत्रे स्वर्णपत्रे रौप्येऽथ ताम्रपत्रके । साध्यनामान्वितं कृत्वा धारयेद्वामबाहुके ॥
सोऽवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः । अथवा मातृकायुक्तां स्वसंज्ञां चक्रमण्डिताम् ॥
कर्पूरकुङ्कुमाद्यैश्च अजरामरतां लभेत् । अनेन विधिना वापि रोचनागुरुचन्दनैः ॥
विदर्भितञ्च नाम्ना तु यस्मिन् कस्मिन्नुपस्थितम् । स्थावरं जङ्गमं वापि सकलं जलमण्डलम् ॥
वशीकुर्यान्महावीरः सोऽतिक्रान्तः न संशयः । कामराजेन वीजेन महाकामकलात्मना ॥
एकैकान्तरितं कृत्वा साध्यनामाक्षरं लिखेत् । वलिरस्या लिखेदेवं वेष्टयेन्मातृकाक्षरैः ॥
हेममध्यगतं कृत्वा धारयेद्वामके भुजे । शिखायामथवा वस्त्रे शरीरे यत्र कुत्र वा ॥
करोति दासभूतं हि त्रैलोक्यं सचराचरम् । संमोहयति राजानं वाजिनं दुष्टकुञ्जरम् ॥
चौरान् दस्यून् तथा चैव तथा मन्त्राभिचारकम् । चक्रवज्राणि वेतालं दुर्दमं राक्षसं तथा ॥
भूतप्रेतपिशाचांश्च धारिता चक्ररूपिणी । येन वीरेण तत्सर्वं स कुर्याद्दासवद्वशम् ॥
तन्मध्ये च गतां पृथ्वीं सशैलवनकाननाम् । चतुःसमुद्रपर्यन्तां ज्वलन्तीं चिन्तयेत्ततः ॥
षण्मासध्यानयोगेन जायते मदनोपमः । दृष्ट्याऽऽकर्षयते लोकं दृष्ट्यैव कुरुते वशम् ॥
दृष्ट्या संक्षोभयेन्नारीं दृष्ट्यैवाऽपहरेद्विषम् । दृष्ट्या कर्णोति वागीशं दृष्ट्या सर्वविलोचनम् ॥
दृष्ट्या चतुर्विधस्त्रीणां नाशयेद्विषमज्वरान् । एतत् प्रपूजनं रात्रौ चक्रं सिन्दूरमिश्रितम् ॥
करोति महदाकर्षं दूरस्थायाश्च योषितः । मध्ये दिक्षु विदिक्ष्वेवं यदा देवीं प्रपूजयेत् ॥
दिक्पतिक्रमयोगेन तदा सत्रं जगत्त्रयम् । भूर्जपत्रे विलिख्यैव रोचनागुरुकुङ्कुमैः ॥
तन्मध्ये नगरं देशं मण्डलं खण्डमेव वा । स्वनामदर्भितं कृत्वा यदि भूमौ निधापयेत् ॥
चक्रमेतन्महाभागे पुरःक्षोभनमुत्तमम् । धारयेद्वामहस्तेन कण्ठे वा भुजमूलके ॥
शिखायामथवा वस्त्रे धारयेद्यत्र कुत्र वा । रोचनाकुङ्कुमाक्तञ्च लाक्षालक्तकसंयुतम् ॥
अर्कक्षीरेण संयुक्तं धूस्तूरकरसन्तथा । कस्तूरीद्रवसंयुक्तं एकीकृत्य ततः परम् ॥
चक्रमेतत् समालिख्य यस्य नाम्ना सुसाधकः । तस्य व्याघ्रगजव्याधिरिपुसर्गविषादिकम् ॥
चौरग्रहजलारिष्टशाकिनीडाकिनीभयम् । भयं न विद्यते कुत्र परमन्त्राभिचारकम् ॥

नित्यं संसाधयेद् देवीं कालमृत्युं विनाशयेत् । न शक्तो हिंसितुं तस्य रोमैकमपि सर्वथा ॥
अथवा मध्यगां देवीं त्रिकोणोदरगान्तथा । अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमान्विताम् ॥ १५०
निधापयेच्च सप्ताहाद्दासवत् किङ्करो भवेत् । ताम्बूलधूपमुद्रकं पत्रं पुष्पं फलं दधि ॥
दुग्धं घृतं दन्तपत्रं वस्त्रं कर्पूरमेव वा । कस्तूरीं घुसृणं चैलां लवङ्गं जातिपत्रकम् ॥
फलं वा वस्तु यच्चान्यत् सकलं वा कदाचन । अष्टोत्तरशतं जप्त्वा यस्मै कस्मै प्रयच्छति ॥
स वश्यो जायते सत्यं नात्र कार्या विचारणा । स्त्रियश्च सकला वश्या दासीभूता भवन्ति हि ॥
हृदाकर्षणमेतत्तु कथितं नान्यथा भवेत् । पीतद्रव्येण संलिख्य धारयेदिन्द्रदिग्गतम् ॥ १५५
नाम्ना सर्वाङ्गभूतोऽपि मूको भवति तत्क्षणात् । सहस्रवदनश्चापि मूको भवति निश्चितम् ॥
महानीलरसेनापि नाम संयोज्य पूर्ववत् । दक्षिणाभिमुखो वह्नौ दग्ध्वा मारयतेऽचिरात् ॥
महिषाश्वपुरीषाभ्यां गोमूत्रैर्नाम चाङ्कितम् । कृत्वा शरावमध्यस्थं विद्विष्टं सर्वजन्तुषु ॥
युतं रोचनया नाम काकपक्षेण संलिखेत् । नीलकर्पटके सम्यक् नीलसूत्रेण वेष्टयेत् ॥
लम्बमानस्तथाकारो परमुच्चाटनं भवेत् । दुग्धलाक्षारोचनाभिर्महानीलरसेन च ॥ १६०
लिखित्वा धारयेच्चक्रं सर्ववर्णान् वशं नयेत् । अनेनैव विधानेन जलमध्ये विनिःक्षिपेत् ॥
सौभाग्यमतुलं प्राप्य स्नानपानान्न संशयः । एतन्मध्यगतां पृथ्वीं नागरीं वा सुराङ्गनाम् ॥
सप्ताहात् क्षोभयेन्नित्यं ज्वालामालां विचिन्तयन् । लिखित्वा पीतवर्णेन स्वीयचक्रं यदाऽर्चयेत् ॥
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः । सिन्दूरेण लिखंश्चक्रं पूजयेदुत्तरामुखः ॥
यदल दासो वशगो लोको भवति सर्वदा । चक्रं गैरिकयाऽऽलिख्य पूजयेत् पश्चिमामुखः ॥ १६५
सर्वाङ्गनावश्यकारी मोहकारी सदा भवेत् । दक्षिणाभिमुखो भूत्वा नित्यं चक्रं यदाऽर्चयेत् ॥
यस्य नाम्ना तस्य नित्यं महाहानिस्तु जायते । चक्रं वह्निमुखो भूत्वा रात्रौ सम्पूजयेत् सुधीः ॥
स्तम्भविद्वेषणव्याधिशत्रूच्चाटनकारकम् । रोचनालिखितं चक्रं दुग्धमध्ये वशङ्करम् ॥
क्षिप्तं गोमूत्रमध्ये तु शत्रूच्चाटनकारकम् । तैलस्थं चक्रराजन्तु विद्वेषणकरं परम् ॥
ज्वलज्ज्वलनमध्यस्थं सर्वशत्रुविनाशनम् । एकायुतं जपं कुर्यात् प्रयोगेषु च साधकः ॥ १७०
त्रिकोणं कुण्डमासाद्य सम्यक् शास्त्रविधानतः । तस्मिन् होमं प्रकुर्वीत संस्कृते हव्यवाहने ॥
प्रक्षाल्य गव्यदुग्धेन संशोध्य लवणं सुधीः । चूर्णितं जुहुयान्मन्त्री सप्ताहाद्वशयेज्जनान् ॥
दधिमध्वाज्यसंसिक्तैः सैन्धवैर्जुहुयात् पुनः । वशयेत् सकलान् देवान् गन्धर्वान् किं सुपर्णकान् ॥
विशुद्धं लवणप्रस्थं विभक्तं पञ्चधा पृथक् । यस्य नाम्ना स वश्यः स्यादनेनैव न संशयः ॥
शुद्धं लवणमादाय जुहुयान्मधुरान्वितम् । जलं पञ्चाशतं दद्याद्वशं नयति वाञ्छितम् ॥ १७५
दक्षिणाया विशेषञ्च कथयामि विशेषतः । कूर्चलज्जाद्वयं चान्ते आद्याबीजं तथैव च ॥
योजयित्वा जपेद्विद्यामयुतं वशमानयेत् । नागयज्ञोपवीताञ्च चन्द्रार्धधृतमस्तकाम् ॥
जटाजूटसमायुक्तां महाकालसमीपगाम् । अष्टोत्तरशतामन्त्र्य पूर्वद्रव्येण साधकः ॥

तेनैव तिलकं कृत्वा वशयेज्जगतीमिमाम् ॥ शताभिमन्त्रितं कृत्वा रोचनातिलकेन तु ॥
राजानं साधकश्रेष्ठो वशमानयति क्षणात् । आद्ये चैकन्तु वीजानां तथैवान्ते च एककम् ॥ १८०
दक्षिणे कालिके चेति साध्यं संयोज्य मन्त्रवित् । स्वाहान्तं मन्त्रमुच्चार्य भवेदाकर्षणं महत् ॥
लोहिताङ्गुलिहस्तां च एकशूलधरां तथा । महाकालाग्र आसीनां ध्यात्वा चाकर्षणञ्चरेत् ॥
स्थावरं जङ्गमं चैव पातालतलगन्तथा । आकर्षयति मन्त्रज्ञः किमन्यत् भुवि योषितः ॥
शेषञ्च वशवत् कुर्यादुच्चाटनमथोच्यते । पिङ्गाक्षीं कृष्णवर्णाञ्च कर्त्रीखर्परधारिणीम् ॥
ध्यात्वा चोच्चाटयेच्छत्रून् पूर्ववज्जपमाचरेत् । अन्ते च ठद्वयं दत्त्वा प्रजपेन्मनुमुत्तमम् ॥ १८५
कपिलां द्विभुजां कर्त्रीकपालसव्यदक्षिणाम् । उत्थितां सन्नतां ध्यायेत् साधको रिपुमारणे ।
विशेषः कथितः काल्याः सामान्यमथ वक्ष्यते । उच्चाटयति पिङ्गाक्षी संद्रावयति केकरा ॥
विद्रावयति मुक्तास्या सन्त्रासयति घूर्णिता । विक्षोभयति संक्षुब्धा सम्पातयति सन्नता ॥
सङ्कोचयति वित्रस्ता प्रबुद्धा वा प्रबोधयेत् । यं यं भावं जनो ध्यायेत् तत्र तत्र स्मरेदपि ॥
अत्र सर्वत्र कर्त्तव्यं भावमात्रस्य चिह्नितम् । उच्चाटनादि सर्वत्र मैथुनान्ते समाचरेत् ॥ १९०
धूस्तूरकाष्ठयोगेन चितावह्नौ च मन्त्रवित् । उलूककाकपक्षैश्च होमाच्छत्रून् विनाशयेत् ॥
उच्चाटनार्थं शत्रूणां होमं कुर्याच्च मन्त्रवित् । पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने ॥
उलूककाकपक्षाभ्यां कृत्वा होमं विनिर्दिशेत् । विद्वेषणविधानेन अन्योन्यकलहान्वितम् ॥
उलूकपक्षहोमेन गर्भपातो भवेत् स्त्रियाः । सहस्रेण प्रमाणेन कुर्याद्धोमं यथाविधि ॥
श्मशानाङ्गारमादाय मङ्गले वासरे निशि । कृष्णवस्त्रेण संवेष्ट्य वध्नीयात् रक्ततन्तुभिः ॥ १९५
शताभिमन्त्रितं तच्च निःक्षिपेदरिमन्दिरे । सप्ताहाभ्यन्तरे तस्य ध्रुवमुच्चाटनं भवेत् ॥
महाचीनद्रुमरसेनाक्तं पिण्डं विधाय च । यन्नाम्ना दीयते तच्च सोऽचिरान्मृत्युमर्हति ॥
नरास्थिनि लिखेन्मन्त्रं क्षारयुक्त हरिद्रया । सहस्रं परिसंजप्य निशायां रविवासरे ॥
क्षिपते यस्य गेहे तु तस्य मृत्युस्त्रिमासतः । क्षेत्रे तु शस्यहानिः स्याज्जवहानिस्तुरङ्गमे ॥
धनहानिर्धनागारे ग्राममध्ये तु तत्क्षयः । द्वेष्यद्वेषकयोर्नाम्नि तयोर्द्वेषो महान् भवेत् ॥ २००
मन्त्रं कृष्णतृतीयादि प्रजपेद्यावदष्टमीम् । पुत्तलीः पञ्च कुर्वीत साङ्गोपाङ्गाः शुभाः समाः ॥
एका साध्यद्रुमेण स्यादन्या पिष्टमयी तथा । चक्रिहस्तमृदाऽन्या स्यादन्या मधुमयी तथा ॥
लवणं पञ्चसम्भूतं चूर्णितं दुग्धशोधितम् । प्रोक्षयेच्च तथा क्षीरदध्याज्यमधुभिः क्रमात् ॥
गुड़ाज्यमधुभिः सम्यक् मिश्रितेनाम्बुना ततः । कुर्वीत पुत्तलीं सौम्यां सर्वावयवशोभिताम् ॥
पुत्तल्यां जीवमाधाय मन्त्रन्यासं ततः परम् । रक्तवस्त्रधरां शुद्धां पुत्तलीं दारुणा कृताम् ॥ २०५
अधोमुखीं हुनेत् कुण्डे पिष्टजामासनादधः । मृण्मयीं प्रतिमां पाददेशे न्यस्येत्तथात्मनः ॥
मधूच्छिष्टमयीं व्योम्नि कुण्डस्योर्ध्वं प्रलम्बयेत् । लवणेन कृतां पश्चात् प्रतिमां संस्पृशन् जपेत् ॥
निजमन्त्रं यथान्यायमष्टोत्तरसहस्रकम् । अग्निमादाय सन्दीप्य साध्यनक्षत्रदारुभिः ॥

तस्मिन्नभ्यर्च्य मन्त्रोक्तां देवतां रूप्यपत्रके। कुशीतराजिदूर्वाभिर्दत्त्वाऽर्घ्यं प्रणमेत् सुधीः॥
मन्त्रैरेतैः प्रयोगादावन्ते च यतमानसः। त्वरानन्दन शत्रुघ्न निशायां हव्यवाहन॥
हविषा मन्त्रदत्तेन तृप्तो भव मया सह। जातवेदो महादेव तप्तजाम्बूनदप्रभ॥
स्वाहापते विश्वभक्ष लवणं दह शत्रुहन्। ओं दुर्गे सर्वविपर्यासि प्रस्तं युक्तं त्वया जगत्॥
महादेवि नमस्तुभ्यं वरदे वरदा भव। तमोमयि महादेवि महादेवस्य सुव्रते॥
क्रिया मे पुरुषं हुत्वा वशमानय देहि मे। ओं दुर्गे दुर्गे दुर्गासि दुर्गसंरोधनाकुले॥
शङ्खचक्रधरे देवि दुष्टशत्रुभयङ्करि। नमस्ते दह मे शत्रुं वशमानय चण्डिके॥
शाकम्भरि महादेवि शरणं मे भवाऽनघे। भद्रकालि भयाभीतिमद्रसिद्धिप्रदायिनि॥
सपत्नान् मे हन हन दह तापय शोषय। प्राणासिशक्तिरुग्राद्यैरुत्क्रम्योत्कृत्य चान्य॥
महादेवि महाकालि रक्षास्यानस्थितेऽम्बिके॥ साध्यं संहृत्य निर्वस्यं पुत्तलीं साधकोत्तमः॥
मूलमन्त्रं समुच्चार्य जुहुयादेधितेऽनले। प्रथमो दक्षपादश्च तत्करस्तदनन्तरम्॥
शिवदूतीयमाख्यातं वामहस्तं ततः परम्। मध्यादूर्ध्वं पञ्चमः स्यादधोंऽशः षष्ठ ईरितः॥
सप्तमो वामभागः स्यादेवं भागक्रमः स्मृतः। सप्त सप्त विभागो वा प्रयोगेषु यथाविधि॥
हुत्वैवमर्चयेदग्निं प्रणमेद्दण्डवत्ततः। यजमानो धनैर्धान्यैः प्रीणयेद् गुरुमात्मनः॥
अनेन मनुना मन्त्री वशयेदसुरान् सुरान्। किं पुनर्मनुजान् भूपान् सद्योऽप्यस्य विमोहिताः॥
मारणे पूर्वसंप्रोक्तं पुत्तलीनां चतुष्टयम्। निवेशयेद् यथापूर्वं साधकेन्द्रो यथाविधि॥
अपरां वक्ष्यमाणेन विधानेन प्रकल्पयेत्। वराहपारावतविद् तिलद्रुमैश्च रामठैः॥
रिपोर्नखैश्च केशैश्च तथा वामाङ्घ्रिरेणुजैः। स्नुहिक्षीरेण सम्पिष्टैः पूर्वोक्तलवणान्वितैः॥
विधाय पुत्तलीः सम्यक् प्राणस्थापनमाचरेत्। जपपूजादिकं कुर्यात् प्रागुक्तवर्त्मना सुधीः॥
ततः पूर्वोदिते माग रात्रौ प्रज्वलितेऽनले। दुर्गां वा भद्रकालीं वा समाराध्य यथाविधि॥
धारयेन्निशितं शस्त्रं सव्यहस्तेन साधकः। वामं पादं समारुह्य दक्षिणं ध्रुवमानसः॥
छित्त्वा छित्त्वा हुनेन्मन्त्री निराहारो जितेन्द्रियः। कृष्णाष्टमीं समारभ्य यावत् कृष्णा चतुर्दशी॥
अनेनैव विधानेन होमं कुर्याद्विचक्षणः। द्विसप्ताहप्रयोगेण मारयेत् रिपुमात्मनः॥
क्रूरे रोगे ग्रहे सर्पे तर्जन्या संस्पृशन् जपेत्। स्मृत्वा शूलधरां देवीं देवांश्च तत्क्षणाज्जयेत्॥
दर्भितं साध्यनामानं समुद्दिश्य संलिखेत्। कुलालमृत्तिकायान्तु प्रतिमायां हृदि न्यसेत्॥
कृतप्राणप्रतिष्ठां तां पूजितां कुसुमादिभिः। विधायाग्निं जपेन्मन्त्रमष्टोत्तरसहस्रकम्॥
संख्यासम्पूर्णमात्रेण वशमायाति वाञ्छितम्। अभ्यर्च्य च ततः पश्चात् तीक्ष्णतैलेन मन्त्रवित्॥
कृत्वायुतं विधायार्घ्यं तीक्ष्णतैलेन च पुनः। तेषु सम्पातयेद् भूयः स्पृष्ट्वा तान्ययुतं जपेत्॥
वेधयेत् परसेनायां क्षणान्नष्टा दिशो दश। प्राप्नुयान्नष्टसंज्ञायां पलायनपरायणः॥
जपित्वा सिद्धगुञ्जानां कुड्वञ्चानलोदरे। निःक्षिपेत् शत्रुसेनायां गूढं रात्रिसमागमे॥

ज्वरमारीमहारोगैः पीड़ितः सैन्यनायकः। परस्परविरोधेन गच्छेद्दिगतचेष्टया॥
शिलासंस्तम्भने मन्त्री करैकसुरसम्भवैः। साध्यपादरजोयुक्तो होमादुच्चाटयेत् रिपून्॥
करे दारुमयीं कृत्वा प्रतिमामतिशोभनाम्। शप्तां प्रतिष्ठितप्राणां छेदयेदङ्गशः पुरः॥
काकोलूकवसायुक्तमष्टोत्तरसहस्रकम्। कृष्णपक्षे चतुर्दश्यां श्मशाने हव्यवाहने॥
जुहुयाज्जायते शत्रुर्यमगेहं दिनत्रयात्। उन्मत्तसमिधां होमान्मत्ताः स्युः शत्रवः क्षणात्॥
उलूककाकयोः पक्षं सवसारक्तसंयुतम्। जुहुयान्निशि कान्तारे शत्रुः कालातिथिर्भवेत्॥
शत्रोः प्रतिकृतिं मन्त्री प्रतिष्ठितसमीरणाम्। विषलिप्तविलिप्ताङ्गीमभ्युक्ष्य निक्षिपेज्जले॥
ज्वराक्रान्तो भवेच्छीघ्रं दुग्धसेकात् सुखं नयेत्। तर्जनीत्रिशिखं दोर्भ्यां धारयन्तीं भयङ्करीम्॥
रक्तां ध्यात्वा रवेर्बिम्बे प्रजपेदयुतं मनुम्। मारयेदविवादेन रिपून् बन्धुसमन्वितान्॥
खड्गखेटधरां क्रुद्धां सिंहस्थां रविमण्डले। ध्यात्वा मन्त्रं जपेन्मन्त्री पूर्ववन्नाशयेदरीन्॥
चापबाणधरां भीमां सिंहस्थां ज्वलनोपमाम्। सृजन्तीं बाणनिवहान् धारयन्तीं च तर्जनीम्॥
ध्यात्वा जपेन्निजं मन्त्रमयुतं जलमध्यतः। रिपुश्च परसेनाश्च शीघ्रमुच्चाटयेद्ध्रुवम्॥
प्रेतपिण्डं समादाय गोलकं कारयेत्ततः। साध्यनामाङ्कितं कृत्वा शत्रु सदृश पुत्तलीम्॥
जीवं तत्र निधायैव चिताग्नौ प्रक्षिपेत्ततः। एकायुतं जपं कृत्वा त्रिरात्रान्मारणं भवेत्॥
पूर्ववत् पुत्तलीं कृत्वा जप्त्वा च पूर्ववत्मना। महाज्वाला भवेत्तस्य तप्तताम्रशलाकया॥
गुह्यद्वारे प्रविन्यस्य सप्ताहान्मरणं रिपोः॥ कुण्डलिन्या मुखे क्षिप्त्वा वैरिणं साधकोत्तमः॥
तस्मात् कालाग्निमध्ये च प्रक्षिप्य दहनञ्चरेत्। प्रातरेव विभाव्याथ जपेदयुतसंख्यकम्॥
त्रिसप्ताहप्रयोगेण रिपुर्याति यमालयम्। भूर्जपत्रे स्वर्णपत्रे निम्बपत्रे विलिख्य च॥
पूजां कृत्वा दहेदग्नौ तदा शत्रुनिकृन्तनम्। वह्निपत्रे रिपोर्विद्यां लिखित्वा पत्रकेऽमले॥
पुटान्तं मन्त्रमुद्धाव्य पटे कृत्वा विदर्भ्यं च। सहस्रजं मन्त्रं जप्त्वा विद्या न हि फलप्रदा॥
पत्राभावे कुले पात्रे रक्तचन्दननिर्मितम्। वह्निबीजं पुटं कृत्वा दृष्ट्वा दग्ध्वा विचिन्त्य च॥
वामहस्तेन जुहुयाल्लुप्तं स्यान्नात्र संशयः। पद्मपत्रे यस्य मन्त्रं पुटीकृत्य च दीपनैः॥
मृण्मध्ये निक्षिपेत्तोये तद्वद्बोधो भविष्यति। वाङ्मायाकमलाबीजं दीपनं परिकीर्त्तितम्॥
मृत्पात्रे तु मृतं लिख्य मृदा तीर्थं पुटीकृतम्। जले च निक्षिपेन्मन्त्रं पुनर्नव इतीरितः॥
यन्मनुन्तं मनुं दग्धं नवोदितशशी यथा। कारयेदक्षवृक्षेणाऽप्येतदायुध पञ्चकम्॥
शङ्खखड्गरथाङ्गानि शार्ङ्गं कौमोदकी क्रमात्। पञ्चगव्येषु निःक्षिप्य तानि स्पृष्ट्वा जपेन्मनुम्॥
अवटान् पञ्च निखनेद्दिक्षु पूर्वोदितक्रमात्। अवटेषु च पूर्णेषु पञ्चगव्येन साधकः॥
अधराणि प्रजप्तानि पञ्चघोषपुरःसरम्। निवसेत्तस्य मध्यादि पूजां कृत्वा यथाविधि॥
वालुकाभिः समापूर्य मृद्भिः कुर्यात् समन्ततः। बलिञ्च विकिरेत्तत्र तेषां मन्त्री यथाक्रमात्॥
दिक्पतिभ्यो बलिं दत्त्वा ब्राह्मणान् भोजयेत्ततः। दीनांश्च कृपणादींश्च तोषयेद्भोजनादिभिः॥

गुरवे दक्षिणां दद्यात् यथावित्तानुसारतः । यत्रेयं विहिता रक्षा देशे वा नगरेऽपि वा ॥
ग्रामे गेहे तथा क्षेत्रे वर्धन्ते सम्पदः सदा । अग्न्युत्पातादयो दोषा भूतप्रेतादि संयुताः ॥ २७५
अभिचारकृताः कृत्यरिपुचौराद्युपद्रवाः । नेक्षन्तां तां दिशं भीत्या तर्जिता देवताज्ञया ॥
यस्माच्च कथितं ग्रन्थं षट्कर्मविधिमुत्तमम् । गोप्तव्यञ्च प्रयत्नेन नान्यथा नरकं व्रजेत् ॥
हृदि कालीं यजेद्वयत्नात् ध्यानं तस्याः प्रचक्षते । ध्यायेत् कालीं करालास्यां सुदंष्ट्रां भीमलोचनाम् ॥
स्फुरन्मरकतश्रेणीं कृतकाञ्चीं दिगम्बरीम् । वीरासनसमासीनां महाकालोपरिस्थिताम् ॥
श्रुतिमूलसमाकीर्ण सृक्कणीं चण्डनादिनीम् । मुण्डमालागलद्रक्तचर्चितां पीवरस्तनीम् ॥
मदिरामोदितास्फालकम्पिताखिलमेदिनीम् । वामे खड्गमुण्डखण्डधारिणीं दक्षिणे करे ॥
वराभययुतां घोरवदनां लोलजिह्विकाम् । शकुन्तपक्षिसंयुक्त वालचन्द्रविभूषिताम् ॥
शिवाभिर्घोररावाभिः सेवितां प्रलयोदिताम् । चण्डहासचण्डनादचण्डस्फोटैश्च भैरवैः ॥
गृहीत्वा नरकङ्कालं जयशब्दपरायणैः । सेविताशेषसिद्धौघसेवितैः सेवितां सदा ॥

इति श्रीज्ञानानन्द परमहंस विरचिते कौलावलीनिर्णये एकोनविंशोल्लासः ॥ १९ ॥

---

## विंश उल्लासः

अथ चात्रसमासेन लुकी विद्या प्रचक्ष्यते । भौमवारे निशीथे च चतुष्पथगतो नरः ॥
दिग्वासा मुक्तकेशश्च मकारपञ्चकैः सह । स्वकल्पोक्त विधानेन संपूज्य निजदेवताम् ॥
माषभक्तबलिं दद्यात् सदग्धमीनशोधितम् । अष्टोत्तरसहस्रन्तु जप्त्वा स्तुत्वा च साधकः ॥
सोऽदर्शनो भवत्याशु षण्मासाभ्यासयागतः । अथ वक्ष्ये च वेताल सिद्धिं सर्वोत्तमोत्तमाम् ॥
विल्ववृक्षोद्भवं काष्ठं श्मशाने साधकोत्तमः । भौमवारे मध्यरात्रौ गत्वा कुलयुगान्वितः ॥
खनित्वा काष्ठं लक्षं वै जपेन्महिषमर्दिनीम् । सहस्रं होमयेद्वीरस्तत्रैव पितृकानने ॥
काष्ठमुद्धृत्य तेनैव दण्डं पादुकचिह्नितम् । कृत्वा दुर्गाष्टमीरात्रौ श्मशाने निःक्षिपेत्ततः ॥
तस्योपरि शवं कृत्वा निजदेवीं प्रपूज्य च । शवासनगतो वीरो जपेदष्टसहस्रकम् ॥
ततो मातृबलिं दद्यात् काष्ठमामन्त्रयेत्ततः । स्फें स्फें दण्ड महाभाग योगिनीहृदयप्रिय ॥
मम हस्तस्थितो देव ममाज्ञां परिपालय । एवमामन्त्र्य वेतालं यत्र यत्र प्रपूज्यते ॥
तत्र चूर्णं विधायाथ पुनरायाति कौलिकम् । गच्छ गच्छ महाभागे पादुके वरवर्णिनि ॥
मत्पादस्पर्शमात्रेण स याति शतयोजनम् । एवमामन्त्र्य पादुकां दद्यात् पादतले ततः ॥
यत्रेच्छा वर्त्तते तस्य तत्र गच्छेद्यथासुखम् ॥ अथ वक्ष्ये खड्गसिद्धिं साधकानां हिताय च ॥
अष्टलौहं समादाय पञ्चाशदङ्गुलं मतम् । कृत्वा तत्र मूलमन्त्रं लिखित्वा प्रजपेन्मनुम् ॥
पूर्वसंख्यं पूर्वमन्त्रं जप्त्वा च तदनन्तरम् । तत् सहस्रं ततो हुत्वा महाशवकलेवरे ॥
खनित्वा जीववृक्षाग्रे बद्ध्वा शुष्कन्तु कारयेत् । कुलाष्टम्यामर्धरात्रे चितामध्ये समाहितः ॥
प्रीतिपूर्वं समामन्त्र्य हुनेत् पितृवने ततः । मधुरत्रयसंयुक्तं बिल्वपत्रेण संयुतम् ॥
पादादिमूर्धपर्यन्तं होमान्ते बलिमाहरेत् । बल्यन्ते सा महामाया देवी महिषमर्दिनी ॥
आयाति वरपूर्णास्या वरहस्ता हसोन्मुखी । गृध्रवकृतिशब्देन खड्गमुत्तोल्य धारयेत् ॥
घोरदंष्ट्रे महाकालि करवालस्वरूपिणि । क्रां ह्रीं ऊं कुरु कल्याणि विपक्षादपि विस्तरम् ॥
तत एवं समामन्त्र्य यमुद्दिश्य क्षिपेन्नरः । छित्त्वा छित्त्वा पुनश्छित्त्वा गतोऽप्याकृष्यते पुनः ॥
फेत्कारिण्यां महासिद्धिं वक्ष्यामि तन्त्रवर्त्मना । कुलमीनं कुलद्रव्यं कुलमद्यं कुलेश्वरः ॥
कुलस्थाने समानीय दत्त्वा देव्यै प्रयत्नतः । विधिवत् पूजनं कृत्वा साधकः स्थिरमानसः ॥
अष्टोत्तरसहस्रन्तु जप्त्वा भूमितले स्थितः । भूमौ फुत्कारमात्रेण विवरं तत्र जायते ॥
शतयोजनदूरे वा यत्र साध्यस्थितिर्भवेत् । तत्रैव गमनं तस्य भूतलान्तः प्रसर्पिणः ॥
एवं विवरमध्ये च गवाक्षैरपि साधकः । कायसङ्कोचमासाद्य गच्छत्यविकलो नरः ॥
खेचराख्यां महासिद्धिं प्रवक्ष्येऽहमतः परम् । यावित्क्षान्तं चतुर्भागे सिन्दूररजसा लिखेत् ॥
स्वीयचक्रं मातृकार्णैः संवेष्ट्य चैव मध्यतः । पूजयेत् रात्रिसमये कुलाचारक्रमेण तु ॥
तत्क्षणात् साधकश्रेष्ठः खेचरो भवति ध्रुवम् । एवं षण्मासयोगेन सिद्धो भवति साधकः ॥

अथ षडङ्गदेवता ।

ओङ्कारस्फटिक श्यामानीलकृष्णारुणार्चीषः । वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥ ३०
देवताङ्गे षडङ्गः स्यात् सकलीकरणं भवेत् । अञ्जलिश्चार्घ्यवत् कृत्वा परमोकरणं भवेत् ॥
अमृतीकरणे देवि मुद्रा स्यादनुरूपिणी । हृदयं मध्यमानामा तर्जनीभिः स्मृतं शिरः ॥
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा स्मृता । दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमोरितम् ॥
प्रोक्ताङ्गुलीभ्यां मन्त्रं स्यात्ततस्तालत्रयं शिवे । दिशस्तेनैव बध्नीयात् छोटिकाभिः समन्ततः ॥

अथ कालिकाकल्पं । शिव उवाच ।

सङ्कटे राजभवने कारागारेषु बन्धने । स्मरणात् कालिका देवी सर्वबन्धविमोचिनी ॥ ३५
चित्स्वरूपा महाकाली विष्णुरूपा महेश्वरी । ब्रह्माणी देवगन्धर्वसेविता शिवगेहिनी ॥
ब्रह्मविष्णु प्रसूतेयं शिवमायात्मिका परा । साधकस्य क्षणं ध्यानात् प्रत्यक्षा सुरवन्दिता ॥
प्रभावं कालिकादेव्या वक्तुं न शक्यते प्रिये । शतकोटिमुखेनापि पञ्चभिश्च कथं प्रिये ॥
अस्माकं जननी देवी भक्त्या स्वदेहगामिनी । आदौ माता तथा गुप्ता मागुरीत्यभिधीयते ॥
मम साम्राज्यसाहाय्यं ममैव सिद्धिदायिनी । मम प्रभुत्वमापन्ना मम माता यशस्विनी ॥ ४०
तया विना जगद्धाति स्पन्दितुं नैव शक्यते । इत्युक्त्वा शङ्करो मोहात् मूर्च्छितः पुनरुद्गतः ॥
शिवदेहाद्घोररूपो भैरवः समजीजनत् । जातोऽसौ शङ्करो देव्याः पादपद्मं समाश्रितः ॥
आलिङ्ग्य पार्वती तेन रूपेण वपुरुच्यते । केवलं ध्यानयोगेन सर्वसिद्धिमुपालभेत् ॥
संपूज्य लक्षमात्रन्तु जप्त्वा त्रिदशतारिणीम् । प्रयोगप्रभवा देवी प्रसन्ना भक्तवत्सला ॥
अर्कपुष्पसहस्रेण पूजिता वरदायिनी । सहस्रं परिजप्यैतत् सन्ध्यायां रविवासरे ॥ ५
धनवान् कामभोगीशो भवेत् सर्वजनप्रियः । सहस्रं परिजप्येत विपुलां कवितां लभेत् ॥
महदैश्वर्यमाप्नोति धर्मपत्नीरतो निशि । रक्तपुष्पशतेनापि मण्डिते कुजवासरे ॥
ब्रह्मपुष्पशतेनापि रक्तचन्दन चर्चितः । सम्पूज्य राजसम्मानं कुजवारे निशार्धके ॥
धर्मक्षेत्रे पद्मपुष्पैः सहस्रैः परिपूजयेत् । रवौ वारे त्रयोदश्यां हविष्याशी जितेन्द्रियः ॥
सहस्रं परिजप्येत विपुलां कवितां लभेत् । पुत्रदाता निशाभागे धर्मपत्नीसहायवान् ॥ ५०
संजपेन्निजशय्यायां निशि संयतमानसः । दीर्घमायुर्वंशकरं पुत्रं संलभतेऽचिरात् ॥
रोचनाप्रस्थमात्रन्तु मन्त्रेणानेन मन्त्रितम् । शतमष्टोत्तरं मन्त्रं धारयेत्तिलकं यदि ॥
राजानोऽपि हि दासत्वं भजन्ते किं परे जनाः । परनारीरता ये वा जपन्ति पश्चिमामुखाः ॥
सहस्रं कालिका मन्त्रं धनाढ्यास्ते भवन्ति हि । चतुष्पथे सहस्रार्धं मुक्तकेशो दिगम्बरः ॥ ५५
भ्रष्टवारं जपेद्यो ऽपि तस्य प्रीता च कालिका । अचलां कमलां लब्ध्वा सुखं प्राप्नोति भूतले ॥
कर्पूरपूरितमुखो निजनारीसमागमे । जपेत्तु कालिकाध्यानादष्टाधिकशतं निशि ॥
सुप्रीता कालिका स्वप्ने दर्शनं प्रददाति च । मत्स्याशी नित्यमांसाशी रात्रौ पश्चिमदिङ्मुखः ॥

शतमष्टोत्तरं कृत्वा यो जपेदर्धरात्रकम् । सत्यं सत्यं पुनः सत्यं तच्छत्रुर्यमवल्लभः ॥
अर्कारण्ये जपेद्व्याघ्रचर्मणि प्रतिवासरम् । अष्टौ दिनानि लभ्येत कन्यां शीलगुणान्विताम् ॥ ६०
अर्कवृक्षस्य मूले तु यो जपेत्त्रिदिनं निशि । सहस्रार्धप्रमाणेन धनदेन समो भवेत् ॥
सहस्रं परिजप्येत निशायां मङ्गले निशि । चतुष्पथे महारोगान्मुक्तो रोगी भवेद्ध्रुवम् ॥
भगलिङ्गस्य संयोगी पश्चिमाभिमुखी जनः । तस्य दारिद्र्यसंन्यासं करोति जपमस्तके ॥
निशारामाभिगमने प्रक्षाल्य भगलिङ्गकम् । तज्जलं ताम्रपात्रेषु संस्थाप्य तर्पणश्चरेत् ॥
मूलमन्त्रेण देवेशि लभते महतीं श्रियम् ॥ ६५

प्रथमचरितस्य ब्रह्मऋषिर्गायत्रीच्छन्दो महाकाली देवता नन्दा शक्ती रक्तदन्तिका बीजमग्निस्तत्त्वं महाकालीप्रीत्यर्थं जपे विनियोगः ॥

मध्यमचरितस्य विष्णुर्ऋषिर्महालक्ष्मीर्देवताऽनुष्टुप्छन्दः शाकम्भरी शक्तिर्दुर्गा बीजं सूर्यस्तत्त्वं महालक्ष्मीप्रीत्यर्थं जपे विनियोगः ॥

उत्तमचरितस्य रुद्र ऋषिः सरस्वती देवता उष्णिक्छन्दो भीमा शक्तिर्भ्रामरी बीजं वायुस्तत्त्वं सरस्वतीप्रीत्यर्थं जपे विनियोगः । आसां ध्यानं नाभौ ॥ ७०

दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा । विशालया राजमाना त्रिंशल्लोचनमालया ॥
प्रस्फुरत् कुलदंष्ट्राभा भीमरूपा भयङ्करी । खड्गबाणगदाशूलशङ्खचक्रभुशुण्डिभृत् ॥
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ । मधुकैटभयोर्युद्धे यैषा सा तामसी शिवा ॥
श्वेताननाऽनिलभुजा सुश्वेतस्तनमण्डला । रक्तमध्या रक्तदेहा नीलजङ्घोरुजानुका ॥ ७५
चित्रानुलेपना कान्ता सर्वसौभाग्यशालिनी । अष्टादशभुजा पूज्या सा सहस्रभुजा रणे ॥
आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः करक्रमात् । अक्षमालान्तु मुषलं बाणासिं कुलिशं गदाम् ॥
चक्रं त्रिशूलं परशुं शङ्खखेटक पाशकम् । शान्तदन्तचर्मपाशं पानपात्रं कमण्डलुम् ॥
अलङ्कृतभुजामेभिरायुधैः परमेश्वरीम् । सत्त्वंव्या स्तुतिकालादौ महिषासुरमर्दिनी ॥
इत्येषा राजसी मूर्त्तिः सर्वदेवमयी मता । एवं ध्यात्वा नरो नित्यं लभेतेप्सितमात्मनः ॥ ८०
गौरीदेहात् समुत्पन्ना या सत्त्वैकगुणाश्रया । साक्षात् सरस्वती प्रोक्ता शुम्भासुरनिवर्हिणी ॥
दधौ चाष्टभुजा बाणं मुषलं शूलचक्रकम् । शङ्खघण्टालाङ्गलञ्च कार्म्मुकञ्च तथा परम् ॥
ध्येया सा स्तुतिकालादौ वधे शुम्भनिशुम्भयोः ।

अथ मन्त्रोद्धारः । वाराहीतन्त्रे ।

तारं वाणीं ततो लज्जां वह्निजायां ततः परम् । पुनस्तारश्च वाराही चण्डीमन्त्रः समीरितः ॥ ८५
ॐ ऐं ह्रीं स्वाहा ॐ । एवं ऋषिच्छन्दो ध्यान मन्त्रश्च ज्ञात्वा चण्डीपाठः कर्त्तव्यः ॥

इति श्रीज्ञानानन्द परमहंस विरचिते कौलावलीनिर्णये विंशोल्लासः ॥ २० ॥

---

## एकविंश उल्लासः

अथातः सम्प्रवक्ष्यामि अवधूतक्रमं शृणु । चतुर्थाश्रमिणां मध्ये अवधूताश्रमो महान् ॥
केवलं कुलयोगेन तस्य मोक्षः प्रजायते । यदि न स्यात्तदा चैव शृणु यत् कथयामि ते ॥
ज्ञानभावे च सम्पन्ने संप्रार्थ्य निजकौलिकीम् । तदाज्ञया विमुक्तः स्यात्तां सम्पूज्य कुलान्तरे ॥
कुण्डलीशक्तिविवरे तदा योगं समभ्यसेत् । निर्द्वन्द्वो निरहङ्कारः शुद्धनाडीजितेन्द्रियः ॥
मृद्वासने समासीनः खड्गसंयमने रतः । बद्धपद्मासनो योगी योगं युञ्जीत यत्नतः ॥
ऊर्वोरुपरि वीरेन्द्रः कृत्वा पादतले उभे । अङ्गुष्ठौ तु निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥
पद्मासनं भवेदेतत् सर्वेषामेव पूजितम् । गुदात्तु द्व्यङ्गुलादूर्ध्वमधोमेढ्रात्तु द्व्यङ्गुलम् ॥
एकाङ्गुलन्तु तन्मध्ये देहमध्यं प्रकीर्त्तितम् । कन्दमस्ति शरीरेऽस्मिन् पुण्यापुण्यविवर्जितः ॥
तन्तुपुञ्जरमध्यस्थो यथा भ्रमति सूतिकः । जीवस्तु मूलचक्रेऽस्मिन् अधःप्राणश्वरत्यसौ ॥
प्राणारूढो भवेज्जीवः सर्वदेहेषु सर्वदा । तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥
मेरुदण्डबहिः पार्श्वे चन्द्रसूर्यात्मिके शुभे । इड़ा च पिङ्गला चैव वामदक्षिणतः स्थिते ॥
कन्दमध्याद्द्वयोर्मध्ये सुषुम्ना सुप्रतिष्ठिता । पृष्ठमध्यगता सा तु सह मूर्ध्नि व्यवस्थिता ॥
ऋज्वीभूता तु वज्राख्या ज्वलन्ती विश्वधारिणी । मुक्तिमार्गे सदा गुप्ता मेढ्रमूर्ध्नि व्यवस्थिता ॥
तस्याश्चान्तर्गता नाड़ी चित्राख्या योगिवल्लभा । पञ्चवर्णोज्ज्वला देवी पञ्चभूतनिवासिनी ॥
पञ्चदेवैर्युता देवी पञ्चतत्त्वप्रकाशिनी । पूरयित्वा तु विच्छिन्ना चित्रा सा ग्रन्थिरूपिणी ॥
तयैव ग्रथितं सर्वं मूलादि पद्मपञ्चकम् । तस्या मध्ये ब्रह्मनाड़ी मृणालतन्तुरूपिणी ॥
ब्रह्मरन्ध्रन्तु तन्मध्ये हरवक्त्रं सदाशिवम् । गुदमेढ्रान्तरे ग्रन्थि सुषुम्ना सन्धिरुत्तमा ॥
आधारे च गुदस्थाने पङ्कजञ्च चतुर्दलम् । सुवर्णाभं वादिसान्तं हेमवर्णं सुशोभनम् ॥
लिकारूपकं पद्मं पृथिवीपद्मिनीयुतम् । तरुणारुणसङ्काशां शूलखट्वाङ्गकौ ततः ॥
वामे खड्गं सुराकुम्भं दधानामुग्रदंष्ट्रिणीम् । दुग्धाभां संस्थितां ध्यायेत् डाकिनीं लोचनत्रयाम् ॥
कर्णिकायां स्थिता योनिः कामाख्या योगिवल्लभा । अपानाख्यं हि कन्दर्पं आधारे च त्रिकोणके ॥
स्वयम्भुलिङ्गन्तन्मध्ये पश्चिमाभिमुखं भवेत् । बन्धूकपुष्पसङ्काशं सूर्यकोटिसमप्रभम् ॥
भ्रमन्तं योनिमध्ये च शिशिरं शशभृत्समम् । तस्योर्ध्वे कुण्डली शक्तिरष्टधा कुण्डलाकृतिः ॥
अष्टप्रकृतिरूपा सा नाभेस्तिर्यगधो गता । अधोवक्त्रस्थिता देवी ऊर्ध्वपुच्छाऽतिशोभना ॥
अकारादिक्षकारान्ता कुण्डलीत्यभिधीयते । सा च विद्युल्लताकारा मृणालतन्तुसन्निभा ॥
परिस्फुरति सर्वात्मा सुप्ताहिसदृशाकृतिः । ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ॥
येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् । मुखेन श्वासं प्रविष्टा ब्रह्मरन्ध्रं मुखन्तदा ॥
मस्तके मणिवद्भिन्नस्वयम्भुलिङ्गवेष्टिनी । नान्यः पन्था द्वितीयोऽस्ति शरीरे परमस्य च ॥

मूलाधारे कामरूपं पीठं परमदुर्लभम् । अधोवक्त्राणि पद्मानि मूलादीनि यथाक्रमात् ॥
गुदात्तु द्व्यङ्गुलादूर्ध्वमधो मेढ्रात्तु द्व्यङ्गुलात् । चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत् ॥
एकाङ्गुलन्तु तन्मध्ये चतुरस्रं त्रिकोणकम् । एवं ध्यात्वा च वीरेन्द्रः स्थिरचित्तः स्थिरेन्द्रियः ॥
आकुञ्चयेद् गुदमूलं चिबुकं हृदयोपरि । नव द्वाराणि संयम्य कुक्षिमापूर्य वायुना ॥
शब्दबीजेन तां देवीं दृढं विभ्रामयेत्ततः । वायुना भिद्य तद्वक्त्रं ऊर्ध्ववक्त्रन्तु कारयेत् ॥
उद्घाटयेत् कवाटं तु यथा कुञ्चिकया दृढम् । उल्लासोज्ज्वलकारस्य शिखायाति समुज्ज्वला ॥
मूलचक्रं ततो भित्त्वा ब्रह्मद्वारं विभेदयेत् । ऊर्ध्वं भित्त्वा तु लिङ्गं वै इतरं पुष्करं ततः ॥

मूलाधारे सन्ततं ध्यानयोगात् स्तम्भक्षोभावुत्प्लुतिर्दार्दुरीव ।
भूमित्यागः खेचरत्वं क्रमेण नृणामेते षड्गुणाः सम्भवन्ति ॥
कान्तिप्रकर्षो वपुषोऽपि नादव्यक्तिः प्रदीप्तिः जठरानलस्य ।
लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्यमदीनता च ॥

मूलादिपद्मषट्कञ्च कलिकासदृशं शुभम् । स्वाधिष्ठानं महापद्मं लिङ्गमूले रसच्छदम् ॥
बन्धूक पुष्पसङ्काशं सदा जलसमन्वितम् । सिन्दूरप्रस्फुरद्वर्णैर्वादिलान्तैश्च मण्डितम् ॥
शूलं वज्रं तथा पद्मं डमरुं करपङ्कजैः । दधानां श्यामवर्णाञ्च राकिणीं त्रितयान्विताम् ॥
रक्तधात्वेकनाथां तां चिन्तयेत्तत्र साधकः । विचिन्त्य स्थिरचित्तेन अधिष्ठानं प्रभेदयेत् ॥

इह वेत्ति निधाय मानसं स्वं विविधश्चाश्रुतशास्त्रजालमुच्चैः ।
अवधूतजरामयः स मर्त्यः सुचिरं जीवति वीतमृत्युभीतिः ॥
वपुषोऽशुचिता जनस्य शश्वत् परमां शुद्धिमिहातनोति पुंसाम् ।
शरदम्बुजपेलवस्य देहे दृढरुद्धो घनताञ्च शीतरश्मिः ॥

तदूर्ध्वे सव्यदक्षाभ्यां चिन्तयेत् साधकोत्तमः । पद्ममध्ये स्थितं शुद्धं विद्युताभं त्रिकोणकम् ॥
तन्मध्ये चिन्तयेद्देवं ब्रह्माणं हंसवाहनम् । रक्तवर्णं चतुर्वक्त्रं दधतञ्च त्रिलोचनम् ॥
चिन्तयेत् कूर्चपद्मे च अक्षमालां कमण्डलुम् । ब्रह्मसत्त्वाक्षमोङ्कारं स्थितं नाभेरधः सदा ॥
नाभौ नीलनिभं पद्मं मणिपूरं दशास्रकम् । विद्युत्पुञ्जस्फुरद्वर्णैर्डादिफान्तैश्च मण्डितम् ॥
वह्निना संयुतं तत्र लाकिनीं मांसधातुगाम् । मानसं संविभाव्याथ भेदयेत्तदनन्तरम् ॥

स्थानेऽस्मिन्निहितात्मनः सुकृतिनः पातालसिद्धिं परां
खड्गस्याप्रतिमस्य साधनमपि स्यादीप्सितञ्च क्षितौ ।
रूपं भूमिविसर्जनं परपुरे शक्तः प्रवेष्टुं जरा-
हानिश्चाखिलदुःखरोगशमनं कालस्य वा वञ्चनम् ॥

अनाहतं हृदि ध्यायेत् पिङ्गाभं द्वादशच्छदम् । द्रुतस्वर्णप्रभावर्णैः कादिठान्तैश्च मण्डितम् ॥

मेदःस्थां काकिनीं तत्र पीताभां मत्तरूपिणीम् । अभयं डमरुं शूलं पाशञ्च करपङ्कजैः ॥
दधानां चारुरूपाञ्च नानाभरणभूषिताम् । तत्रैवाङ्गुष्ठमात्मानं प्रदीपकलिकोपमम् ॥
तत्र सञ्चिन्तयेद्देवं नारायणं निरञ्जनम् । शुद्धस्फटिकसङ्काशं वाणीलक्ष्मीविभूषितम् ॥
वैनतेयसमारूढं शङ्खचक्रगदाधरम् । पीताम्बरधरं शान्तं वनमालाविभूषितम् ॥
पूर्णशैलं महापीठं तत्रैव परिचिन्तयेत् । प्रभेदयेत्ततः पश्चात् साधकः स्थिरमानसः ॥

एतस्मिन् सततं निविष्टमनसः स्थाने विमान स्थिताः
क्षुभ्यन्त्यद्भुतरूपकान्तिकलिता दिव्यस्त्रियो योगिनः ।
ज्ञानञ्चाप्रतिमं त्रिकालविषयं क्षोभः पुरस्य श्रुति-
दूराद्देव च दर्शनञ्च खगतिः स्याद्‌योगिनीमेलनम् ॥

विशुद्धं षोड़शारञ्च धूम्राभं कण्ठदेशके । तदन्ते व्योमबीजञ्च शुक्लं हैमगजस्थितम् ॥
तरुणारुणसङ्काशैः स्वरैश्च परिमण्डितम् । आकाशसहितं पद्मं शाकिनीं परिचिन्तयेत् ॥
अस्थिसंस्थां चतुर्बाहुं पञ्चवक्त्रां त्रिलोचनाम् । पाशाङ्कुशौ पुस्तकञ्च ज्ञानमुद्राञ्च धारिणीम् ॥
दंष्ट्रिणीमुग्ररूपाञ्च सदा मधुमदाकुलाम् । अर्धनारीश्वरं देवं नानामणिविभूषितम् ॥
चन्द्रचूड़ं त्रिनयनं वराभयकरं शुभम् । ध्यात्वैवं चक्रराजन्तु भेदयेत् साधकोत्तमः ॥

स्थानेऽत्र संसक्तमना मनुष्यस्त्रिकालदर्शी विगताधिरोगः ।
जित्वा जरामञ्जननीलकेशः क्षितौ चिरं जीवति वीतमृत्युः ॥
इह स्थाने चित्तं सततमवधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरो नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥

द्विदलं हक्षवर्णाभ्यां शुभाभ्यां परिमण्डितम् । विद्युत्कोटिप्रभं चक्रं भ्रुवोरूर्ध्वे मनोन्मनी ॥
विन्दुयुक्तं सर्ववर्णं सर्वपद्मेषु चिन्तयेत् । योनिमध्ये स्थितं लिङ्गमितरं तरुणारुणम् ॥
जालन्धरं महापीठं हाकिनीं तत्र चिन्तयेत् । विन्दुस्थां हाकिनीं शुक्रमेदोमज्जास्वरूपिणीम् ॥
अक्षमालाञ्च डमरुं कपालं पुस्तकं तथा । चापं मुद्रां दधानाञ्च शुक्लां नेत्रत्रयान्विताम्
पद्ममध्येऽन्तरात्मानं प्रभारूपं हि कारणम् । ओङ्कारज्योतिषं कल्पप्रदीपाभं जगन्मयम् ॥
बालसूर्यप्रतीकाशं सदा विन्दुमदक्षरम् । ततः संक्षोभणद्वारे ध्यायेत् पद्मं सुशोभनम् ॥

ध्यानयोगनिरतस्य जायते पूर्वजन्मकृतकर्मणां स्मृतिः ।
तत्र विन्दुनिलये च दूरतो दर्शनश्रवणयोः समर्थता ॥
इह सन्निहितस्वचित्तवृत्तिः प्रतिमायाः प्रतिजल्पनं करोति ।
गमनञ्च पुरे परेषां पुनरुत्थानमप्यहो मृतस्य ॥

निरालम्बां मुद्रां निजगुरुमुखेनैव विदिता
मिह स्थाने कृत्वा स्थिरनिशितधीः साधकवरः ।
सदाऽभ्यासात् पश्यत्यमरनिलयानन्तरखिला-
मुडुश्रेणीं विष्णोरपि पदमुडूनामपि एतिम् ॥
भेदान्ते पद्मषट्कं च प्रस्फुरच्चोर्ध्ववक्त्रकम् । भवत्येव न सन्देहोऽप्यथ स्यात् साधकस्य च ॥
तदूर्ध्वे चार्धचन्द्रे च भानुमण्डलमुत्तमम् । मकारविन्दुरूपेण तदूर्ध्वे चन्द्रमण्डलम् ॥
विन्दोरुपरि नादं हि शुद्धस्फटिकसन्निभम् । चेतसा संप्रपश्यन्ति नादान्ते वृषभध्वजम् ॥
शुद्धस्फटिकसङ्काशं कपर्दशशिभूषणम् । व्याघ्राम्बरन्तु तन्मध्ये अधोमुखं सशक्तिकम् ॥
स्थाने ह्यत्र परीतञ्च वरदाभयपाणिकम् । प्रसन्नवदनं शान्तं सर्पयज्ञोपवीतिनम् ॥
नादोपरि महादेवं पश्यन्ति ज्ञानचक्षुषा । नान्यत् पश्यन्ति तत्रैव अन्तरं वृषभध्वजम् ॥
पुरत्रयविनिष्क्रान्तो यत्र वायुः प्रलीयते । तत्र संस्थं मनः कृत्वा तद्ध्यानमीश्वरं विदुः ॥
विभाव्य साधकश्रेष्ठो भेदयेत्तदनन्तरम् । शङ्खिनीनालं संस्थाप्य व्याप्तिशून्यं विभर्त्ति यः ॥
अमृतोदधिसङ्काशं शतयोजनविस्तृतम् । चन्दनोद्यानमध्यस्थं वेदिकान्तु तदन्तरे ॥
तन्मध्ये स्फटिकं ध्यायेत् पश्चिमाननमम्बुजम् । स्रवन्तममृतं नित्यं देव्यङ्गे कमलान्तरे ॥
सहस्रारपद्मं विसर्गादधस्तादधोवक्त्रमारक्तकिञ्जल्कपुञ्जम् ।
कुरङ्गेण हीनस्त्रिभङ्गस्तदन्तः स्फुरद्रश्मिजालः सुधांशुः समास्ते ॥
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मं यदाधारभूतं सुषुम्णाख्यनाड्याः ।
तदेतत् पदं दिव्यमत्यन्तगुह्यं सुरैरप्यगम्यं सुगोप्यं सुयत्नात् ॥
एतत् कैलाससंज्ञं परमकुलपदं विन्दुरूपी स्वरूपी
यत्रास्ते देवदेवो भवभयतिमिरध्वंसहंसो महेशः ।
भूतानामादिदेवो रसविसरसितां सन्ततामन्तरङ्गे
सौधीं धारां विमुञ्चन्नभिमतफलदो योगिनां योगगम्यः ॥
स्थानस्यास्य ज्ञानमात्रेण पुंसां संसारेऽस्मिन् सम्भवो नैव भूयः ।
भूतग्रामं सन्ततन्यासयोगात् कर्तुं हर्तुं स्याच्च शक्तिः समग्रा ॥
स्थाने परे हंसनिवासभूते कैलासनाम्नीह विधाय चेतः ।
योगी गतव्याधिरधःकृताधिवाधश्चिरं जीवति मृत्युमुक्तः ॥
स्थानेऽस्मिन् क्षयवृद्धिभावरहिता नित्योदिताऽधोमुखी
बालादित्यनिभप्रभाशशभृतः साऽस्ते कला षोड़शी ।
बालाग्रस्य विखण्डितस्य शतधा चैकेन भागेन या
सूक्ष्मत्वात् सदृशी निरन्तरगलत्पीयूषधाराधरा ॥

एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा
निर्वाणाख्यकलाऽर्धचन्द्रकुटिला सा षोड़शान्तर्गता।
बालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या
सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा॥
निर्वाणाख्यकलापदोपरिगता निर्वाणशक्तिः परा
कोट्यादित्यसमप्रभाऽतिगहना बालाग्रभागस्य या।
कोट्यंशेन समा समस्तजननी नित्योदिता निर्मला
नित्यानन्दपदस्थलोरु विगलद्धारा निरालम्बना॥
एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं
शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम्।
तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः
केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम्॥
आरोप्याऽऽरोप्य शक्तिं कमलजनिलयादात्मना साकमेषु
स्थानेष्वाज्ञावसानेष्ववहितहृदयश्चिन्तयित्वा क्रमेण।
नीत्वा नादावसानं खगत कुलमहापद्मसद्मान्तरस्थां
ध्यायेच्चैतन्यरूपामभिमतफलसंप्राप्तये शक्तिमाद्याम्॥
साक्षाल्लाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसां
पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य।
चक्रे चक्रे क्रमेणामृतरसविसरैस्तर्पयेत् देवतास्ता
हाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीन्ताम्॥

कुण्डली कुण्डलाकारा नक्रीभूता निवासिनी। इड़ा च पिङ्गला चैव सुषुम्नानिलयं व्रजेत्॥
शक्तिं भैरवसंयोगादमृतानन्दमानयेत्। चन्द्रमार्गेण वायुञ्च पिबेत्तञ्च शनैः शनैः॥
कुम्भकञ्च यथाशक्त्या सूर्यमार्गेण रेचयेत्। सूर्यमार्गे पिबेद्वायुं चन्द्रमार्गेण रेचयेत्॥

शून्यञ्च प्रतिबिम्बचन्द्रसदृशं सूक्ष्मातिसूक्ष्मं परं
सर्वं व्याप्य तमोमयं जगति सद्धामप्रकाशं परम्।
दृश्यादृश्यविनाशभेदसकलं ज्योतिर्मयं सर्वतो
ध्यात्वा तच्च पदन्तु साधकवरैः दूरीकृतश्चान्तकः॥

एवमभ्यस्यमानस्य अहन्यहनि निश्चितम्। जरामरणदुःखाद्यैर्मुच्यते भवसागरात्॥
चतुर्विधा तु या सृष्टिर्यस्यां योनौ प्रजायते। पुनः प्रलीयते यस्यां कालाग्न्यादिशिवान्तकम्॥

योनिमुद्रा परा ह्येषा बन्धस्तस्याः प्रकीर्त्तितः। तस्यास्तु बन्धमात्रेण तन्नास्ति यन्न साधयेत् ॥
अन्यथा जप्यते यस्तु अन्यथा कुरुते तु यः। नासौ तत्फलपात्रञ्च सत्यं सत्यं न संशयः ॥
छिन्ना वन्धाश्च ये मन्त्राः कीलिताः स्तम्भिताश्च ये। दग्धाः सन्त्रासिता हीना मलिनाश्च तिरस्कृताः॥
भेदिता भ्रमसंयुक्ताः सुप्ता सम्मूर्च्छिताश्च ये। वृद्धा बालास्तथा प्रौढ़ास्तथा यौवनगर्व्विताः ॥
अरिपक्षे स्थिता ये च निर्वीर्याः सत्त्ववर्जिताः। अंशकेन विहीनाश्च खण्डशः शतधा कृताः ॥
विधिनानेन संयुक्ताः प्रभवन्त्यचिरेण तु। सिद्धिमोक्षप्रदाः सर्वे साधकेन नियोजिताः ॥
यद्यदुच्चरते मन्त्री वर्णरूपं शुभाशुभम्। तत्तत् सिध्यत्यसन्देहो योनिमुद्रानिबन्धनात् ॥
दीक्षयित्वा विधानेन अभिषिच्य सहस्रधा। ततोऽधिकारी भवति तन्त्रेऽस्मिन् साधकोत्तमः ॥
ब्रह्महत्यासहस्राणि त्रैलोक्यमपि घातयेत्। नासौ लिप्यति पापेन योनिमुद्रानिबन्धनात् ॥
तस्मादभ्यसनं नित्यं कर्त्तव्यं पुण्यकाङ्क्षिभिः। अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात् ॥
सम्वित्तिं लभतेऽभ्यासात् योगोऽभ्यासात् प्रवर्तते। मन्त्राणां सिद्धिरभ्यासात् अभ्यासाद्वायुसाधनम् ॥
कालवञ्चनमभ्यासात्तथा मृत्युञ्जयो भवेत्। एतद्भेदं विजानाति स याति परमं पदम् ॥
तदष्टधा तु जीवोऽसौ बहिर्याति दिने दिने। दिनेशाङ्गुलिमानेन तदर्धञ्चोपवासतः ॥
त्रिगुणं रतिकाले च द्विगुणं भोजनाद्बहिः। अत ऊर्ध्वं वहेद्वायुस्त्रिगुणं यदि दैवतम् ॥
न्यूनं धत्ते ततः प्राणः शरीरं परिमुञ्चति। शरीरसमतां नीत्वा न्यूनं वा साधकोत्तमः ॥
कुम्भयित्वा अधोवायुं कुण्डलीमुखवर्त्मनि। योजयित्वा ततो जीवं कुण्डल्या सहितं सुधीः ॥
गमागमं कारयित्वा सिद्धो भवति नापरः। पीयते खाद्यते यत्तु तत्सर्वं कुण्डलीमुखे ॥
हुत्वा सिद्धिमवाप्नोति न च बन्धेन बाध्यते। भिक्षा कार्या न च स्वार्थं कुण्डल्याः प्रकृतेः पुनः ॥
रे मातर्देहि मे भिक्षां कुण्डलीं तर्पयाम्यहम्। अवधूताश्रमे स्थित्वा भैरवानन्दतत्परः ॥
भैरवोऽहं न चान्योऽस्मि न चान्यो मत्परः क्वचित्। तन्त्रमन्त्रार्चनं सर्वं मयि जातं न चान्यथा ॥
शिवोऽहं भैरवानन्दो मत्तोऽहं कुलनायकः। रक्तमाल्याम्बरधरो हेतुयुक्तः सदा भवेत् ॥
एवं भिक्षां व्रजन् भिक्षभैरवानन्दतत्परः। येन केनापि वेशेन येन केनाप्यलक्षितः ॥
यत्र कुत्राश्रमे तिष्ठन् कुलयोगीश्वरः सदा। उन्मत्तमूकजड़वत् विरले लोकमध्यगे ॥
क्वचिच्छिष्टः क्वचिद्भ्रष्टः क्वचिद्भूतपिशाचवत्। नानावेशधरो योगी विचरेत्तु महीतले ॥
सर्वस्पर्शो यथा वायुर्यथाकाशश्च सर्वगः। सर्वभक्षो यथा वह्निस्तथा योगी सदा शुचिः ॥
तथा म्लेच्छगृहान्नादि योगीहस्तगतं शुचि। क्षीयते न च पापेन बध्यते न च जन्मना ॥
यद्वन्मन्त्रबलोपेतः क्रीड़न् सर्पैर्न दंश्यते। तथा ज्ञानपरो योगी क्रीडन्निन्द्रियपन्नगैः ॥
पूजयन्ति महादेवीं कुलाङ्गकुट्टिमान्ततः। गन्धं पुष्पञ्च ताम्बूलं नैवेद्यं यत्र यद्भवेत् ॥
मनसा तत् समुत्सृज्य बाह्यतः कुलवारिणा। आत्मन्येव समायोज्य देवीरूपकुलेश्वरः ॥
न पूजा नापि तन्नाम न निषेधो न वा विधिः। पूर्णोऽहं भैरवश्चाहं नित्यानन्दोऽहमव्ययः ॥

निरञ्जनस्वरूपोऽहं निर्विकल्पो ह्यहं प्रभुः । सर्वशास्त्राभियुक्तोऽहं सर्वमन्त्रार्थपारगः ॥
असत्परतरो देशे न जातो न जनिष्यति । आनन्दरूपवान् भूत्वा सर्वेषां प्रियकारकः ॥

न योगी न भोगी न वात्मा न काङ्क्षी न वीरो न धीरो न वा साधकेन्द्रः ।
सदानन्दपूर्णो धरण्यां विवेकी चिराज्जातधूतो द्वितीयो महेशः ॥ १८५
श्रुतौ कुण्डलेऽस्रग् गले मुण्डमाला करे पानपात्रं मुखे हन्त हाला ।
परित्यक्तकर्मा लयन्यस्तधर्मा विरक्तोऽवधूतो द्वितीयो महेशः ॥

वामे रामा रमणकुशला दक्षिणे पानपात्रं
मध्ये न्यस्तं मरीचसहितं शूकरस्योष्ण मांसम् ।
स्कन्धे वीणा ललितसुभगा सद्गुरूनां प्रपञ्चः १९०
कौलो धर्म्मः परमगहनो योगिनामप्यगम्यः ॥

इति ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये एकविंशोल्लासः समाप्तः ॥ २१

॥ समाप्तोऽयं कौलावलीनिर्णयः ॥

---

